श्रीगणेशायनमः  ब्रह्माजशंकररवींदुकुजज्ञजीवशुक्रार्कपुत्रगणनाथगुरून्प्रणम्य  यःसंग्रहोऽर्कवरलाभविवृद्धबुद्धेरावंतिकस्यतमहंविवृणोमिकृत्स्नं १
यच्छास्त्रंसवितानकारविपुलैःस्कंधैस्त्रिभिर्ज्योतिषंतस्योच्छित्तिभयात्पुनःकलियुगेसंसृत्ययोभूतलं  भूयःस्वल्पतरंवराहमिहिरव्याजेनसर्वंव्यधादित्थंयं
प्रवदंतिमोक्षकुशलास्तस्मैनमोभास्वते २  वराहमिहिरोदधौसुबहुभेदतोयाकुलेग्रहर्क्षगणयादसिप्रचुरयोगरत्नोज्ज्वले  भ्रमंतिपरितोयतोलघुधियो
ऽर्थलुब्धास्ततः करोमिविवृतिप्लवंनिजधियाहमत्रोत्पलः ३  इहशास्त्रेकानिसंबंधाभिधेयप्रयोजनानिभवंतीत्युच्यते  वाच्यवाचकलक्षणःसंबंधः वाच्योऽ
र्थोवाचकःशब्दः अथवाउपायोपेयलक्षणःसंबंधः उपायस्त्विदंशास्त्रमुपेयोयद्विज्ञानम् अथवा आब्रह्मादिविनिःसृतमिदंवेदांगमितिसंबंधः राशिस्वरूप
होराद्रेष्काणनवांशकद्वादशभागत्रिंशद्भागपरिज्ञानम् ग्रहस्वरूपम् ग्रहराशिबलाबलम् वियोनिजन्माधानपरिज्ञानम् जन्मकालविस्थापनप्रभावकथ
नारिष्टायुर्दायदशांतर्दशाष्टकवर्गकर्माजीवराजयोगनाभसयोगचंद्रयोगद्विग्रहादियोगप्रव्रज्याराशिशीलदृष्टिफलभावफलाश्रयप्रकीर्णानिष्टयोगस्त्रीजा
तकनिर्याणनष्टजातकद्रेष्काणगुणस्वरूपमभिधेयम्  लोकानांप्राक्कर्मविपाकव्यंजकत्वंप्रयोजनम्  सत्पात्रशुभाशुभकथनात् इहलोकपरलोकसिद्धिरि
तिप्रयोजनंकिमेभिरुक्तैरित्यत्रोच्यते  यस्मान्नृणांश्रोतृणांसंबंधाभिधेयप्रयोजनकथनाच्छास्त्रविषयेश्रद्धाजायतइति तथाचोक्तम्  सिद्धिःश्रोतृप्रवृ
त्तीनांसंबंधकथनाद्यतः  तस्मात्सर्वेषुशास्त्रेषुसंबंधःपूर्वमुच्यते  किमेवात्राभिधेयंस्यादितिपृष्टस्तुकेनचित्  यदिनप्रोच्यतेतस्मैफलशून्यंतुतद्भवेत्
सर्वस्यैवहिशास्त्रस्यकर्मणोवापिकस्यचित्  यावत्प्रयोजनंनोक्तंतावत्केननगृह्यतइति  कस्यास्मिन्शास्त्रेऽधिकारइत्यत्रोच्यते  द्विजस्यैवयतस्तेनषड
गोवेदोऽध्येतव्योज्ञातव्यश्च  कान्यंगानीत्युच्यते  शिक्षाकल्पोव्याकरणंनिरुक्तंज्योतिषांगतिः  छंदसांलक्षणंचैवषडंगोवेदउच्यतइति  तथाचोक्तं  वे
दाहियज्ञार्थमभिप्रवृत्ताःकालानुपूर्वाविहिताश्चयज्ञाः  तस्मादिदंकालविधानशास्त्रंयोज्योतिषंवेदसवेदयज्ञानिति  सतामयमाचारः यत्शास्त्रप्रारंभे

ष्वभिमतदेवतायाः प्रसादात्तत्तन्नमस्कारेणतत्स्तुत्यावातद्भक्तिविशेषेणवाभिप्रेतार्थसिद्धिंवाञ्छति तदयमप्यवन्तिकाचार्यः श्रीवराहमिहिरोनामादिद्नो।
कांब्धवरप्रसादोज्योतिःशास्त्रसंग्रहकृद्गणितस्कन्धादनन्तरंहोरास्कन्धंचिकीर्षुरशेषविघ्नोपशान्त्यर्थंभगवतः सूर्यादात्मगामिनीवाक्सिद्धिंशार्दूलविक्री
डितेनाह मूर्तित्वेइति सविताभगवानादित्यः नः अस्मभ्यंवाचंगिरंददातुप्रयच्छतु कोसौरविः अनेककिरणः नएकः किरणोयस्यसः अनेककिरणः
प्रभूतरश्मिः सहस्ररश्मिरित्यर्थः त्रैलोक्यदीपः त्रयोलोकास्त्रैलोक्यं भूर्भुवःस्वराख्यंतस्यदीपः प्रकाश्यमानत्वात् तथामूर्तित्वेपरिकल्पितः शशभृत
शशःप्राणिविशेषंबिभर्तिधारयतीतिशशभृच्चन्द्रमास्तस्यमूर्तित्वेनशरीरत्वेनपरिकल्पितः पर्यवस्थापितः यतोजलमयश्चन्द्रः प्रकाशशून्यःप्रोक्तः तस्मि
न्तरणिकिरणप्रतिफलनादितरस्यज्योत्स्नाप्रसरः विस्तरः यस्मात् तदुक्तं सलिलमयेशशिनिरवेर्दीधितयोमूर्च्छितास्तमोनैशम् क्षपयन्तिदर्पणोदर
निहिताइवमन्दिरस्यान्तरमिति तथाचवेदे सुषुम्णः सूर्यरश्मिश्चन्द्रमाइति अथवा शशिभृतइतिपाठः शशिभृतोमहादेवस्यमूर्तित्वेपरिकल्पितः य
तोसौभगवानष्टमूर्तिः क्षितिजलपवनहुताशनाकाशयजमानसोमसूर्याख्याइति अष्टमूर्तिर्यतस्तस्य माहेश्वरीमूर्तिः सूर्यइत्यर्थः शशिभृतइति
माधुपाठः तथावर्त्माऽपुनर्जन्मनांपुनर्जन्मनविद्यतेयेषांते अपुनर्जन्मानः मुक्तास्तेषांवर्त्मपार्गः मोक्षद्वारमित्यर्थः यतोद्विविधोमार्गः देवयानाख्यः
पितृयानाख्यश्च तत्रपितृयानमार्गद्वारभूतश्चन्द्रमाः येनस्वर्गगामिनः स्वर्गंगच्छन्ति मोक्षद्वारंसूर्यः यतः सूर्यमण्डलंभित्वामोक्षभाजोगच्छन्ति तथाचा
हभगवान्व्यासः स्वर्गद्वारंप्रजाद्वारंमोक्षद्वारंत्रिविष्टपमिति आत्मेत्यात्मविदामिति आत्मानंविदन्तीत्यात्मविदोयोगिनस्तेषांसएवात्माचित्तस्तते-
जोरूपीप्राणरूपेणहृदयान्तरेस्थितः तथाचश्रुतिः सूर्यआत्माजगतस्तस्थुषश्चेति जगतोजङ्गमस्यतस्थुषः स्थावरस्यसूर्यएवात्मा क्रतुश्चय
जतांयजमानानांसएवक्रतुर्यज्ञः यदुक्तं अग्नौप्रास्ताहुतिः सम्यगादित्यमुपतिष्ठति आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततः प्रजाइति भर्तामरज्यो

तिषां अमरादेवा ज्योतींषिग्रहनक्षत्रादीनितेषांभर्ताप्रभु प्रधानइत्यर्थः यत सर्वेदेवास्तस्योपस्था नंकुर्वंति ग्रहनक्षत्राणांचतद्दर्शनोदयास्तमया-
यदुक्तम् तेजसांगोलकः सूर्योग्रहर्क्षाण्यंबुगोलकाः प्रभावंतोहिदृश्यंतेसूर्यरश्मिप्रदीपिताइति एवंगुणाधिक्यादमरज्योतिषांप्रभुः लोकानांप्रलयो
द्भवस्थितिविभुरिति लोकाःभूर्लोकादयस्तेषांप्रलयेविनाशे उद्भवेउत्पत्तौस्थितौपालनेप्रभुर्विष्णुः भगवतः अतीतवर्तमानभाविकालत्रयपरिच्छे
दचिन्हभूतत्वात् चशब्दोत्रावधारणे अनेकधाय श्रुतौवेदेयोऽनेकधानेकप्रकारैःपठ्यते तथाचोक्तम् इंद्रंमित्रंवरुणमग्निमाहुरथोदिव्यःससुप
र्णोगरुत्मान् एकंसद्विप्राबहुधावदंत्यग्निंयमंमातरिश्वानमाहुरित्यादि १ अधुनास्यशास्त्रस्यपरप्रणीतत्वादानर्थक्यंपरिजिहीर्षुस्तथान्यशा

श्रीगणेशायनमः मूर्तित्वेपरिकल्पितःशशभृतोवर्त्मापुनर्जन्मनामात्मेत्यात्मविदांक्रतुश्चयजतांभर्तामरज्योतिषां
लोकानांप्रलयोद्भवस्थितिविभुश्चानेकधायःश्रुतोवाचंनःसददात्वनेककिरणस्त्रैलोक्यदीपोरविः १ भूयोभिःप
टुबुद्धिभिःपटुधियांहोराफलज्ञप्तयेशब्दन्यायसमन्वितेषुबहुशःशास्त्रेषुदृष्टेष्वपि होरातंत्रमहार्णवप्रतरणेभग्नो
द्यमानामहंस्वल्पंवृत्तविचित्रमर्थबहुलंशास्त्रप्लवंप्रारभे २

स्त्रेष्वस्यगुणवत्त्वंप्रदर्शयन्शार्दूलविक्रीडितेनाह भूयोभिरि-
ति होरायास्तंत्रंहोरातंत्रं अथवाहोराएवतंत्रंहोरातंत्रंतदेवमहार्णवोदुःपारत्वात् तंत्र्यतितार्यतेयेनार्थस्तत्तंत्रम् अहंहोरातंत्रमहार्णवप्रतरणेभग्नो
द्यमानाशास्त्रप्लवंप्रारभे होरातंत्रमेवमहार्णवोमहासमुद्रः तत्प्रतरणेप्रतरणविषयेभग्नोद्यमानांभग्नोत्साहानांशास्त्रप्लवंप्रारभेकरोमि शास्त्रमेव-
प्लव शास्त्रप्लवः नशास्त्रप्लवंयथाप्लवस्तितीर्षूणांपरपारगमनमाशुसंपादयति तथेदमपिहोरातंत्रमहार्णवप्रतरणेभग्नोद्यमानामित्यस्यपूर्वेणसाध

र्थम् प्रस्तुतहोरातन्त्रपदार्थविस्तरेणाप्रबोधयतामित्यत आह भूयोभिरिति भूयोभिर्बहुतरैः किंभूतैः पटुबुद्धिभिः पटवः प्रदीप्ता बुद्धिर्येषां ते पटुबुद्धयस्तत्प्र
माणैः तैः शास्त्रेषु दृष्टेषु चिरविस्तारेष्वपि सत्सु किंभूतेषु शब्दन्यायसमन्वितेषु शब्दानां न्यायः शब्दन्यायः मीमांसा तदुक्तम् शब्दानामपेक्षा शक्तिस्त
त्कार्यपुरुषाभ्यषति अथवा शब्दश्च न्यायश्च शब्दन्यायौ शब्दो व्याकरणं न्यायो मीमांसा तौ समन्वितेषु संयुक्तेषु किमेकवारदृष्टेषु नेत्याह बहुश इति
बहूनां पर्याये बहुशः व्याससमासैर्बहुप्रकारैर्विरचितेष्वित्यर्थः किमर्थं दृष्टेषु पटुधियां होराफलज्ञप्तये चतुरबुद्धीनां होराफलस्यावबोधनाय प्राक्तनक
र्मविपाको होरा होरायाः फलं होराफलं तस्य ज्ञप्तिः तत्फलशुभाशुभतज्ज्ञानाय किंभूतम् शास्त्रप्लवम् स्वल्पं लघुप्रयुक्तविचित्रम् वृत्तैः शार्दूलवि
क्रीडितप्रभृतिभिर्विचित्रं रम्यं तस्मात् स्वल्पार्थतैवास्य गुणवत्त्वम् यतस्तेषामत्राप्युद्यमभङ्गो न भवति स्वल्पमित्यनेन ग्रहणधारणे सुखता प्रद
र्शयति तथाच इति षेयकरो वीरसेनः समासोक्तस्य शास्त्रस्य सुखग्रहणधारणे वृत्तविचित्रमित्यनेन सूक्ततां प्रदर्शयति ननु स्वल्पशास्त्रस्य
स्वल्पार्थतैव भविष्यतीत्याह अर्थबहुलम् बह्वभिधेयम् अत एव पूर्वविरचितशास्त्रेभ्योऽस्य गौरवम् अन्यथा हि शास्त्रसम्भवात् पुनरुक्तता दोषः
स्यात् एतदुक्तं भवति प्रागभिहितशास्त्राण्यतिविस्तृतान्यतस्तेभ्यो प्रबोधमा स्तदर्थमिदं शास्त्रमुपक्रमे ननु कदाचिदल्पमज्ञतयाऽतेऽप्रबोधया
स्तत्कुतोऽत्यर्थम् यथा पूर्वशास्त्राणां महत्त्वादप्रबोधया स्तथैवेदमल्पमित्यत इदमाह पटुधियामिति अनेनैतत्प्रतिपादितं भवति नहि तेषु
हीनत्वात्तेषु शास्त्रेषु प्रबोधमाः किं तर्हि शास्त्रदोषादन्यत्रापि तेषामुद्यमभङ्गः स्यात् प्लवमपि स्वल्पं लघु वृत्तप्रदीर्घं विचित्ररम्यमर्थबहुलं वित्त
परिपूर्णमपि धनं तितीर्षूणामतिसुखावहं भवतीति २ अधुना होराशास्त्रस्य पुरा कृतकर्मविपाकव्यञ्जकत्वं वर्णद्वयपरिहारेण शब्दव्युत्पत्ति-
प्रदर्शयन्निरुक्तमाह होरेति होरा इति शास्त्रं होरा नाम अहोरात्रविकल्पमेके वाञ्छन्ति अहश्च रात्रिश्चाहोरात्रशब्देनोच्यते तस्य विकल्पो विकल्पना

एके अन्येहोरांवान्छंतिइत्यर्थ कथमुच्यते पूर्वपर वर्णलोपात् अहोरात्रशब्दस्यपूर्वोवर्णोकारोपर वर्णश्चत्रकारस्तयोर्लोपमदर्शनंकृत्वाहोराशब्दोवशिष्य ते किमर्थंपुनरहोरात्रशब्दाद्धोराशब्दोव्युत्पाद्यतेइति अत्रोच्यते मेषादयोद्वादशलग्नराशयोहोरात्रांतर्भूताः लग्नस्यचकालवशाज्ज्ञानम् लग्नवशा च्छुभाशुभज्ञानम् अतोहोरात्राश्रयत्वात्ततएवहोराशब्दोव्युत्पाद्यते एतदेवाचार्यस्याप्यभिप्रेतम् यतः परमतमप्रतिषिद्धस्वमतमिति तथाचसा रावल्याम् आद्यंतवर्णलोपाद्धोरास्माकंभवत्यहोरात्रात् तत्प्रतिबद्धा सर्वग्रहभगणाश्चिंत्यतेयस्मात् किमस्यप्रयोजनमित्याह कर्मार्जितंपूर्व भवेसदादियत्तस्यपक्तिंसमभिव्यनक्ति पूर्वभवेप्राग्जन्मनियत्सदादिशुभमशुभंमिश्रंचकर्मार्जितंतस्यपक्तिंपाकंसम्यक् व्यनक्तिप्रकटीकरोति

होरेत्यहोरात्रविकल्पमेकेवांच्छंतिपूर्वापरवर्णलोपात् कर्मार्जितंपूर्वभवेसदादियत्तस्यपक्तिंसमभिव्यनक्ति ३

तथाचलघुजातके यदुपचितमन्यजन्मनिशुभाशुभंतस्यकर्मणःप्राप्तिं व्यंजयतिशास्त्रमेतत्तमसिद्रव्याणिदीपइवेति ननुशुभस्याशुभस्यवाव- श्यभाविनः किंव्यनक्ति उच्यते द्विविधंशुभाशुभं दृढकर्मोपार्जितमदृढकर्मोपार्जितंच तत्रदृढकर्मोपार्जितस्यदशाफलंपाकक्रमेणव्यनक्ति अ शुभंदशाफलंज्ञात्वायात्रादेः परिहारः कर्त्तव्यः शुभंज्ञात्वायात्रादेरतिशयेनदानं अदृढकर्मोपार्जितस्याष्टकवर्गेणफलव्यक्तिः तच्चाशुभंज्ञात्वाशां त्यादिभिरुपशमंनयेत् तथाचयवनेश्वरः यद्यद्विधानंनियतंप्रजानाग्रहर्क्षयोगप्रभवप्रसूतौ भाग्यानितानीत्यभिशब्दयंति वर्षानुयोगेतिदशान- राणाम् तदप्यभिज्ञैर्द्विविधंनिरुक्तंस्थिराख्यमौत्पातिकसंज्ञितंच कालक्रमाज्जातकनिश्चितंयत्क्रमोपिसर्पिस्थिरमुच्यतेतत् सप्तग्रहाणांप्र श्रितानियानिस्थानानिजन्मप्रभवानिसद्भिः तेभ्यः फलंचारग्रहक्रमस्यादयुर्यदौत्पातिकसंज्ञितंतत् अनेनास्थिरस्यशांत्यादिभिरुपशमः प्रदर्शितो

भवति उक्तंच भगवतान्यासेन विदन्याहुर्बलदेवपुरुषेणाविपश्चितेति २ अधुनाव्यवहारार्थं कालाख्यस्य पुरुषस्य मेषादिराशिपूर्वकशिरआद्यंगविभागं शार्दूलविक्रीडितेनाह कालांगानीति कालस्यांगानि कालांगानि तानि च मेषप्रभृतिराशयो नवर्क्षचरणानवभिर्ऋक्षचरणैर्नक्षत्रपादैः प्रमाणं येषां ते अश्विप्रथमा अश्विनीतः प्रभृति नवनवनक्षत्रपादा एकैकस्य प्रमाणम् मेषप्रभृतिराशयो अश्विप्रथमैर्नक्षत्रपादैर्युक्ता इत्यर्थः तथाभूता राशयो धातुरवयवाः तथा च यवनेश्वरः द्वे द्वे सपादे भवनं गतेति तथा च भगवान्गार्गिः अश्विनी भरणी मेषः कृत्तिकापादमेव च तत्पादत्रितयं ग्रस्य वृषः सोम्यर्दलं तथा सौम्यार्द्रापार्द्राः मिथुनस्त्वादित्याश्चरणत्रयम् तत्पादः पुष्यमाश्लेषा राशिः कर्कटकः स्मृतः पित्र्यभाग्यमथार्यम्णः पादः सिंहः प्रकीर्तितः त

कालांगानि वरांगमाननमुरो हृत्क्रोडवासोभृतो वस्तिर्व्यंजनमूरुजानुयुगले जंघे ततोंघ्रिद्वयम्
मेषाश्विप्रथमा नवर्क्षचरणाश्चक्रस्थिता राशयो राशिक्षेत्रगृहर्क्षभानि भवनं चैकार्थसंप्रत्ययाः ४

त्पादत्रितयं कन्या हस्तश्चित्रार्द्धमेव च तथा चित्रार्द्धं स्वाती विशाखाचरणत्रयम् तत्पादमित्रदैवत्यज्येष्ठा वृश्चिक उच्यते मूलमाप्यस्तथा धन्वी पादो विश्वेश्वरस्य च। तत्पादत्रितयं श्रवणं मकरो वासवोदलम् तद्दलं वारुणं कुंभस्तथाजाचरणत्रयम् तत्पादमेकं मीनः स्यादहिर्बुध्न्यं च रेवती चक्र स्थिता चक्रस्थिताः चक्रस्थिता राशयः अथवा चक्रसंस्थिताः अनेकसंस्थानमेषा प्रदर्शितं भवति तत्र कालाख्यस्य वरांगं शिरो मेषः आननं मुखं तद्वृषः उरो वक्षो मिथुनः तद्धृदयं कुलीरः क्रोडमुदरं सिंहः वासोभृत् कटिः कन्या वस्तिर्नाभिव्यंजनयोरंतरे तुला व्यंजनं येन पुरुषो व्यज्यते लिंगं तद्वृश्चिकः ऊरुयुगलं धन्वी जानुयुगलं मकरः जंघे कुंभः अंघ्रिद्वयं पादयुगलं मीन इति तथा च बादरायणः मेषः शिरोऽथ वदनं वृषभोऽभिधा

तुर्वृक्षोभवेन्नृमिथुनहृदयंकुलीरः सिंहस्तथोदरमथोयुवतिः कटिश्च बस्तिस्तुलाभृदथमेहनमष्टमंस्यात् धन्वीचास्योरुयुगलंमकरोजानुद्वयंभव
ति जंघाद्वितयंकुंभः पादौमत्स्यद्वयंचेति अस्यप्रयोजनम् जन्मकालेयोराशिः पापग्रहाक्रांतः सकलाख्यस्यपुरुषस्ययास्मिन्नंगेस्थितस्तत्रा
गेजातस्योपघातोवक्तव्यः यत्रसौम्यस्थितस्तत्रपुष्टिरिति तथाचसारावल्याम् कालनिरस्यवयवाः पुरुषाणांकल्पयेत्ससवकाले सदसद्ग्रह
संयोगात्पुष्टाःसोपद्रवाश्चापिइतिराशिःक्षेत्रमित्यादि एषांचप्रत्येकस्यराशिरितिसंज्ञा तस्यैवपर्यायनामानिक्षेत्रम् गृहम् ऋक्षभम् राशिश्चक्षेत्रंच
गृहंचऋक्षंचभंचतानिराशिक्षेत्रग्रहर्क्षभानि भवनंच गृहत्वाद्भवनग्रहणेसिद्धेयत्पुनर्भवनग्रहणंकृतंतत्सर्वेषांग्रहपर्यायाणांग्रहणार्थं ऋक्षत्वाद
पिभग्रहणेसिद्धेयत्पुनर्भग्रहणंतेनेतद्दर्शयति यत्रयत्रहोराशास्त्रेभग्रहणंऋक्षग्रहणंवातत्रतत्रराशेरेवग्रहणंस्यान्नतुनक्षत्रस्य एतेराश्यादयः
शब्दाएकार्थसंप्रत्ययाएकार्थाभिधायकाइत्यर्थः ४ अधुनाराशीनांस्वरूपविज्ञानंवसंततिलकेनाह मत्स्येति मीनोराशिर्मत्स्योमत्स्यद्वय
मन्योन्यंपुच्छाभिमुखंएतत्तुकुतोलभ्यते उच्यते तस्यैवोभयोदयत्वात् वक्ष्यतिच लग्नंसमेत्युभयतःपृथुरोमयुग्ममिति घटीकुंभः स्कंधा
सक्तरिक्तघटधारीपुरुषः कुंभः मिथुनोनृमिथुनराशिर्मिथुनंनृमिथुनं स्त्रीपुमांसौतन्मिथुनं सगदसवीणंपुमान्सगदः स्त्रीसवीणा चापीनरोश्व
जघनः धन्वीराशिश्चापिविद्यमानधन्वानरः अश्वजघनः अश्वस्तुरगस्तस्येव जघनंयस्यसोश्वजघनः चतुष्पादित्यर्थः मकरोमृगास्यः मकरोरा-
शिर्मकरएवसचमृगास्यः मृगमुखः तौलीत्यादि तुलाविद्यमानतुलः पुरुषः कन्याकुमारीप्लवगानौकास्थाससस्यदहना सस्यानिचदहनश्च
तौसस्यदहनौताभ्यांसहवर्ततइतिससस्यदहना शेषाराशयोमेषवृषकर्कटकसिंहवृश्चिकाः स्वनामसदृशाः स्वसंज्ञाविहिताकृतयः तद्यथामेषोमेषः
वृषोवृषभः कर्कटकः कुलीरोजलचरप्राणीसिंहः केसरी वृश्चिकोवृश्चिकएवकीटजातिः तथाचमयः छागोवृषभोवीणागदाधरंमिथुनमंभसिकुलीरः

सिंहः शैलेकन्यानौसस्यादीपसस्यकरा पुरुषस्तुलधरोवृश्चिकोयधन्वीनरोहयात्पार्धः मकरार्धमृगपूर्वेकुंभीपुरुषोभ्रपोमीनः खचराश्चसर्वे सर्वेद्वादशारा
शय स्वगृहः स्वेषुस्वेषुस्थानेषुचरंति यथास्वस्थाननिवासिनइत्यर्थः तद्यथा मेषवृषावारण्यौदिवाराचौ मिथुनोग्राम्यः कर्कटोजलचरः सिंहआरण्यचारी
कन्यादर्शितदेशविभागा तुलापण्यवीथिस्थः वृश्चिकः श्वभ्रचारी धन्वीग्राम्यः मकरः पूर्वभागेआरण्योन्योजलचरः कुंभोग्राम्यः मीनोजलचरइति तथान्यच
वनेश्वरः आद्यः स्मृतोमेषसमानमूर्तिः कालस्यपूर्वांगमितः पुराणैः सोजीविकर्षसंचरकंदरादिक्षेत्राभिधात्वाकररत्नभूमिः १ वृषाकृतिस्तुमथितोद्वितीयः
सवत्सकृषयतनविधातुः वनाद्रिसानुद्विपगोकुलानाकृषीवलानामधिवासभूमिः २ वीणागदाभृन्मिथुनस्तृतीयः प्रजापतेस्कंधभुजासदेशः भ्वर्त्तकोणाय

मत्स्योघटीनृमिथुनसगदसवीणंचापीनरोश्वजघनोमकरोमृगास्यः
तौलीससस्यदहनोप्लवगाचकन्याशेषाःस्वनामसदृशाःखचराश्चसर्वे ९

नशिल्पकस्त्रीक्रीडारतिर्यूतविहारभूमिः ३ कर्कः कुलीराकृतिरंबुसस्थोवसःप्रदेशोविहितश्चधातुः केदारवापीपुलिनानितस्यदेशाःगनारम्याविहारभू-
मिः ४ सिंहस्तुशैलकंदरप्रदेशःप्रजापतेःपंचममाहुरार्याः तस्यावनीदुर्गगुहावनाद्रिव्याधावनीदुर्गवनप्रदेशाः ५ प्रदीपिकाशस्यकरेणकन्यानौस्था
जलेपशमितिश्रुपति फलार्थधीरात्नजठरविधातुःसशाद्वलास्त्रीरतिशिल्पभूमिः ६ वीथ्यातुलापण्यधरोमनुष्यःस्थितः सनाभौकटिबस्तिदेशो शुल्क
र्थवीथ्यापणपट्टनाध्वसार्थाधिवासोन्नतसस्यभूमिः ७ श्वभ्रोपमोवृश्चिकविग्रहस्तुप्रोक्तःप्रभोमेद्गुदप्रदेशो गुहाबिलश्चात्रविषाश्मगुप्तिर्वल्मीक

कीटाजगराहिभूमि. ८ धन्वीमनुष्योह्यपश्चिमार्धस्तमाहुरूरुभुवनप्रणेतु. समस्थितव्यस्तसमस्तवाजीसुरास्त्रभृद्यज्ञरथाश्वभूमि. ९ मृगाङ्कपू
र्वोमकरोंबुगाढ्योजानुप्रदेशंतमुशंतिधातुः नदीवनारण्यसरोच्चरूपश्वभ्राधिवासोदशमःप्रदिष्ट १० स्कंधेतुरिक्तःपुरुषस्यकुंभोजंघेतमेकादशमाहु
राद्याः उष्णोदकाधारकुसस्यपक्षीस्त्रीशौंडिकाद्यूतनिवासभूमिः ११ जलेतुमीनद्व्यमत्स्यराशिःकालस्यपादौविहितोवरिष्ठो सपुण्यदेवद्विज-
तीर्थभूमिर्नदीसमुद्रांबुधराधिवासः १२ प्रयोजनंहृतनष्टादिषुद्रव्यस्थानपरिज्ञानं उक्तंच राशिभ्यःकालदिग्देशाइति अधुनाराशिनवमांशद्वाद
शांशाधिपानूत्रोटकेनाह क्षितिजसितज्ञेति क्षितिजादयोग्रहाः गृहपाः अंशपाश्च गृहाणांराशीनांमेषादीनांपतयः स्वामिनोभवंति क्षितिजोंगारकः

क्षितिजसितज्ञचंद्ररविसौम्यसितावनिजाःसुरगुरुमंदसौरिगुरवश्चगृहांशकपाः

समेषस्याधिपति. सितःशुक्रःवृषभस्य ज्ञोबुधोमिथुनस्य चंद्रःकर्कटकस्य रविरादित्य सिंहस्य सौम्योबुध कन्यायाःसितःशुक्रस्तुलायाः अ-
वनिजोंगारकोवृश्चिकस्य सुरगुरुर्बृहस्पतिः धन्विनः मंदःशनैश्चरोमकरस्य सौरिःशनैश्चरोमंदइत्यमरः कुंभस्यगुरुर्बृहस्पतिः मीनस्येतिप्रयोज
नं होरास्वामिगुरुज्ञवीक्षितयुतेत्यत्र एतएवमेषादिनवांशकाधिपतयः नकेवलंमेषस्यभौमाधिपति यावद्यस्मिन्राशौमेषनवांशकोद्योभवति
तस्यापिभौमोधिपतिः शेषाणामप्येवं तेचनवांशकाः कथंभवंतीत्याह अजमृगतौलिचंद्रभवनादिनवांशविधिरिति अजोमेषः मृगोमकरः तौलीतु
लाचंद्रभवनंकर्कटः अजोमेषःमृगोमकरः तौलिस्तुलः चंद्रभवनकर्क आदिनवांशविधिरिति प्रत्येकमभिसंबध्यते तत्रैवसंबंधोजायते अजादि
मृगादि तौल्यादि चंद्रभवनादिर्नवांशविधि सर्वराशीनांविधिर्भवति तत्रादिनवांशविधिः मेषस्यतेनमेषवृषमिथुनकर्कटसिंहकन्यातुलावृश्चिकधनु

धराणाम्नवधिनोनवांशाः मेषस्य भवति मृगादिर्वृषस्य तेनमकरकुंभमीनमेषवृषमिथुनकर्कटसिंहकन्यासवधिनोनवांशाः वृषस्य तुलादिर्मिथुनस्य तेनतुलावृश्चिकधनमकरकुंभमीनमेषमिथुनानांसंवधिनोनवांशाः मिथुनस्यकर्कटादिः कर्कटस्य तेनकर्कटसिंहकन्यातुलावृश्चिकधनमकरकुंभमीना नांसंबधिनोनवांशाः कर्कटस्य एवंसिंहस्यमेषवत् कन्यायाः वृषवत् तुलायाःमिथुनवत् वृश्चिकस्यकर्कटवत् पुनरपिधनुषः मेषवत् मकरस्यवृषवत् कुंभस्यमिथुनवत् मीनस्यकर्कटवत् तदुक्तमन्यत्र मेषकेसरिधन्वीनामेषाद्याअंशकाःस्मृताः वृषकन्यामृगाणांचमकराद्यानवस्मृताः १ तुलामिथुन कुंभानांतुलाद्यानवकीर्तिताः कर्कालीझषाणांचकर्कटाद्यानवांशकाः प्रयोजनम् स्तेनोभोक्तापंडितायाइत्यादि भवनसमांशकाधिपतयः स्वगृहात्क्रमशः

अजमृगतौलिचंद्रभवनादिर्नवांशविधिर्भवनसमांशकाधिपतयःस्वगृहात्क्रमशः ६

भवनसमांशकाभवनांशकाः भवनानिद्वादशतत्समाअंशकाद्वादशांशकाइत्यर्थः तेचप्रत्येकस्यराशेःस्वगृहादारभ्यगणनीयाः तद्यथा मेषस्यमे षवृषमिथुनकर्कटसिंहकन्यातुलावृश्चिकधन्विमकरकुंभमीनानांसंवधिनोद्वादशभागाभवंति तेषांभौमाद्याधिपतयः एवंवृषस्यवृषाद्यामेषांताः मि थुनस्यमिथुनाद्यावृषांताः कन्यायाः कन्याद्याःसिंहांताः तुलायास्तुलाद्याः कन्यांताः वृश्चिकस्यवृश्चिकाद्यास्तुलांताः धन्विनोधनुराद्या वृश्चिकांताः म करस्यमकराद्याधन्व्यंताः कुंभस्यकुंभाद्याः मकरांताः मीनस्यमीनाद्याः कुंभांताः प्रयोजनं तात्कालिकेंदुसहितोद्विर्भांशसदृशादि . . .

अधुनात्रिंशांशकस्याधिपतीनांगणनयापरिज्ञानंचपुष्पिताग्रयाह कुजेति कुजोभौम रविजः सौरिः शनिः गुरुर्बृहस्पतिः ज्ञोबुधः शुक्रोभार्गवः एवंकुजरविजगुरुज्ञशुक्राणांक्रमेणभागाः पवनसमीरणकौर्पिजूकलेयाः तद्यथा पवनाः वायव पंचपंचएवभागाः कुजस्य ततऊर्ध्वंसमीरणाः पंचैवरविजस्य एवंदश ततऊर्ध्वंकौर्पिसंज्ञाअष्टौगुरोः कौर्प्याख्योवृश्चिक सचगणनयाष्टमः एवमष्टादश ततःपरंजूकसंज्ञाः सप्तभागाः बुधस्यजूकसंज्ञातुलाया सचगणनयासप्तम एवंपंचविंशतिः ततऊर्ध्वंलेयसंज्ञाः पंचशुक्रस्य लेयसंज्ञासिंहस्य सचगणनयापंचमः एवंत्रिंशत् किंसामान्येनेत्यतआह अयुजियुजीति अयुजिविषमराशौकुजादयोग्रहाः पवनादीनांभागानांयथाक्रमेणाधिपतयः तत्रमेषमिथुनसिंहतुलाधनुः कुंभानांविषमराशीनांमेषक्रमः युजिभेतुविपर्ययस्थाः युजिसमराशौपवनादिभागग्रहाश्चविपर्ययस्थाः विलोमेनतिष्ठंति तद्यथा तत्रादौपंचशुक्रस्य ततःपरंसप्तबुधस्य एवंद्वादश ततःपरंअष्टौजीवस्य एवंविंशतिः ततःपरंपंचशने एवंपंचविंशतिः ततःपरंपंचभौमस्य एवंत्रिंशत् तत्रवृषकर्कटकन्यावृश्चिकमकरमीनाः समराशयः एवंत्रिंशद्भागाधिपतयः पंचताराग्रहाः अत्रकेचिदाहुः यथाविपर्ययस्थाइत्यनेनानंतराणामेवपवनादिसंख्यानांभागानांविपर्ययेणभवितव्यंनव्यवहितानांकुजादीनां तच्चायुक्तम् तस्मात्तुशब्दोत्रपठ्यते सचकुजादिसमुच्चयार्थः तथाचश्रुतकीर्तिः पंचाथपंचचाष्टौसप्तचपंचैवचौजभवनेषु धरणिसुतमंदसुरगुरुबुधशुक्राणांक्रमेणांशाः पंचैवसप्तचाष्टौपंचपंचायुग्मभवनेषु भागाभार्गवशशि

कुजरविजगुरुज्ञशुक्रभागाःपवनसमीरणकौर्पिजूकलेयाः
अयुजियुजितुभेविपर्ययस्थाशशिभवनालिझषांतमृक्षसंधिः ७

मतङ्गोज्यशनिभूमिपुत्राणामिति प्रयोजनं कन्यैवद्वृषमजतीद्दास्यसाध्वीसमायाकुलीरविमुक्ता प्रत्यग्मजर्क्षैकमशोंशात्केषुवक्रार्किजीवेद्वृजभार्ग वाणामित्यादि शशिभवनाळिझषातमृक्षसंधिः अतशब्दः प्रत्येकमभिसंबध्यते शशिभवनान्तमत्स्यान्त झषान्तञ्चऋक्षसंधिः शशिभवनं कर्कटः अ लिर्वृश्चिकः झषोमीनः एतेषामन्तनवमनवांशकं यवनस्तत्रयश्योर्युगपत्पर्यवसानतदृक्षसंधिः यस्मादाश्लेषान्ते कर्कटकान्तं ज्येष्ठान्ते वृश्चिकान्तरेव त्यन्तेमीनान्तमिति एतदेवलोके गण्डान्तमितिप्रसिद्धं उक्तञ्च अश्विनीपित्र्यमूलानांमेषसिंहहयादयः विषमर्क्षोऽन्विवर्त्तीति पादग्र्ध्यायथोत्तरमि- तिप्रयोजनं सर्वोपापैः शशिनिचजडःस्यान्नचेत्सौम्यदृष्टइति ७ अधुनाव्यवहारार्थमेषादीनांसंज्ञायथार्थमाह क्रियेति इत्थमेवमका

क्रियताबुरिजितुमकुलीरलेयपाथोनजूककौर्प्याख्याः तौक्षिकआकोकेरोहृद्रोगश्चान्त्यभञ्चेत्थं ८ द्रेष्काणहोरानव

भागसंज्ञास्त्रिंशांशकद्वादशसञ्ज्ञिताश्च

रनामानोमेषादयोराशयोज्ञेयाः तद्यथा क्रियोमेषः ताबुरिर्वृष तिजुमोमिथुनः कुलीरः कर्कटः लेयः सिंहः पाथोनः कन्या जूकस्तुला कौर्प्यस्त्वोर्श्चिकः तौक्षिकोधन्वी आकोकेरोमकरः हृद्रोगःकुम्भः अन्त्यभंमीनइति प्रयोजनम् गो सिंहोजितुमाष्टमौ क्रियतुलेत्यादि ८ अधुनाग्रहस्यक्षेत्रहोराद्रेष्काणनवांशद्वादशभागत्रिंशद्भागानांवर्गसंज्ञानाव्यवहारार्थमिदंश्लोकमाह पोति द्रेष्काणादयः षट्पदार्थाः स्वकीयग्रहस्यवर्गसंज्ञास्तत्रद्रेष्काणोराशित्रिभागः होराराश्यर्द्धं नवभागोनवांशकः त्रिंशांशकः त्रिंशद्भागः द्वादशां शोद्वादशभागः क्षेत्रराशिः एतत्सञ्ज्ञिताश्च एषांसंज्ञास्वाधेषांतेतथा यद्यस्यग्रहस्यक्षेत्रराशिः सतस्यवर्गः षणांस्मेनात्रषड्वर्गः तेसर्वएवग्रहस्या- ... यतश्चन्द्रार्कयोस्त्रिंशांशकाभावः भौमादीनां

होराभावः तस्मात्पंचसंभवंति तेनपंचस्वात्मीयेषुस्थितोवर्गस्थः एतदप्युपलक्षणं अतोयथासंभवंस्वादिविकल्पस्थोग्रहोवर्गस्थउच्यते तस्माद्व
गवानार्गिः क्षेत्रंहोराथद्रेष्काणोनवांशोद्वादशांशकः त्रिंशांशकश्चवर्गोयं सर्वेस्यसउदाहृतः आद्येष्वपिपदार्थेषुस्थितःस्वेषुस्ववर्गगः परवर्गगतोप्येवं
ग्रहोभवतिचान्यथाइति प्रयोजनम् एकोपिवक्रोपगतोनराणांशुभाशुभोवापिचतुष्टयस्थः वर्गोपितस्योदयगोविनाशंबहुप्रकारंकुरुतेश्ववर्गानामित्या
दि होरालग्नयोःसंज्ञार्थमाह होरेतिलग्नंभवनस्यचार्द्धमिति होराइतिलग्नमुच्यते प्रयोजनं होरास्वामिगुरुज्ञवीक्षितयुतेति भवनस्यचराशेरर्द्धंहोरा
प्रयोजनं मार्तंडेह्नोरायुजिसमभेचंद्रभान्वोश्वहोरेति ९ अधुनाराशीनांरात्रिदिनसंज्ञत्वं पृष्ठोदयशीर्षोदयत्वंच वसंततिलकेनाह गोजेति गोजाश्वि
कर्किमिथुना गोशब्देनवृषउच्यते अजोमेषः अश्वोस्यास्तीत्यश्वोधन्वी कर्कीकुलीरः मिथुनः प्रसिद्धः एतेगोजाश्विकर्किमिथुनाः समृगाः मृगेणम-

क्षेत्रंचयद्यस्यसतस्यवर्गोहोरेतिलग्नंभवनस्यचार्द्धम् ९

करेणसहिता षड्राशयोनिशाख्याः रात्रिबलसंज्ञाः पृष्ठोदयाविमिथुनाः एतएवराशिसंज्ञाविमिथुनाः मिथुनवर्जिताः पृष्ठोदयसंज्ञाभवंति पृष्ठेनउदयं
यांतीत्यर्थः मिथुनः पुनः शीर्षोदयः शीर्षोदयाइति उक्तेभ्यः शेषाः सिंहकन्यातुलावृश्चिककुंभाः शीर्षोदयाः शिरसाउदयंयांति दिनबलाश्चभवं
ति अत्ररात्रिदिनबलाख्याइतिसंज्ञामात्रं यतस्तेषामुत्तरोत्तरं बलंवक्ष्यति द्विपदादयोन्हिनिशिचप्राप्तेचसंध्याद्वयेइति एवंसत्याचार्यस्यवचनवि-
रोधःस्यात् तस्मात्संज्ञामात्रंबलग्रहणं प्रयोजनं रात्रिद्युसंज्ञेषुविलोमजन्मइत्यादि तथापृष्ठोदयकोभयर्क्षगाइति यात्रायांवक्ष्यतिच शीर्षोदये
समभिवांछितकार्यसिद्धिं पृष्ठोदयेविपुलताबलबुद्धिनाशः शस्तंदिवादिनबलेनिशिनक्तवीर्येरात्रौविपर्ययबलेगमनंनशस्तं अन्यलग्नेभ्योमीनस्य

होराभाव· तस्मात्पंचसंभवंति तेनपंचस्वात्मीयेषुस्थितोवर्गस्थः एतदप्युपलक्षणं अतोयथासंभवंस्वादिविकल्पस्थोग्रहोवर्गस्थउच्यते तस्माद्ग्र
गवान्गार्गि· क्षेत्रंहोराथद्रेष्काणोनवांशोद्वादशांशक· त्रिंशांशकश्चवर्गोयंसर्वस्यसउदाहृतः आद्येष्वपिपदार्थेषुस्थितःस्वेषुस्ववर्गगः परवर्गगतोप्येवं
ग्रहोभवतिन्चान्यथाइति प्रयोजनम् एकोपिवक्रोपगतोनराणांशुभाशुभोवापिचतुष्टयस्थ· वर्गोपितस्योदयगोविनाशंबहुप्रकारंकुरुतेग्रहाणामित्या
दि होरालग्नयो·संज्ञार्थमाह होरेतिलग्नंभवनस्यचार्द्धमिति होराइतिलग्नमुच्यते प्रयोजनं होरास्वामिगुरुज्ञवीक्षितयुतेति भवनस्यचराशेरर्द्धंहोरा
प्रयोजनं मार्तंडेंद्वोरायुजिसमभेचंद्रभान्वोश्चहोरेति १ अधुनाराशीनांरात्रिदिनसंज्ञत्वं पृष्ठोदयशीर्षोदयत्वंच वसंततिलकेनाह गोजेति गोजाश्वि
कर्किमिथुना गोशब्देनवृषउच्यते अजोमेष अश्वोस्यास्तीत्यश्वीधन्वी कर्कीकुलीर· मिथुनः प्रसिद्ध· एतेगोजाश्विकर्किमिथुनाः समृगाः मृगेणम-

क्षेत्रंचयद्यस्यसतस्यवर्गोहोरेतिलग्नंभवनस्यचार्द्धम् १

करेणसहिता षड्राशयोनिशाख्या· रात्रिबलसंज्ञाःपृष्ठोदयाविमिथुना· एतएवराशिसंज्ञाविमिथुनाः मिथुनवर्जिताः पृष्ठोदयसंज्ञाभवंति पृष्ठेनउदयं
यांतीत्यर्थ· मिथुने· पुनः शीर्षोदयः शीर्षोदयाइति उक्तेभ्यः शेषा· सिंहकन्यातुलावृश्चिककुंभाः शीर्षोदयाः शिरसाउदयंयांति दिनबलाश्चभवं
ति अत्ररात्रिदिनबलाख्याइतिसंज्ञामात्रं यतस्तेषामुत्तरोत्तरंबलंवक्ष्यति द्विपदादयोन्हिनिशिचप्रासेचसंध्याद्वयेइति एवंसत्याचार्यस्यवचनवि-
रोध·स्यात् तस्मात्संज्ञामात्रंबलग्रहणं प्रयोजनं रात्रिद्युसंज्ञेषुविलोमजन्मइत्यादि तथापृष्ठोदयकोभयदर्शगाइति यात्रायांवक्ष्यतिच शीर्षोदये
समभिवांछितकार्यसिद्धिंपृष्ठोदयेविपुलताबलबुद्धिनाशः शस्तंदिवादिनबलेनिशिनक्तवीर्येरात्रौविपर्ययबलेगमनंनशस्तं अन्यलग्नेप्युभयोमीनस्य

विशेषमाह उभसमेत्युभयतः पृथुरोमयुग्ममिति पृथुरोमामत्स्या तद्युग्ममत्स्यद्वयमीनाराशिः सउभयतः पृष्ठशीर्षाभ्यामुभसमेत्युक्तश्चेति १०
अधुनाराशीनाक्रूरसौम्यविभागस्त्रीपुरुषविभागचरस्थिरद्विस्वभावविभागादिगाधिपत्यहोराद्रेष्काणपतीनाविभागञ्चप्रवक्तुकामआह क्रूरःसौम्यइति
तेमेषादयोराशयोयथाक्रमक्रूरसौम्यसञ्ज्ञाः तत्रमेषः क्रूरः वृषः सौम्यः मिथुनः क्रूरः कर्कटः सौम्यः एवसर्वेषायोज्य युक्तकरणीयमित्यर्थः ते
नविषमराशयः क्रूरसञ्ज्ञाः समराशयः सौम्यसञ्ज्ञाः प्रयोजनं क्रूरेषुजाताः क्रूरस्वभावाः सौम्येषुजाताः सौम्यस्वभावाभवन्ति तथात्वस-
त्याचार्य ओजाःपुरुषास्तेयाः सौम्याः स्त्रीसञ्ज्ञकाः क्रमात् ओजेषुयाः पुरुषा सौम्यायुग्मेषुभवन्तेषुपुरुषवनितेइति तएवमेषादयोयथाक्रम

गोजाश्विकर्किमिथुनाःसमृगानिशाख्या पृष्ठोदयाविमिथुनाःकथितास्तएव
शीर्षोदयादिनबलाश्चभवन्तिशेषाःन्भसमेत्युभयतःपृथुरोमयुग्मम् १०

पुरुषवनिताख्याज्ञेयाः तेनमेषःपुरुषोनरोवृषोवनितास्त्री एवंसर्वत्र तेनविषमराशयः पुरुषसञ्ज्ञाः षट्समराशयस्त्रीसञ्ज्ञा प्रयोजनं पुरुष
राशिषुजातास्तेजस्विनः स्त्रीराशिषुजातामृदवोभवन्ति तेनराशाद्विदेहाइति तएवमेषादयोयथासंख्यंचरागद्विदेहाख्याभवन्ति तत्रमेषश्चरः
वृषोगःस्थिरः मिथुनोद्विदेहोद्विस्वभावः एवकर्कटादिषुयोज्य तेनमेषकर्कटतुलामकराश्चराः वृषसिंहवृश्चिककुम्भाःस्थिराः मिथुनकन्याधनुर्मी
नाद्विस्वभावाः प्रयोजनं चरराशिषुजाताश्चरस्वभावाभवन्ति स्थिरेषुस्थिराः द्विस्वभावेषुमिश्रस्वभावाभवन्ति तथात्वसत्यः चरसञ्ज्ञाः स्थिरसञ्ज्ञा
[illegible] राशयः क्रमशः राशिस्वभावतस्याज्ञायसेभक्तयः समस्तानाम् प्राणादीशाइति क्रियामेषः वृषःप्रसिद्धः नृयुग्मिथुनः कुलीरः क

कैटक एतेक्रियवृषनृयुक्ककैटाः स्वत्रिकोणाभ्यांस्वपंचमनवमाभ्यां सहिताः प्रागादिषु पूर्वाद्यासुचतसृषुदिशासुईशाः स्वामिनः भवंति तेनमेषसिंहध न्विनः पूर्वस्याम् वृषकन्यामकरादक्षिणस्याम् मिथुनतुलाकुंभाः पश्चिमायाम् कर्कटवृश्चिकमीनाउत्तरस्यामितिप्रयोजनम् हृतनष्टादौचौरादेर्द्र व्यस्यवादिग्विज्ञानं सूतिकागृहद्वारज्ञानंच तथाच यातव्यदिग्मुखगतस्यमुखेनसिद्धिर्व्यर्थश्रमोभवतिदिक्प्रतिलोमलग्नइति मार्तंडेंद्वोरिति मा र्तंडः सूर्यः इंदुश्चंद्रः अयुग्योजराशौ यथाक्रमंमार्तंडेंद्वोहोरेभवतः प्रथमाहोरासूर्यस्य द्वितीयाहोराचंद्रस्य होराशब्देनात्रराश्यर्द्धमुच्यते समृ मे चंद्रभान्वोश्चेति समभेसमराशौ चंद्रभान्वोः होरेभवतःप्रथमा होराचंद्रस्यशशिनः द्वितीयाभानोः सूर्यस्य प्रयोजनम् सूर्यहोरायांजातास्ते

क्रूरःसौम्यःपुरुषवनितेतेचरागद्विदेहाःप्रागादीशाःक्रियवृषनृयुक्कर्कटाःसत्रिकोणाः
मार्तंडेंद्वोरयुजिसमभेचंद्रभान्वोश्चहोरेद्रेष्काणास्युःस्वभवनसुतत्रित्रिकोणाधिपानाम् ११

जस्विनः चंद्रस्यहोरायांमृदुस्वभावाभवंति द्रेष्काणास्युरिति द्रेष्काणोराशित्रिभागः स्वभवनसुतत्रित्रिकोणाधिपानांसंबंधिनोद्रेष्काणाभवंति प्रथमो द्रेष्काणः स्वभवनाधिपतेः आत्मीयभवनाधिपतेः द्वितीयः सुतभवनस्यपंचमस्थानाधिपतेः तृतीयः त्रित्रिकोणाधिपतेः नवमस्थानाधिपतेः तेनमेषस्य प्रथमद्रेष्काणोभौमस्य द्वितीयोर्कस्य तृतीयोगुरोः वृषस्यप्रथमः शुक्रस्य द्वितीयोबुधस्य तृतीयःशनेः मिथुनस्यप्रथमोबुधस्य द्वितीयःशुक्रस्य तृ तीयःशनेः कर्कटस्यप्रथमश्चंद्रस्य द्वितीयोभौमस्य तृतीयोजीवस्य सिंहस्यप्रथमःसूर्यस्य द्वितीयोजीवस्य तृतीयोभौमस्य कन्यायाःप्रथमोबुध स्य द्वितीय शनेः तृतीय शुक्रस्य तुलायाःप्रथमः शुक्रस्य द्वितीय सौरस्य तृतीयोबुधस्य वृश्चिकस्यप्रथमोभौमस्य द्वितीयोजीवस्य तृतीयश्चंद्र

विशेषमाह समसमेत्युभयतः पृथुरोमयुग्ममिति पृथुरोमामत्स्य तद्युग्मं मत्स्यद्वयं मीनोराशिः सउभयतः पृष्ठशीर्षाभ्यालमसमेत्युद्गच्छति १०
अधुनाराशीनांक्रूरसौम्यविभागस्त्रीपुरुषविभागचरस्थिरद्विस्वभावविभागादिगधिपत्वहोराद्रेष्काणपतीनांविभागत्वमवाक्रांतयाह क्रूरःसौम्यइति
तेमेषादयोराशयोयथाक्रमंक्रूरसौम्यसंज्ञाः तन्नमेषः क्रूरः वृषः सौम्यः मिथुनः क्रूरः कर्कटः सौम्यः एवंसर्वेषांयोज्य युक्तकरणीयमित्यर्थः ते
नविषमराशयः क्रूरसंज्ञाः समराशयः सौम्यसंज्ञा प्रयोजनं क्रूरेषुजाताः क्रूरस्वभावाः सौम्येषुजाताः सौम्यस्वभावाभवंति तथान्वसं
त्यानार्थ ओजाःपुरुषास्तेषां सौम्याः स्त्रीसंज्ञकाः क्रमात् ओजेषुजाः पुरुषाः सौम्यायुग्मेषुभवन्तेषुपुरुषवनितेइति तएवमेषादयोयथाक्रम

गोजाश्विकर्किमिथुनाःसमृगानिशाख्याः पृष्ठोदयाविमिथुनाःकथितास्तएव
शीर्षोदयादिनबलाश्चभवंतिशेषालग्नसमेत्युभयतःपृथुरोमयुग्मम् १०

पुरुषवनिताख्यास्तेषां तेनमेषःपुरुषोनरोरूपोवनितास्त्री एवंसर्वत्र तेनषड्विषमराशयः पुरुषसंज्ञाः षट्समराशयस्त्रीसंज्ञा प्रयोजनं पुरुष-
राशिषुजातास्तेजस्विनः स्त्रीराशिषुजाताःमृदवोभवंति तेनराशयद्विदेहाइति तएवमेषादयोयथासंख्यंचरागाद्विदेहाख्याभवंति तन्नमेषःचरः
वृषःस्थिरः मिथुनोद्विदेहोद्विस्वभावः एवंकर्कटादिषुयोज्यं तेनमेषकर्कटतुलामकराश्चराः वृषसिंहवृश्चिककुंभाःस्थिराः मिथुनकन्याधनुर्मी
नाद्विस्वभावाः प्रयोजनं चरराशिषुजाताश्चरस्वभावाभवंति स्थिरेषुस्थिराः द्विस्वभावेषुमिश्रस्वभावाभवंति तथान्यसंज्ञाः चरसंज्ञा स्थिरसंज्ञा
द्विस्वभावेतिराशयः क्रमशः राशिस्वभावतुल्यानामर्तेमफलतयःमसूतानाम् प्रागादीशाइति क्रियमेषः वृषःप्रसिद्धः नृयुग्मिथुनः कुलीरः क-

अंगनाकन्याबुधस्य कुलीरः कर्कट जीवस्य झषोमीनः शुक्रस्यवणिक्तुलाधरः सौरस्य एतएवराशयोदशादिषुभागेषुसूर्यादीनांपरमोच्चसंज्ञाभवंति तत्रआदित्यस्यमेषोदशमेभागेपरमोच्चः चंद्रस्यवृष शिखिसंख्येतृतीयेभागे भौमस्यमकरोमनुयुक्संख्येऽष्टाविंशेभागेपरमउच्चः मनवश्चतुर्दशतेषांयुग द्विगुणामनवइत्यर्थः बुधस्यकन्यायांतिथिसंख्येपंचदशेभागे जीवस्यकर्कटइंद्रियसंख्ये पंचमेभागेशुक्रस्य मीनःत्रिनवकसंख्येसप्तविंशे सौरस्यतुलोविंशे ननुसर्वेएवराशिरुच्चसंज्ञः सचत्रिंशदंशकाः तत्रदशादीनातदंतर्भूतानांसिद्धैवोच्चसंज्ञा तत्किंदशाद्युपादानम् सत्यम् किंतुपरमोच्चत्वज्ञानार्थंदशादीनांग्रहणम् अथवासर्वएवराशिउच्चसंज्ञः तेनोक्तराशिदशाद्यंशसंख्याः कथितायग्रहाः परमोच्चस्थाइत्युच्यंते परमोच्चज्ञानेनस्वोच्चव्यतिरिक्तप्रयोजनमस्ति तथाच भगवान्गार्गिः स्वोच्चगौरविशीतांशूजनयेत्तांनराधिपम् उच्चस्थोधनिनंख्यातंस्वत्रिकोणगतापि

अजवृषभमृगांगनाकुलीराझषवणिजौचदिवाकरादितुंगाः दशशिखिमनुयुक्तिथींद्रियांशैस्त्रिनवकविंशतिभिश्चतेस्तनीचाः १३

तथाचयवनेश्वरः स्वोच्चेषुसर्वान्परिगृह्यभागांतिष्ठत्सुसर्वेषुबलाधिकेषु लग्नेशुभेपूर्णवपुष्मतींदौत्रैलोक्यराज्याधिपतिः प्रसूतः अथेदृशाः एवंविधाः सूर्यादयः परमोच्चस्थितादृष्टव्याः अत्रवृत्तभंगभयात्पूरणप्रत्ययांतादशादयोआचार्येणनोक्ताः पूरणप्रत्ययांतत्वमेषांयवनेश्वर वाक्यात्ज्ञायते तथाचयवनेश्वरः सूर्यस्यभागेदशमे तृतीयेचंद्रस्यजीवस्यतुपंचमेंशे सौरस्यविंशेत्वधिसप्तकेतुविंद्याद्भृगोः पंचदशेबुधस्य भौमस्यविंशेऽष्टयुतेपरोच्चेविंशल्लवेसूर्यसुतस्यनीचाइति तेआदित्यादयः ग्रहाः अस्तनीचाः अस्तेनीचंयेषांते अस्तःसप्तमः प्रकृतित्वात् स्वोच्चात्सप्तमःप्रत्येकस्यनीचसंज्ञा तद्यथा आदित्यस्यस्वोच्चान्मेषात्सप्तमस्तुलासनीचसंज्ञः एवंचंद्रस्यसप्तमोवृश्चिकः भौमस्यसप्तमःकर्कटः बुधस्यमीनः गु

स्य धन्विनः प्रथमोजीवस्य द्वितीयोभौमस्य तृतीयोरवेः मकरस्यप्रथमः शनेः द्वितीयः शुक्रस्य तृतीयोबुधस्य कुम्भस्यप्रथमः सौरेः द्वितीयोबुध स्य तृतीयः शुक्रस्य मीनस्यप्रथमोजीवस्य द्वितीयश्चन्द्रस्य तृतीयोभौमस्येति प्रयोजनम् द्विरुक्तमाकाशफलत्रिभागैरित्यादि ११ अधुनामतां तरेणहोराद्रेष्काणपतीनालक्षणमिदमन्यथाह केचिदिति केचिद्यवनेश्वरप्रभृतयः प्रथमाहोरामेषस्यलग्नाधिपतेर्वाञ्छति द्वितीयालाभाधिपतेरेका दशस्थानाधिपस्य यथामेषस्यप्रथमहोरा भौमस्यद्वितीयासौरस्य एवसर्वेषामपियोज्यम् द्रेष्काणसंज्ञामपीति स्वद्वादशैकादशराशिपानाः मपि एकेद्रेष्काणसंज्ञामिच्छन्ति कथमिति प्रथमस्याधिपतेरधीयस्वामिनः द्वितीयद्वादशाधिपतेः तृतीयमेकादशराश्यधिपतेः यथा मेषस्यप्र

केचित्तुहोरांप्रथमांभपस्यवाञ्छन्तिलाभाधिपतेर्द्वितीयाम् द्रेष्काणसंज्ञामपिवर्णयन्तिस्वद्वादशैकादशराशिपानाम् १२

थमोद्रेष्काणोभौमस्य द्वितीयोजीवस्य तृतीयःसौरस्य एवमन्येषामपिज्ञातव्यम् तथाचयवनेश्वरः आद्याहोराभवनस्यपत्युरेकादशक्षेत्रपतेर्द्वितीया स्वद्वादशैकादशराशिपानांद्रेष्काणसंज्ञाः क्रमशोनचोक्ताः एवंयवनेश्वरमतेन सर्वग्रहाणांहोराद्रेष्काणाधिपत्यमस्ति एतदाचार्यस्यनाभिमतम् सत्या दीनामपि तथाचसत्यः ओजेषुरवेर्होराप्रथमासुभेषुचोत्तराशेषाः द्रेष्काःक्रमशोज्ञेयाजन्मानिवेशेस्वहोरास्थो राशिस्तद्रेष्काणास्तत्पञ्चमनवम १ ५ ९ भवनपतयःस्युः तेषामधिपतयःस्युः स्वद्रेष्काणेग्रहाबलिनइति १२ अथग्रहाणामुच्चनीचविभागंपुष्पिताग्रयाह अजेति अजा दयोराशयोयथाक्रमेणादित्यादीनांग्रहाणांतस्य उच्चसंज्ञाः तद्यथा अजोमेषः आदित्यस्योच्चः एवमोवृषःचन्द्रस्य मृगोमकरः भौमस्य

अंगनाकन्याबुधस्य कुलीरः कर्कटःजीवस्य झषोमीनः शुक्रस्यवणिक्तुलाधरःसौरस्य एतएवराशयोदशादिषुभागेषुसूर्यादीनांपरमोच्चसंज्ञाभ-
वंति तत्रआदित्यस्यमेषेदशमेभागेपरमोच्चः चंद्रस्यवृषे शिखिसंख्येतृतीयेभागे भौमस्यमकरेमनुयुक्संख्ये अष्टाविंशेभागेपरमउच्चः मनवश्च-
तुर्दशतेषांयुग्मं द्विगुणामनवइत्यर्थः बुधस्यकन्यायांतिथिसंख्येपंचदशेभागे जीवस्यकर्कटेइंद्रियसंख्ये पंचमेभागेशुक्रस्य मीनेत्रिनवकसंख्ये
सप्तविंशेसौरस्यतुलेविंशे ननुसर्वएवराशिरुच्चसंज्ञः सचत्रिंशदंशकाः तत्रदशादीनांतदंतर्भूतानांसिद्धैवोच्चसंज्ञा तत्किंदशाद्युपादानम् सत्यम् किं-
तुपरमोच्चलज्ञानार्थंदशादीनांग्रहणम् अथवासर्वएवराशिउच्चसंज्ञः तेनोक्तराशिदशाद्यंशसंख्याः कथिताग्रहाः परमोच्चस्थाइत्युच्यंते परमोच्च-
ज्ञानेनस्वोच्चव्यतिरिक्तप्रयोजनमस्ति तथाचभगवान्गार्गिः स्वोच्चगौरविशीतांशुःजनयेत्तांनराधिपम् उच्चस्थोधनिनंख्यातंस्वत्रिकोणगतावपि

अजवृषभमृगांगनाकुलीराझषवणिजोचदिवाकरादितुंगाः दशशिखिमनुयुक्तिथींद्रियांशैस्त्रिनवकविंशतिभिश्चतेस्तनीचाः १३

तथाचयवनेश्वरः स्वोच्चेषुसर्वान्परिगृह्यभागांतिष्ठत्सुसर्वेषुबलाधिकेषु लग्नेशुभेपूर्णवपुष्यतींदौत्रैलोक्यराज्याधिपतिःप्रसूतः अथेदृशाः एवंवि-
धाः सूर्यादयः परमोच्चस्थितादृष्टव्याः अत्रवृत्तभंगभयात्पूरणप्रत्ययांतादशादयोआचार्येणनोक्ताः पूरणप्रत्ययांतलमेषायवनेश्वरवाक्यात्
ज्ञायते तथाचयवनेश्वरः सूर्यस्यभागेदशमेतृतीयेचंद्रस्यजीवस्यतुपंचमेंशेसौरस्यविंशेत्वधिसप्तकेतुविंद्याद्भृगोः पंचदशेबुधस्य भौमस्याविं-
शेः स्युतेपरोच्चेविंशल्लवेसूर्यस्रुतस्यनीचाइति तेआदित्यादयः ग्रहाः अस्तनीचाः अस्तेनीचंयेषांते अस्तःसप्तमः प्रकृतित्वात् स्वोच्चात्सप्तमः
प्रत्येकस्यनीचसंज्ञा तद्यथा आदित्यस्यस्वोच्चान्मेषात्सप्तमस्तुलासनीचसंज्ञः एवंचंद्रस्यसप्तमोवृश्चिकः भौमस्यसप्तमःकर्कटः बुधस्यमीनःगु

रोर्मकरः शुक्रस्यकन्या सौरस्यमेषइति अथापिदशादिषुभागेषुपरमनीचस्यात्रस्थ्याः तथाचयवनेश्वरः स्वोच्चात्तुयामित्रगुणातिनीचंत्रिंशत्कयोरम्य
समानसत्या भयदशागरतिथाख्यादयः परमनीचस्याभवति परमनीचस्थानामनिष्टफलंभवतीतिगार्गिणाप्रदर्शितम् तथाचगार्गिः अथदिग्गजरमू
र्खपरपिंडोपजीविनम् कुरुतामतिनीचस्थौपुरुषशशिभास्करावितिं १२ अधुनाग्रहाणांवर्गोत्तरमूलत्रिकोणपरिज्ञानवसतातिलकेनाह वर्गोत्तमेति
चरग्रहादिषुचरस्थिरद्विस्वभावेषुराशिषुपर्यासस्यपूर्वमध्यपर्यंततः आदिमध्यावसानतः पूर्वमध्यपर्यंतगावापाठः येनवभागास्तेवर्गोत्तमसंज्ञाम
यति वर्गोत्तमसमूहेषुउत्तमा प्रधानावर्गोत्तमाः तद्यथा चरेषुमेषकर्कतुलामकरेषुप्रथमोनवांशोवर्गोत्तमाख्योभवति स्थिरेषुवृषसिंहवृश्चिककु

वर्गोत्तमाश्चरगृहादिषुपूर्वमध्यपर्यंततः शुभफलानवभागसंज्ञा
सिंहावृष प्रथमपष्ठहयांगतोलिकुंभास्त्रिभणभक्तानिभवतिसूर्यात् १४

मेषुमध्यमः पंचमोनवांशकोवर्गोत्तमः द्वि स्वभावेषुमिथुनकन्याधनुर्मीनेषुपर्यंततः नवमोनवांशकोवर्गोत्तमः एतदुक्तंभवति प्रत्येकस्मिन्राशौस्वनु
वमांशकोवर्गोत्तमाख्यइति शुभफलानिनवभागसंज्ञाइति तेनवर्गोत्तमाख्याः नवभागसंज्ञाः जन्मनिशुभफलदाः शुभफलंप्रयच्छन्तिवस्यातिच शुभवर्गो
त्तमेजन्मप्रभृति तथाचसत्यः चरभवनेष्वाद्यकाः स्थिरेषुमध्याद्विमूर्तिषुतथान्त्याः वर्गोत्तमाः प्रदिष्टास्तेष्विहजाता कुलेमुख्याः वर्गोत्तमाख्यापिति
तथाच्यवनेश्वरः स्वेस्वेगृहेपस्त्वगृहांशकाप्रवेवर्गोत्तमास्तेयवनैर्निरुक्ताइति प्रयोजनम् सतुगावस्फोपमतेस्त्रिसगुणाद्विरुत्तमेस्वांशकसान्निभाम

गैरिति सिंहोवृषइत्यादिसिंहादयोराशयः यथापाठक्रमेणसूर्यादीनांग्रहाणांत्रिकोणभवनानिमूलत्रिकोणभवनानिभवंति तद्यथा सिंहः सूर्यस्यादित्यस्यमूलत्रिकोणसंज्ञा वृषश्चंद्रस्यप्रथमोमेषोंगारकस्य षष्ठः कन्याबुधस्य हयांगोधन्वीबृहस्पतेः तौलीतुलाशुक्रस्य कुंभः सौरस्येति प्रयोजनम् उच्चस्वत्रिकोणगैर्बलस्थैस्स्याद्यभूपतिवंशजानरेंद्राइत्यादि १४ अधुनालग्नादीनाद्वादशानांस्थानानांतन्वाद्याद्वादशसंज्ञास्तृतीयषष्ठदशमैकादशानांचोपचयसंज्ञावसंततिलकेनाह होरादयइति होरादयोलग्नादयः तेषांयथाक्रमेणतन्वादीनिनामानिभवंतीत्यर्थः तत्रलग्नस्यतनुरित्याख्या द्वितीयस्यकुटुंबं तृतीयस्यसहोत्थः सहोत्थोभ्राता चतुर्थस्यबंधुः बंधुशब्दोज्ञातिवाचीपंचमस्यपुत्राख्यः अरिः शत्रुस्तदाख्यः षष्ठः पत्न्याख्यः सप्तमः मरणाख्योऽष्टमः शुभाख्योनवमः आस्पदाख्योदशमः आयाख्यएकादशः रिःफाख्योद्वादशः इतिशब्दः प्रकारो

**होरादयस्तनुकुटुंबसहोत्थबंधुपुत्रारिपत्निमरणानिशुभास्पदायाः रिःफाख्यमित्युपचयान्यरिकर्मलाभदुश्चिक्यसंज्ञितगृहाणिनोनित्यमेके १५**

र्थद्योतकः तेनहोरादीनांतन्वादिपर्यायाः अपिसंज्ञाभूताइत्यवगंतव्यम् उपचयान्यरिकर्मलाभदुश्चिक्यसंज्ञितगृहाणीति अरिःषष्ठं कर्मदशमम् लाभएकादशं दुश्चिक्यसंज्ञंतृतीयं एतानिगृहाणिस्थानानिउपचयसंज्ञानीति न नित्यमेकेइति एकेकेचिन्ननित्यमुपचयानीतिवर्णयंति कथयंति तेषामयमभिप्रायः यदिपापग्रहेणस्वस्वामिशत्रुणावादृष्टायुक्ताभवंति तदा नोपचयास्ते तत्रचगर्गादिवाक्यम् अथोपचयसंज्ञास्याश्त्रिलाभारिपुकर्मणाम् नचेद्भवतिदृष्टास्तेपापस्वस्वामिशत्रुभिः एतदाचार्यवराहमिहिरस्यनाभिप्रेतं यतोसौसर्वदैवोपचयाख्यैस्तैर्व्यवहरति सत्यादयोप्येवं तथाचसत्यः दशमैकादशषष्ठतृतीयसंज्ञानिजन्मलग्नाप्यांउप-

नोज्ञेयाएतेह्निनरराशयः चतुर्थाकर्कटोमीनोमकरार्द्धंचपश्चिमम् विज्ञेयाबलिनोनित्यमेतेहिजलराशयः सप्तमेवृश्चिकःकीटोबलवान्परिकीर्ति तः धन्व्यंतार्द्धाजगोसिंहाबलिनःखेचतुष्पदाः अत्रार्द्धशब्देनमकरपूर्वार्द्धमपिगृह्यतइति १७ अधुनापरिशिष्टस्थानानांसंज्ञांतराणिवसंत तिलकेनाह केंद्रादिति सर्वस्मात्केंद्राद्द्वितीयस्थानंपणफरम् तेनद्वितीयपंचमाष्टमैकादशस्थानानांपणफरसंज्ञापरतश्चसर्वमापोक्लिमम् सर्व स्मात्पणफरात्परंसर्वस्थानमापोक्लिमंतेनतृतीयषष्ठनवमद्वादशस्थानानांआपोक्लिमेतिसंज्ञा हिबुकमंबुसुखंचवेश्म वेश्मशब्दोगृहपर्यायः वेश्मेति चतुर्थस्यप्राक्संज्ञाभिहितातस्यैवहिबुकसंज्ञा अंबुसंज्ञासुखसंज्ञाच यामित्रमस्तभवनं अस्तभवनंसप्तमस्थानम् यतःसर्वएवग्रहाउदयराशेः स

**केंद्रात्परंपणफरंपरतस्तुसर्वमापोक्लिमंहिबुकमंबुसुखंचवेश्म यामित्रमस्तभवनंसुतभंत्रिकोणंमेषूरणंदशममत्रचक र्मविंद्यात् १८ होरास्वामिगुरुज्ञवीक्षितयुतानान्यैश्चवीर्योत्कटाकेंद्रस्थाद्विपदादयोन्हिनिशिचप्राप्तेचसंध्याद्वये**

समराशावस्तंयाति तदेवास्तभवनंयामित्रम् सुतभंत्रिकोणम् सुतभंपंचमस्थानंत्रिकोणसंज्ञम् मेषूरणंदशमंदशमस्थानंमेषूरणसंज्ञंच अत्रास्मिन्स्थानेकर्मेत्यपरांसंज्ञाम् विंद्यात् जानीयात् १८ अथहोरादीनांबलव्यवहारार्थंप्रमाणंचशार्दूलविक्रीडितेनाह होरेति होरालग्नंस्वामिनात् त्पतिनावीक्षितादृष्टावावीर्योत्कटाबलवतीभवति तेनैवयुतासंयुताबलवतीभवतितथा गुरुणाजीवेनवीक्षितायुताचबलवतीभवति ज्ञेनबुधे नवीक्षितायुतावावीर्योत्कटाबलवतीभवति यद्विनान्यैरनुक्तैः युक्तादृष्टावानान्यैश्चेति नान्यैर्ग्रहैः स्वामिगुरुज्ञवर्जितैः शेषैर्यदियुतादृष्टानभवति तदावीर्योत्कटा अथवा यद्युक्तानुक्तैर्मिश्रैर्युतादृष्टा भवति तदामध्यबला अर्थादेवस्वामिगुरुज्ञवर्जिता अन्यैर्युतादृष्टाबलहीनाभवति तथाच

नयगावनानिस्सु शेषाण्युक्षाण्यपचयस्थानि यवनेश्वरस्य षष्ठतृतीयदशमैकराशिमेकादशोपचयर्क्षमाहुः होराग्रहस्थानयशाकृभेभ्यः शेषाणिनै
ष्योपचयात्मकानि प्रयोजनम् उपचयधनभिनसोद्वर्गेः पुष्टिफलपचयगृहनीना गतिर्गैर्भस्सपदित्यादि १५ पुनरपिहोरादीनासञ्ज्ञांतराणिवसंत
तिलकेनाह कल्येति एतेषामपिलग्नादीनाद्वादशानायथाक्रमकल्याद्याः सञ्ज्ञाभवति तद्यथा लग्नकल्यास्यकल्पशब्दः शक्तिवाची द्वितीयस्य तृती
यस्य विक्रमश्चतुर्थगृहपुनभवतिभा पञ्चसुतम् सप्तमचित्तोत्थः अष्टमरंध्रम् नवमगुरुम् दशममानम् एकादशभवनम् द्वादशव्ययम् लग्नाच्चतुर्थनि
धनेइति लग्नाच्चतुर्थस्थान निधनमष्टमंचत्तच्चतुरस्रसंज्ञेचतुरस्राख्ये उभयसप्तमगृह यूनं दशमर्क्षदशमराशिमाज्ञाख्य एताःसंज्ञाव्यवहारार्थं

कल्यस्वविक्रमगृहप्रतिभास्ततानिचित्तोत्थरंध्रगुरुमानभवव्ययानि लग्नाच्चतुर्थनिधनेचतुरस्रसंज्ञेद्यूनंचसप्तमगृहंदशमर्क्ष
माज्ञा १६ कण्टककेन्द्रचतुष्टयसंज्ञाःसप्तमलग्नचतुर्थखभानां तेषुयथाभिहितेषुबलाढ्याःकीटनरांबुचराःपशवश्च १७

नैया: १६ अथकेन्द्राणासञ्ज्ञानंस्यराशिवलंचनोटकेनाह कण्टकेति सप्तमलग्नचतुर्थानिप्रसिद्धानिखमदशमम् खमाकाशमध्येतत्कालपूर्वराशि
र्वर्तते तस्यखमितिसञ्ज्ञा एतेषां सप्तमलग्नचतुर्थखभानाराशीनांप्रत्येकस्यकण्टककेन्द्रचतुष्टयइतितिस्रः सञ्ज्ञा तेषुस्थानेषुयथाभिहितेषुप्रथ
योक्तेषु कीटनरांबुचराः पशवश्चराशयोबलाढ्याबलिनोभवंति तद्यथा कीटोवृश्चिकःसप्तमेस्थानेबली नराः नृराशयः मिथुनतुलाकन्याकुम्भ
धनिपूर्वार्द्धनराः एतेलग्नेस्थिताबलिनः अंबुचरा-जलचरराशयः कर्कटमीनमकरपरार्द्धास्तेचतुर्थस्थानेबलिनः पशवश्चतुष्पदाः मेषवृषसिंहध
नुःपरार्द्धमकरपूर्वार्द्धा एतेदशमस्थानेबलिनोभवंतीत्यर्थः तथाचभगवान्गार्गिः नृयुक्तुलाघटः कन्यापूर्वार्द्धं पूर्वमर्द्धंचधन्विनः लग्नस्थाबलि

नोज्ञेयाएतेहिनरराशयः चतुर्थोकर्कटोमीनोमकरार्द्धंचपश्चिमम् विज्ञेयाबलिनोनित्यमेतेहिजलराशयः सप्तमेवृश्चिकःकीटोबलवान्परिकीर्तितः धन्व्यंतार्द्धाजगोसिंहाबलिनःखेचतुष्पदाः अत्रार्द्धशब्देनमकरपूर्वार्द्धमपिगृह्यतइति १७ अधुनापरिशिष्टस्थानानांसंज्ञांतराणिवसंततिलकेनाह केंद्रादिति सर्वस्मात्केंद्राद्द्वितीयस्थानंपणफरम् तेनद्वितीयपंचमाष्टमैकादशस्थानानांपणफरसंज्ञापरतश्चसर्वमापोक्लिमम् सर्वस्मात्पणफरात्परंसर्वस्थानमापोक्लिमंतेनतृतीयषष्ठनवमद्वादशस्थानानांआपोक्लिमेतिसंज्ञा हिबुकमंबुसुखंचवेश्म वेश्मशब्दोगृहपर्यायः वेश्मेतिचतुर्थस्यप्राक्संज्ञाभिहितातस्यैवहिबुकसंज्ञा अंबुसंज्ञासुखसंज्ञाच यामित्रमस्तभवनं अस्तभवनंसप्तमस्थानम् यतःसर्वएवग्रहाउदयराशेः स

केंद्रात्परंपणफरंपरतस्तुसर्वमापोक्लिमंहिबुकमंबुसुखंचवेश्म यामित्रमस्तभवनंसुतभंत्रिकोणंमेषूरणंदशममत्रचक
र्मविद्यात् १८ होरास्वामिगुरुज्ञवीक्षितयुतानान्यैश्चवीर्योत्कटाकेंद्रस्थाद्विपदादयोन्हिनिशिचप्राप्तेचसंध्याद्वये

समराशावस्तंयांति तदेवास्तभवनंयामित्रम् सुतभंत्रिकोणम् सुतभंपंचमस्थानंत्रिकोणसंज्ञम् मेषूरणंदशमंदशमस्थानंमेषूरणसंज्ञंच अत्रास्मिन्स्थानेकर्मेत्यपरांसंज्ञाम् विद्यात् जानीयात् १८ अथहोरादीनांबलव्यवहारार्थप्रमाणंचशार्दूलविक्रीडितेनाह होरेति होरालग्नंस्वामिनात्मपतिनावीक्षितादृष्टावावीर्योत्कटाबलवतीभवति तेनैवयुतासंयुताबलवतीभवतितथा गुरुणाजीवेनवीक्षितायुताचबलवतीभवति ज्ञेनबुधेनवीक्षितायुतावावीर्योत्कटाबलवतीभवति यदिनान्यैरनुक्तैः युक्तादृष्टवानान्यैश्चेति नान्यैर्ग्रहैः स्वामिगुरुज्ञवर्जितैः शेषैर्यदियुतादृष्टानभवति तदावीर्योत्कटा अथवायद्युक्तानुक्तैर्मिश्रैर्युतादृष्टा भवति तदामध्यबला अर्थादेवस्वामिगुरुज्ञवर्जिताअन्यैर्युतादृष्टाबलहीनाभवति तथान्व

वादरायणः जीवस्वनायराशिर्नैर्युतादृष्टावलवती भवतिहोराशेषैर्वन्द्रीनास्यादेवापिमेकुपध्यबला क्लद्दीनायदिसर्वैर्ननीक्षितानैवयुक्तावा केंद्रेति
वीर्यत्किदाइत्यनुवर्तते अनादिशब्दोद्भुशोदृष्ट्या केंद्रस्थाः सर्वएवराशयावलिनोभवंति पणफरस्थामध्यवलाः आपोक्लिमस्याहीनवलाः अ
न्येऽपितुकेंद्रपणफरापोक्लिमानाद्विपदचतुष्पदकीटानांयथाक्रमंवनवलन्याचक्षते तस्युत्तम् यस्माद्वादरायणः केंद्रस्थातिवलाः स्युर्मध्यस्थाः
पणफराभिताज्ञेयाः आपोक्लिमस्थाः सर्वहीनवलाराशयः कथिताइति द्विपदादयोन्हिनिशिन्यासेनसंध्याद्वयेइति वीर्यत्किदाइत्यनुवर्तते द्विप-
दादयोद्विपदचतुष्पदकीटाः यथाक्रममन्हिनिशिप्यासेनसंध्याद्वयेवीर्यत्किटाभवंति अन्हिदिनेद्विपदावलिनः निशिरात्रौचतुष्पदाः संध्याद्वये-
कीटाः अत्रकेवलवृश्चिकः कीटः यावदाप्याः कीटग्रहणेनज्ञेयाः अत्रचश्रीदेवकीर्तिः पियनतुलाकुंभकन्यादिवावलाधन्विनश्चपूर्वार्द्धम्

पूर्वार्द्धेविषयाद्यः कृतगुणामानप्रतीपञ्चतदुश्चिक्यसहजंतपश्चनवमंत्र्याद्यंत्रिकोणंचतत् १९

अजवृषमिथुनकर्कसिंहकन्यातुलावृश्चिकमीनकुलीरमकरान्त्यार्द्धेनसंध्याख्यावापीति पूर्वार्द्धेविषयाद्य कृतगुणाइति विषयाणिइंद्रिया
णितानिपंच तदाद्यः पंचषट्सप्ताष्टनवदशायावत् एतेसर्वकृतगुणाश्चतुर्गुणिताः पूर्वार्द्धमानकस्यमकृतत्वाज्ञ्चक्रस्य पूर्वार्द्धेप्रथमराशिष
ट्केइत्यर्थः मेषादीनांषण्णांमानंप्रमाणं चक्रपूर्वार्द्धेमेषादीनांराशीनांषण्णांप्रमाणंतदेवप्रतीपंचतत्प्रतीपंविपर्ययात्तुलादिषुषट्सुनःप्रमाणं त
थ्याभिपयास्फ ५।६।७।८।९।१० एतेचतुर्गुणाजाताः २०।२४।२८।३२।३६।४० एतेक्रमेणषण्णांमेषादीनांमानंव्युत्क्रमेणान्य
तुलादीनामन्नमिति तथान्यसत्यः चतुरोत्तरोत्तराः स्युर्विंशतिभागाभवंतिमेषादेषुमषट्केषुक्रमात् मानमिहार्द्धेपूर्वेषु मपरेषु मीनाद्येषु

चोत्क्रमादर्धे भागाव्यवहाराश्चक्षेत्रेभागेनैकेनकालेदशप्राणाश्चषट्कोभवंति यस्माद्याः कलाः क्षेत्रलिप्ताः साकालप्राणाइति यस्माद्रूटब्रह्मगुप्तेनोक्त
मू लंकासपश्चिमगंप्राणेनकलांगमंडलंभ्रमतीति एवमेतेभागादशगुणिताश्चषट्काभवंति तत्रैतज्ज्ञातम् कालेयावद्घटिकास्ताःषष्ट्याधिकेनशतत्र
येणगुणिताः प्राणाभवंति क्षेत्रेचतावंत्यएवलिप्तास्तासांषष्ट्याभागमपहृतषट्भागाः क्षेत्रेभवंति एवंमेषादीनांप्रमाणभागादशगुणिताश्चष
ट्काभवंति तेनचषट्कशतद्वयंमेषमीनयोः प्रमाणं एवंचत्वारिंशदधिकशतद्वयंवृषकुंभयोः शतद्वयमशीत्याधिकंमिथुनमकरयोः शतत्रयंविंशत्य
धिकंकर्कटधनुषोः शतत्रयंषष्ट्यधिकंसिंहवृश्चिकयोः शतचतुष्टयंकन्यातुलयोः एतएवषट्कादशविभक्ताभागत्वेनपरिकल्पिताः यतःक्षेत्रेदशभि
श्चषट्कैर्भागोभवति ननुचरदलवशात्प्रतिदशमन्यरूपेषुराश्युदयेषुगणितस्कंधसिद्धेषुकिमर्थमेकरूपं तदुदयप्रमाणं दर्शितमाचार्येण अत्रो
च्यते नष्टचिंतादिष्वध्वपरिज्ञानायपुरुषाणामवयवानांचिन्हे ह्रस्वदीर्घत्वज्ञानयोरुपयुज्यते तथाचयवनेश्वरः आद्यंतराशेरुदयप्रमाणंद्वौद्वौमुहूर्तौ
नियतंप्रदिष्टौक्रमोत्क्रमाभ्यामपिपंचमस्याश्चकार्द्धयोर्विध्युदयप्रमाणम् एवंप्रमाणानिगृहाणिबुध्वाह्रस्वानिमध्यानितथायतानि चक्रांगभेदैः सदृशी
कृतानिमार्गप्रमाणानिविकल्पयंति अंगभागकल्पना वक्ष्यति कादिविलग्नविभक्तभगात्रइति यत्रयस्मिन्नंगेदीर्घराशिर्भवति दीर्घाधिपोवागृहस्तदंग
मतीवदीर्घंभवति एवंमध्यमयोर्मध्यमं ह्रस्वयोर्ह्रस्वमिति तथाचसारावल्याम् ह्रस्वास्तिमिगोजघटाःमिथुनधनुःकर्किमृगमुखास्तुसमाः वृश्चिकक-
न्यामृगपतिवणिजोदीर्घाः समाख्याताः एभिर्लग्नादिगतैः शीर्षप्रभृतीनिसर्वजंतूनाम् सदृशानिचजायंतेगगनचरैश्चैवतुल्यानि तथाचसत्यः दीर्घाधि-
पतिर्दीर्घेगृहेस्थितोऽवयवदीर्घकृद्भवति एवमादिष्वर्थेष्वेतैर्विकल्पनाकार्या लग्नोदयनिरूपणागणितस्कंधसिद्धांतैरेवकार्येति दुश्चिक्यंसहजमिति सह
जस्यतृतीयस्थानस्यदुश्चिक्यसंज्ञा तपश्चनवममिति नवमस्यचतपःसंज्ञा श्चाद्यत्रिकोणंचतत् तदेवनवमंस्थानंत्र्याद्यंत्रिकोणं त्रिशब्दआद्योयस्यत्रि

भवनाधिपदिग्ग्रामपूर्वइहयवनैः प्रबंधतः कथितः तत्सुवगोविनिहन्यादचिरेणमहीपतिः शत्रूनिति दिनकरच्युताद्राशेर्द्वितीयंचवेशिः दिनकरः सूर्यः ते-
नच्युतोयोराशिस्तस्माद्द्वितीयोवेशिसंज्ञः प्रयोजनम् यात्रायांवक्ष्यति वेशिर्विलग्नोपगतोधियासोइति तथाच वेशिस्थानेचसद्ग्रहइत्यादि अत्र
संज्ञाध्यायेयासंज्ञाउक्तास्ताः द्विप्रकाराः तत्रकाचित्संज्ञामात्रप्रयोजनाकाचिन्निदर्शनप्रयोजनातत्रेमाः संज्ञामात्रप्रयोजनाः यथालग्नस्यहोरा
तृतीयस्यदुश्चिक्यम् चतुर्थस्यहिबुकंपंचमस्यत्रिकोणम् सप्तमस्यद्यूनम् नवमस्यत्रिकोणसंज्ञा दशमस्यमेषूरणम् द्वादशस्यरिःफम् चतुर्थाष्ट
मयोश्चतुरस्रसंज्ञा लग्नचतुर्थसप्तमदशमानांकंटककेंद्रसंज्ञा चतुष्टयसंज्ञाच तथाद्वितीयपंचमाष्टमैकादशस्थानानापणफरसंज्ञाः तृतीयषष्ठनवम
द्वादशानामापोक्लिमसंज्ञाः एताःसंज्ञामात्रप्रयोजनाः इमाश्चफलनिर्देशप्रयोजनाः तत्रलग्नस्यतनुःसंज्ञाकल्पसंज्ञाच तेनलग्नाच्छरीरवृद्ध्यन्वेषणमा
रोग्यान्वेषणंचकार्यम् द्वितीयस्यकुटुंबसंज्ञास्वसंज्ञाचतेनतस्माज्ज्ञातिधनान्वेषणंकार्यम् तृतीयस्यसहजसंज्ञाविक्रमसंज्ञाचतेनतस्माद्भ्रातृणांपुरु
षार्थस्यचान्वेषणंकार्यम् चतुर्थस्यबंधुसंज्ञावेश्मसंज्ञासुखसंज्ञाचतेन तस्माद्बंधुसुखगृहाणांचान्वेषणंकार्यम् पंचमस्यबुद्धिसंज्ञापुत्रसंज्ञा
चतेनतस्माद्बुद्धिपुत्रयोरन्वेषणंकार्यम् षष्ठस्यारिसंज्ञाक्षतसंज्ञाच अरिशब्दः शत्रुवाचीक्षतशब्दोव्रणवाची तेनतस्मादरातिव्रणान्वेषणंकार्यम्
सप्तमस्यदारचित्तोत्थयामित्रसंज्ञाचदारशब्दोभार्यावाची चित्तोत्थशब्दः कामवाची यामित्रशब्दोविवाहवाची तेनतस्माद्भार्याकामविवाहान्वेषणं
कार्यम् अष्टमस्यमरणरंध्रसंज्ञाच मरणंमृत्युः रंध्रशब्दः पापपर्यायः तेनतस्मान्मरणपापान्वेषणंकार्यम् नवमस्यसुभगुरुतपः संज्ञाचसु
भशब्देनात्रधर्मोज्ञेयः गुरवोमातृपितृपूर्वकाः तपोव्रतम् तेनतस्माद्धर्ममातृपितृपूर्वकाणांगुरूणांतपसश्चान्वेषणंकार्यं दशमस्यास्पदकर्मसंज्ञा
च आस्पदशब्दः स्थानवाची कर्मास्पदसंज्ञेसुप्रसिद्धे तेनतस्मात्क्रियाभावान्वेषणंकार्यम् एकादशस्यभवायसंज्ञाभवशब्दोत्रविद्यागुणसंपत्प्रा-

कोणस्यतत् त्र्यार्यंत्रिकोणमित्यर्थः त्रिकोणनतदेवनवममिति १९ अधुनाराशिवर्णान्प्रदर्शयन्नाह रक्तइति प्रथमभवनमेष तदाद्येषुमेषादि
षुराशिषुयथाक्रमतेवर्णाभवेयुः तत्रमेषोरक्तोलोहितवर्णः वृषः श्वेतःशुक्लः मिथुनः शुकतनुनिभः हरितइत्यर्थः कर्कटः पाटलपुष्पवर्णः ईषत्कृष्ण
रक्तइत्यर्थः सिंहोधूम्रपाण्डुरीपत्शुक्लः कन्याचित्रानानावर्णाइत्यर्थः तुलाकृष्णः वृश्चिकः कनकसदृशः सुवर्णवर्णः धन्वीपिंगलः पीतवर्णः मकरः
कर्बुरः श्वेतरक्तः शुक्लकपिलव्यामिश्रवर्णः कुंभोबभ्रुः नकुलवर्णसदृशः मीनः स्ववर्णोमत्स्यवर्णइति प्रयोजनम् वियोनिवर्णविज्ञानम् तथाच

रक्तःश्वेतःशुकतनुनिभःपाटलोधूम्रपाण्डुश्चित्रःकृष्णःकनकसदृशःपिंगलःकर्बुरश्च
बभ्रुःस्वच्छःप्रथमभवनाद्येषुवर्णाःप्लवत्वंस्वाम्याशास्थंत्रिकरयुतात्द्वितीयंचवेशिः २०

स्थादितिपस्यातिप्लवत्वंस्वाम्याशास्थमिति स्वामिनः आशास्वाम्याशा आशादिक्तत्रप्लवत्वंप्लवस्यभावःप्लवत्वंसर्वस्यराशेःस्वाम्याशायांप्लव
मित्यर्थः यथामेषवृश्चिकयोर्भौमोधिपतिः तस्यदक्षिणाशादिक् तत्रतौप्लवसंज्ञौ वृषतुलयोः शुक्रोधिपतिः तस्याग्नेयदिक् तत्रतौप्लवर
मिथुनकन्ययोर्बुधोधिपतिस्तस्योत्तरदिक् तत्रतौप्लवसंज्ञौ कर्कटस्यचन्द्रोधिपतिस्तस्यवायवीदिक्वायव्यांप्लवत्वंसिंहस्यादित्योधिपतिस्तस्यपू
र्वादिक् तस्यपूर्वस्यांप्लवत्वम् धन्विमीनयोर्जीवोधिपतिः तस्यैशानीदिक् तत्रतौप्लवसंज्ञौ मकरकुंभयोः सौरोधिपतिस्तस्यपश्चिमादिक् तत्रतौ सं
ज्ञौ एवराशिस्वामिनोयादिक् तस्यतत्रप्लवोज्ञेयःप्रयोजनम् वतनपारिक्ष तत्रिगमनचोपदे अन्यत्रयात्रायामुपयुज्यते तथाचसारावल्यां

वलंकालपुरुषस्यमेषाद्याराशयः शिरःप्रभृत्यंगविभागेनस्थितायावदादित्यादयश्चात्मविभागेनसर्वस्यजगतः स्थिताःप्रयोजनम् पीडितेग्रहे देहवतोपितदंगभावात्मगुणपीडनवक्तव्यं पुष्टेपुष्टिरिति नकेवलंयावज्जन्मनिबलवद्भिर्ग्रहैरेतएवभावा आत्मादयः शुभाभवंति दुर्बले दुर्बलाः किंतुसर्वस्यविपरीतम् तथाचसारावल्याम् आत्मादयोगगनगैर्बलिभिर्बलवत्तराः दुर्बलैर्दुर्बलाज्ञेयाविपरीतंशनेःस्मृतमिति राजानावित्यादि रविरादित्यः शीतगुश्चंद्रः एतौराजानौनृपौ क्षितिर्भूमिरस्याः सुतःपुत्रोंगारकः सनेतासेनापतिः कुमारोबुधः कुमारोयुव राजः राजपुत्रइतिकेचित् सूरिर्बृहस्पतिः दानवपूजितः शुक्रः एतौसचिवौमंत्रिणौ सहस्रांशुः सूर्यस्तस्माज्जातः शनैश्चरः सप्रेष्योदासः

कालात्मादिनकृन्मनस्तुहिनगुःसत्त्वंकुजोज्ञोवचोजीवोज्ञानसुखेसितश्चमदनोदुःखंदिनेशात्मजः राजानौरविशीतगू-
क्षितिसुतोनेताकुमारोबुधःसूरिर्दानवपूजितश्चसचिवौप्रेष्यःसहस्रांशुजः १ हेलिःसूर्यश्चंद्रमाःशीतरश्मिर्हेम्नोविज्ञोबोधन
श्चेंदुपुत्रः आरोवक्रःक्रूरदृक्चावनेयःकोणोमंदःसूर्यपुत्रोसितश्च २

ननुजगत्पालनकरणेशनैश्चरःप्रेष्यःकिमत्रोच्यते प्रेष्योपिस्वकर्मणा पालकएव प्रयोजनं जन्मनिप्रश्नकालेवाबलवानुपचयस्थोग्रहोभवति तदुक्तोराजादिकस्तस्यकार्यसाधकोभवति अन्यथाहानिकरः १ अधुनाव्यवहारा र्थंसूर्यचंद्रांगारकशनैश्चराणांसंज्ञाः शालिन्याह हेलिरिति सूर्यआदित्योहेलिसंज्ञः चंद्रमाः शीतरश्मिसंज्ञः शीताःरश्मयःकिरणाःयस्यसः इंदुपुत्रोबु धःसहेम्नोविज्ञोबोधनः एतास्तस्यसंज्ञाः अवनिर्भूस्तस्यापत्यंसचावनेयोभौमःसआरःवक्रःक्रूरदृक्एताःभौमस्यसंज्ञाःसूर्यपुत्रःसौरःकोणःमंदःअ

मित्राची आयशब्दोर्थवाची तेनतस्मात्तयोरन्वेषणकार्यं व्ययइतिद्वादशस्यारव्यातेनतस्मात्ययान्वेषणकार्यम् तृतीयषष्ठदशमैकादशस्थानानामुपचय
संज्ञा उपचयकरत्वात् इदन्तेषाउपचयकरत्व यदितत्रस्थाः पापाअपिशुभफलप्रदाभवति तथाहि षष्ठस्थानविनासौम्याः सर्वत्रभाववि-
द्धिकराः षष्ठस्थाः पापाः पुनः अरिहानि नकुर्वीतिसतद्धानिंच पापास्तूपचयस्था भाववृद्धिकुर्वाणा अपिषष्ठमुपचयस्थानमाप्य नश्चित्य
वयोरशिसतयोरपिहानिकुर्वंति यतस्तेषामुपचयकराइत्यन्वर्थसंज्ञा उपचयस्थास्तुपापा भावहानिंकुर्वाणा अपिअष्टमद्वादशस्थान
मनिष्टभावस्थानिष्टस्यात् स्थानस्योपचयात्मकत्वाद्वृद्धिमापयति तथाच श्रीदेवकीर्तिः सौम्याःषष्ठेपापास्त्वन्येसकृद्वारिधर्मधीस्थूने कु
र्युर्मान्विपत्तिशोकोगताश्चतद्वृद्धिमिति एतद्दिशोपचयनेनम् विनासर्वत्रोपतिष्ठतेति २० इतिश्रीभट्टोत्पलविरचितायां बृहज्जातकटीकायां
राशिभेदः प्रथमोऽध्यायः १ अथातोग्रहयोनिप्रभेदाध्यायोव्याख्यायते तत्रराज्ञजगद्ग्रहमयमेव प्राक्कालाख्यस्यपुरुषस्यका-
लागानीत्येवमेषादिनाराशिनक्षत्रमयोगविभागः प्रदर्शितः तद्दर्शनेनच ग्रहमयएवासौप्रदर्शितोभवति यतोराशिस्वामिनोग्रहाएव अधुनातस्या
त्मादीन् भावान् ग्रहमयानेकजगत्पालकास्तयाराजादीन्ग्रहमयानेवच शार्दूलविक्रीडितेनाह कमलात्मादिनकृदिति कालस्यात्मा कालात्मा
दिनकरसूर्यः अस्यैवतुहिनगुश्चन्द्रोमनः तुहिनेनहिमनसदृशाः शीतलाः गावोरश्मयोयस्यसतुहिनगुः सत्व कुजोभौम सत्वस्यलक्षणम् भ
थिकारकरसत्वव्यसनाभ्युदयागमे सत्वशब्दोत्रशौर्यपर्यायः यच्चसिंहादीनाप्राप्ति तथाच एकाकिनिवनवासिभिःराजलक्षणानीतिशास्त्र-
हैमतेस्थितेमृगपतौराजेतिगिरः परिणमति उत्कृष्टतरस्वभावेनेत्यर्थः ज्ञोबुधोवचोगिरः जीवोबृहस्पतिः ज्ञानसुखे ज्ञानंचसुखंचज्ञानसु
खे सितः शुक्रोमदनः काम दिनस्येशोदिनेशः सूर्यः [illegible]त्मजः पुनः शनैश्चराद्दुःखम अत्रकाल[illegible]स्यसर्वगतत्वप्रदर्शनार्थं अमूर्त

वलं कालपुरुषस्यमेषाद्याराशयः शिरः प्रभृत्यंगविभागेनस्थितायावदादित्यादयश्चात्मविभागेनसर्वस्यजगतः स्थिता प्रयोजनम् पीडितेग्रहे देहवतोपितदंगभावात्मगुणपीडनवक्तव्यं पुष्टेपुष्टिरिति नकेवलंयावज्जन्मनिबलवद्भिर्ग्रहैरेतएवभावा आत्मादयः शुभाभवंति दुर्बले दुर्बलाः किंतुसर्वस्यविपरीतम् तथाचसारावल्याम् आत्मादयोगगनगैर्बलिभिर्बलवत्तराः दुर्बलैर्दुर्बलाज्ञेयाविपरीतंशनेःस्मृतमिति राजानावित्यादि रविरादित्यः शीतगुश्चंद्रः एतौराजानौनृपौ क्षितिर्भूमिस्तस्याः सुतःपुत्रोंगारकः सनेतासेनापतिः कुमारोबुधः कुमारोयुव राजः राजपुत्रइतिकेचित् सूरिर्बृहस्पतिः दानवपूजितः शुक्रः एतौसचिवौमंत्रिणौ सहस्रांशुः सूर्यस्तस्माज्जातः शनैश्चरः सप्रेष्योदासः

कालात्मादिनकृन्मनस्तुहिनगुः सत्वंकुजोज्ञोवचोजीवोज्ञानसुखेसितश्चमदनोदुःखंदिनेशात्मजः राजानौरविशीतगू-
क्षितिसुतोनेताकुमारोबुधःसूरिर्दानवपूजितश्चसचिवौप्रेष्यःसहस्रांशुजः १ हेलिःसूर्यश्चंद्रमाःशीतरश्मिर्हेम्नोविज्ञोबोधन
श्चेंदुपुत्रः आरोवक्रःक्रूरदृक्चावनेयःकोणोमंदःसूर्यपुत्रोसितश्च २

ननुजगत्पालनकरणेशनैश्चरःप्रेष्य किमत्रोच्यते प्रेष्योपिस्वकर्मणा पालकएव प्रयोजनं जन्मनिप्रश्नकालेवाबलवानुपचयस्थोग्रहोभवति तदुक्तोराजादिकस्तस्यकार्यसाधकोभवति अन्यथाहानिकरः १ अधुनाव्यवहारा र्थंसूर्यचंद्रांगारकशनैश्चराणांसंज्ञाः शालिन्याह हेलिरिति सूर्यआदित्योहेलिसंज्ञः चंद्रमा शीतरश्मिसंज्ञः शीताःरश्मयःकिरणाःयस्यसः इंदुपुत्रोबु धःसहेम्नोविद्ज्ञोबोधनः एतास्तस्यसंज्ञाः अवनिर्भूस्तस्यापत्यंसचावनेयोभौमःसआरः वक्रःक्रूरदृक्एताःभौमस्यसंज्ञाःसूर्यपुत्रः सौरःकोणःमंदःअ

मिवाची आयशब्दोर्थवाची तेनतस्मात्तयोरन्वेषणकार्यं व्ययइतिद्वादशस्याख्यातेनतस्मात्ययान्वेषणकार्यम् तृतीयषष्ठदशमैकादशस्थानानामुपचय
संज्ञा उपचयकरत्वात् इत्यन्तेषाउपचयकरत्व यस्मिन्नस्थाः पापाअपिशुभफलप्रदाभवंति तथाहि षष्ठस्थानविनासौम्याः सर्वत्रभावविरु-
द्धिकराः षष्ठस्थाः पापाः पुनः अरिहानिं नकुर्वंतिक्षतहानिंच पापास्तूपचयस्थाः भावविवृद्धिंकुर्वाणा अपिषष्ठमुपचयस्थानमाप्यतो
वधारीन्क्षतयोरपिहानिंकुर्वंति यतस्तेषामुपचयकरा इत्यन्वर्थसंज्ञा उपचयस्थास्तुपापा भावहानिंकुर्वाणा अपिअष्टमद्वादशस्थानचेत्स
मनिष्टभावस्थानिष्टत्वात् स्थानस्योपचयात्मकत्वाद्वृद्धिंप्रापयंति तथाच श्रीदेवकीर्तिः सौम्याःषष्ठेपापास्तत्रन्यस्करवारि भयधीषूने कु
र्युर्भावविपत्तिंशेषोगताश्चतद्वृद्धिमिति एतद्विशेषवचनम् विनासर्वत्रोपतिष्ठतेति ॥ इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकटीकायां
राशिभेदः प्रथमोऽध्यायः १ अथातोग्रहयोनिप्रभेदाध्यायोव्याख्यायते तत्रचराचरजगद्ग्रहमयमेवआकल्पस्यास्यपुरुषस्यका-
लात्मनीत्येवमेषाद्विनाराशिनक्षत्रमयोगविभागः प्रदर्शितः तत्प्रदर्शनेनचग्रहमयएवासौप्रदर्शितोभवति यतोराशिस्वामिनोग्रहाएव अधुनातस्या
त्मादीन्भावान् ग्रहमयानेवजगतालकास्तथाराजादीन्ग्रहमयानेवच शार्दूलविक्रीडितेनाह कालात्मादिनकृदिति कालस्यात्मा कालात्मा
दिनकृत्सूर्यः अस्यैवतुहिनगुः मनोमनः तुहिनेनहि मनसदृशाः शीतलाः गोवीरश्मयोयस्यसतुहिनगुः सत्व कुजोभौमः सत्वस्यलक्षणम् अ
धिकारकरसत्वव्यसनाभ्युदयागमे सत्वशब्दोयशौर्यपर्यायः यच्चासिंहादीनामस्ति तथाच एकाकिनिवनवासिनिराज्यलक्षणानीतिशास्त्र-
तेसत्वेस्थितेमृगपतौराज्ञीतिगिरःपरिणमति उत्कृष्टतरस्वभावेनेत्यर्थः ज्ञोबुधोवचोगिरः जीवोबृहस्पतिः ज्ञानसुखे ज्ञानंचसुखंचज्ञानसु
खे सितःशुक्रोमदनः कामः दिनस्येशोदिनेशः सूर्यः तस्यात्मजःपुत्रः शनैश्चरोदुःखम् अत्रकालग्रहणंकालस्यसर्वगतत्वप्रदर्शनार्थं अन्यन्

अधुनाग्रहाणांवर्णस्वाम्यंग्रहदेवताश्चदिक्स्वाम्यंसौम्यपापत्वंचशार्दूलविक्रीडितेनाह वर्णाइति ताम्रादयोवर्णाः सूर्यादिग्रहनाथाः सूर्यादयोग्रहनाथाः स्वामिनोयेषांते ताम्रवर्णस्यादित्योनाथः स्वामी सितस्यश्वेतस्यचंद्रः अतिरक्तस्यातिलोहितस्यभौमः हरितस्यशुकवर्णस्यबुधः विशेषेण आसमंतात्पीतस्य हरिद्रासदृशस्यजीवः चित्रस्यनानावर्णस्यशुक्रः असितस्यकृष्णवर्णस्यसौरः प्रयोजनम् दृतनष्टादिद्रव्यवर्णज्ञानम् जन्मनिप्रश्नकालेचोक्तद्रव्यलाभः अन्यथाहानिः ग्रहपूजायांतद्वर्णकुसुमपूजा तथाचयाज्ञवल्क्यः वर्णैर्मंडलकेषुचेति वन्हीत्यादिसूर्यादिनाथाइत्यनुवर्तते सूर्यादीनांनाथाः सूर्यादिनाथाः आदित्यस्यवन्हिरग्निर्नाथः स्वामी चंद्रमसोंबुजलम् भौमस्याग्निजः कुमारः स्वामिकार्तिकेय

वर्णास्ताम्रसितातिरक्तहरितव्यापीतचित्रासितावन्ह्यंब्वग्निजकेशवेंद्रशचिकाःसूर्यादिनाथाःक्रमात्

इत्यर्थः बुधस्यकेशवोविष्णुः गुरोरिंद्रः शतक्रतुः शुक्रस्यशचींद्राणी सौरस्यकः प्रजापतिः ब्रह्माइत्यर्थः प्रयोजनम् ग्रहपूजायां ग्रहोक्तदेवताः पूज्याः तथाचयवनेश्वरः देवाग्रहाणांजलवन्हिविष्णुप्रजापतिस्कंदमहेंद्रदेवी चंद्रार्कचंद्रार्कजभौमजीवशुक्राश्चयदेषुयजेतशश्वत् तथाचौरनामानयनेबलवद्ग्रहोक्तदेवतामार्ययिनाम तथाचयात्रायांग्रहदेवतांसंपूज्य तद्दिशंयायात् तथाचसारावल्याम् ताम्रसितारक्तहरितपीतविचित्रासिताइनादीनाम् पावकजलगुहकेशवशक्रशचीवेधसः पतयः पूर्वादिग्रहदेवास्तन्मंत्रैः समभिपूज्यतामाशाम् धनकनकगजवाहनादीन्प्राप्नोतिनृपोरितः शीघ्रम् प्रागाद्याइति प्रागाद्याः पूर्वप्रथमादिशस्तासांपूर्वादीनांरव्यादयोनाथाः तत्रपूर्वस्यांदिशिरविरादित्योधिपतिः

सित एताः शनैश्चरसंज्ञाः २ अधुनागुरुशुक्रराहुकेतूनांसंज्ञावसंततिलकेनाह जीवइति जीवोबृहस्पतिः सएवागिराः सुरगुरुः सुराःदेवा तेषांगुरुः व-
चसांपतिः ईज्यःपूज्य देवानांएताः बृहस्पतेःसंज्ञा शुक्रोभार्गव सएवभृगु भृगुसुत सित आस्फुजित् चशब्दः समुच्चयार्थः एताः शुक्रस्यसंज्ञा च
हुः स्वर्भानुः सएवतमः अगु नविद्यतेगावोरश्मयोयस्यसः अरश्मिरित्यर्थः असुरोदैत्यः एताराहोःसंज्ञाः शिखीतिकेतुः केतो शिखीतिसंज्ञा ।
स्वाधिपतेयस्यसशिखी अन्यपर्यायलोकादन्यशास्त्रात् उपलभ्य वदेत् ब्रूयात् यथारविस्तीक्ष्णांशुर्दिवाकरोभास्वांस्तीक्ष्णरश्मिर्भानुर्विवस्वानि-
त्यादिकाः सूर्यस्य शशांकः तुहिनगुर्मृगांक शशीनिशाकरोनक्षत्रपतिरित्याद्याश्चंद्रस्य कुजः लोहितोभौमः स्यात्तनयइत्याद्याभौमस्य सौम्योरौ-

जीवोंगिराः सुरगुरुर्वचसांपतीज्यौ शुक्रोभृगुर्भृगुसुतःसितआस्फुजिच्च राहुस्तमोऽगुरसुरश्चशिखीतिकेतुःपर्यायमन्यमुपलभ्य
वदेच्चलोकात् ३ रक्त श्यामोभास्करोगौरइंदुर्नात्युच्चांगोरक्तगौरश्चवक्रः दूर्वाश्यामोज्ञोगुरुर्गौरगात्रःश्यामःशुक्रोभास्करिः कृ-
ष्णदेह ४

हिरण्यरश्मोद्विर्मृगांकतनयइज्ज इत्याद्याबुधस्य सूरिःसुरेंद्रपूज्योवाक्पतिर्देवपुरोहितइंद्रमंत्रीत्याद्यागुरोः भार्गव उशनादैत्येज्यः
असुरगुरुःदैत्यकाशिगित्याद्याः शुक्रस्य यमःरविजःपातंगि छायासुतः इत्याद्याःसौरस्य सैंहिकेयः स्वर्भानुः दानवः अमृतचारः विधुंतुद इत्याद्याराहो-
रिति ३ अधुनाग्रहवर्णान्शार्लिन्याह रक्तश्यामइति रक्तश्चासौश्यामः पाटलपुष्पवर्णइत्यर्थः एवंविधोभास्करः आदित्यः इंदुश्चंद्रोगौरः श्वेतवर्णप्राय
रक्तोगारक्तोनात्युच्चोनातिदीर्घः रक्तगौरः पद्मपभाभः सौम्युधः सदूर्वाश्यामः शाड्वलमृणालवर्णः गुरुर्बृहस्पतिः सगौरगात्रोगौरशरीरः शुक्रःश्यामवर्णोनाति
गौरोनातिश्यामः भास्करी सौरः सकृष्णदेहोऽसितशरीरः वर्णप्रयोजनं सर्वग्रहेष्वयोबलवान् तद्वर्णस्तत्कालजातोभवति प्रश्नकालेचौरादेराप ५

अधुनाग्रहाणांवर्णस्वाम्यंग्रहदेवताश्वदिक्स्वाम्यंसौम्यपापत्वंचशार्दूलविक्रीडितेनाह वर्णाइति ताम्रादयोवर्णाः सूर्यादिग्रहनाथाः सूर्यादयोग्रह-नाथाः स्वामिनोयेषांते ताम्रवर्णस्यादित्योनाथः स्वामी सितस्यश्वेतस्यचंद्रः अतिरक्तस्यातिलोहितस्यभौमः हरितस्यशुकवर्णस्यबुधः विशेषेण आसमंतात्पीतस्य हरिद्रासदृशस्यजीवः चित्रस्यनानावर्णस्यशुक्रः असितस्यकृष्णवर्णस्यसौरः प्रयोजनम् द्दतनष्टादिद्रव्यवर्णज्ञानम् जन्मनिप्रश्नकालेचोक्तद्रव्यलाभः अन्यथाहानिः ग्रहपूजायांतद्वर्णकुसुमपूजा तथाचयाज्ञवल्क्यः वर्णैर्मंडलकेषुचेति वन्हीत्यादिसूर्यादिनाथाइत्यनुवर्तते सूर्यादीनांनाथाः सूर्यादिनाथाः आदित्यस्यवन्हिरग्निर्नाथःस्वामी चंद्रमसोंबुजलम् भौमस्याग्निजः कुमारः स्वामिकार्तिकेय

वर्णास्ताम्रसितातिरक्तहरितव्यापीतचित्रासितावन्ह्यंबग्निजकेशवेंद्रशचिकाःसूर्यादिनाथाःक्रमात्

इत्यर्थः बुधस्यकेशवोविष्णुः गुरोरिंद्रः शतक्रतुः शुक्रस्यशचींद्राणी सौरस्यकः प्रजापतिः ब्रह्माइत्यर्थः प्रयोजनम् ग्रहपूजायां ग्रहोक्तदेवताः पूज्याः तथाचयवनेश्वरः देवाग्रहाणांजलवन्हिविष्णुप्रजापतिस्कंदमहेंद्रदेवी चंद्रार्कचंद्रयर्कजभौमजीवशुक्राश्वयक्षेषुयजेतशश्वत् तथाचोरनामानयनेबलवद्ग्रहोक्तदेवतामार्गयनाम तथाचयात्रायांग्रहदेवतांसंपूज्य तद्दिशंयायात् तथाचसारावल्याम् ताम्रसितारक्तहरितपीतविचित्रासिताइनादीनाम् पावकजलगुहकेशवशक्रशचीवेधसः पतयः पूर्वादिग्रहदेवास्तन्मंत्रैः समभिपूज्यतामाशाम् धनकनकगजवाहनादीन्प्राप्नोतिनृपोरितः शीघ्रम् प्रागाद्याइति प्रागाद्याः पूर्वप्रथमादिशस्तासांपूर्वादीनारव्यादयोनाथाः तत्रपूर्वस्यांदिशिरविरादित्योधिपतिः

पूर्वदक्षिणस्यां शुक्रः दक्षिणस्यां लोहितो गारकः दक्षिणपश्चिमायां तमो राहुः पश्चिमायां सौरिः शनैश्चरः पश्चिमोत्तरस्यामिंदुश्चंद्रः उत्तरस्यां वित्तबुधः उत्तरपूर्वस्यां सूरिर्वृहस्पतिः प्रयोजनम् केंद्रस्थैर्ग्रहैः सूतिकागृहद्वारज्ञानम् हृतनष्टादिषु चौरादेर्गमनं च क्षीणेंदु इति क्षीणश्चासाविंदुश्च क्षीणेंदुः कृष्णाष्टम्यर्वाक् शुक्लाष्टम्यर्वाक् यावत् क्षीणश्चंद्रः परतः पूर्णः आयुर्दायविधौ कृष्णपक्षे त्रयोदश्यां तावत्प्रभृति यावदमावास्यांते सूर्यमंडलात् नोद्गतस्तावत् क्षीण इति यस्याधवनेश्वरः चंद्रस्य पापत्वं न कदाचिदपीच्छंति तदाश्रयम् मासे तु शुक्लप्रतिपत्प्रवृत्तेः पूर्वे शशी मध्यबलो दशाहे श्रेष्ठो द्वितीये ल्पबलस्तृतीये सौम्यैस्तु दृष्टो

प्रागाद्या रविशुक्रलोहिततमःसौरेंदुवित्सूरयः क्षीणेंदुर्कमहीसुतार्कतनयाः पापा बुधस्तैर्युतः ५

बलवान्सदैव तथा च क्रूरग्रहोर्कः कुजसूर्यजौ च पापौ शुभाः शुक्रशशांकजीवाः सौम्यश्च सौम्योच्यति मिश्रितोन्यैर्वर्गैस्तु तुल्यप्रकृतित्वमेतीति तस्मा देतावत् क्षीणेंदु इति अर्क आदित्यः महीसुतो गारकः अर्कतनयः सौरिः एते सदैव पापाः बुधस्तैर्युतस्तेषामेकतमेन युक्तः पाप एव सौम्याः शेषाः शुक्लपक्षाष्टम्यर्वात् कृष्णपक्षाष्टम्यर्वाक् यावत्चंद्रः सौम्यो बुधः पापवीक्षितयुतः पाप एव जीवशुक्रौ सदैव सौम्याविति प्रयोजनम् पापसौम्यग्रहबलाज्जातः पापात्मकः सौम्यस्वभावश्च भवति

अधुनाग्रहाणांप्रकृतिविभागंमहाभूताधिपत्यंत्रोटकेनाह बुधसूर्यइति बुधश्चांद्रिः सूर्यसुतः शनिः एतौनपुंसकाख्यौनपुंसकनामानौ शशीचंद्रः शुक्रोभार्गव एतौद्वौयुवतिसंज्ञौ शेषारविजीवभौमानराः पुरुषसंज्ञाः पुरुषनामानः प्रयोजनं जन्मनिचिंतायांहृतनष्टादिषुबलवंतः स्वस्वरूपमेवकुर्वंति तेषामुपतापे तदाश्रितानामुपतापः शिखिभूखपयोमरुद्गणानामिति शिख्यादीनांपंचानांमहाभूतानां पंचग्रहाभूमिसुतादयः क्रमेणवशिनः तद्यथा शिखिनोग्नेर्भूमिसुतोंगारकोवशीभौमोग्नेः स्वामीत्यर्थः एवंभूमेर्बुधः खस्याकाशस्यजीवः पयसोऽभसः शुक्रः मरुतोवायोः शनैश्चरः गणग्रहणमत्रवृत्तपूरणार्थंनत्वादित्यचंद्रयोः कस्मान्नोक्तामित्यत्रोच्यते तयोःपूर्वमेवोक्त वन्ह्यंबितितावेवप्रसिद्धौ प्रयोजनम् स्वदशायांमहा

बुधसूर्यसुतौनपुंसकाख्यौशशिशुक्रौयुवतीनराश्चशेषाः शिखिभूखपयोमरुद्गणानांवशिनोभूमिसुतादयःक्रमेण ६ विप्रा
दितःशुक्रगुरूकुजार्कौशशीबुधश्चेत्यसितोऽन्त्यजानाम् चंद्रार्कजीवाज्ञसितौकुजार्कीयथाक्रमंसत्वरजस्तमांसि ७

भूतकृतांछायांव्यंजयंति वक्ष्यतिच छायांमहाभूतकृतांचसर्वइति ६ अधुनाग्रहाणांब्राह्मणादिवर्णाधिपत्यंगुणविभागंचोपजातिकयाह विप्रादितोब्राह्मणादेर्वर्णचतुष्टयस्यस्वामिनोग्रहाधिपतयः शुक्रोभार्गवः गुरुर्बृहस्पतिरेतौद्वौब्राह्मणानामधिपती कुजोभौमः अर्कआदित्य एतौद्वौक्षत्रियाणां शशीचंद्रोवैश्यानां शूद्राणांबुधः असितः शनैश्चरः अंत्यजानांवर्णप्रतिलोमभवानांचांडालमागधनिशाचरादीनां प्रयोजनम् हृतनष्टादिषुग्रहबलाच्चौरादीनांग्रहोक्तवर्णप्रभावः एषामुपघातेतद्वर्णोपघातः तथाचसत्यः गुरुशुक्रौरविरक्तौचंद्रः सौम्यः शनैश्चरश्चेति विप्रक्षत्रियविट्शूद्रसंकराणांप्रमुत्वकराः अजयेजयेथतुष्टात्प्रीतौ वित्तनाशनेलाभेतेभ्यस्तेभ्यश्चकुर्युर्गुणांश्चदोषांश्चपक्षांस्तान् चंद्रार्क-

पूर्वदक्षिणस्याशुक्रः दक्षिणस्यालोहितोंगारकः दक्षिणपश्चिमायातमोराहुः पश्चिमायासौरः शनैश्वरः पश्चिमोत्तरस्यामिंदुश्चंद्रः उत्तरस्यामितज्ञुधःउ
त्तरपूर्वस्यासूरिर्बृहस्पतिः प्रयोजनम् नेद्रस्थैर्ग्रहैः सूतिकागृहद्वारज्ञानम् हृतनष्टादिपुचौरादेर्गमनञ्च क्षीणेद्वर्केति क्षीणश्चासाविंदुश्चक्षीणेंदुः कृष्णा
ष्टम्यर्दाच्छुक्लाष्टम्यर्द्धंयावत् क्षीणश्चंद्रः परतःपूर्णः आचार्यपरिधौकृष्णपक्षत्रयोदश्यांतारभ्यमृतियावदमावास्यांते सूर्यमंडलात्नोद्गतस्तावत् क्षीणइति
यस्याधवनेश्वरः चंद्रस्यपापत्वनकदाचिदपीच्छतितद्वाक्यम् मासेतुशुक्लप्रतिपत्प्रवृत्ते पूर्वेशशीमध्यबलोदशाहे श्रेष्ठोद्वितीयेल्पबलस्तृतीयेसौम्यैस्तुदृष्टो

प्रागाद्यारविशुक्रलोहिततमःसौरेंदुवित्सूरयः क्षीणेंद्वर्कमहीसुतार्कतनयाःपापाबुधस्तैर्युतः ५

बलवान्स्मरेत तथाच क्रूरग्रहोर्कः कुजसूर्यजौत्वपापौशुभाः शुक्रशशांकजीवाः सौम्यश्चसौम्योच्यतिमिश्रितोन्यैर्वर्गैस्तुतुल्यप्रकृतित्वमेतीति तस्मा
देवाष्टत् क्षीणइति अर्कआदित्यः महीसुतोंगारकः अर्कतनयःसौरः एतेसदैवपापाः बुधस्तैर्युतस्तेषामेकतमेनयुक्तः पापएव सौम्याः शेषाः शुक्लपक्षाष्ट
म्यर्द्धात् कृष्णपक्षाष्टम्यर्द्धंयावत्चंद्रः सौम्योबुधः पापवीक्षितयुतः पापएव जीवशुक्रौसदैवसौम्याविति प्रयोजनम् पापसौम्यग्रहबलाज्जातः
पापात्मकः सौम्यस्वभावश्चभवति ५ ६ ७ ७ ७ ७ ७

प्रभूतमारुतश्लेष्मा प्राज्ञोमेधावी मृदुवाक्कोमलभाषी शुभदृक् दर्शनीयाक्षः एवंविधः शशीचंद्रः ८ अथअंगारकबुधयोः स्वरूपंस्वागतयाह क्रूराइति क्रूरादुष्टादृक् दृष्टिर्यस्यसक्रूरदृग् अंगारकः सचतरुणमूर्त्तिः नित्ययौवनोपेताकारविग्रहः उदारोदाता पैत्तिकः पित्तबहुलः सचपलोतीवास्थिरचित्तः कृशमध्यस्तनूदरः एवंविधोंऽगारकः भौमः श्लिष्टवाकूइत्यादि श्लिष्टवाकूगद्गदभाषी सततहास्यरुचिः नित्यपरिहास्यशीलः पित्तमारुतकफप्रकृतिर्दोषत्रयोल्बणस्वभावः एवंविधोज्ञोबुधः ९ अथजीवशुक्रयोः स्वरूपंवंशछंदसिकेनाह बृहत्तनुरिति बृहत्तनुः स्थूलशरीरः मूर्धजाः केशाः ईक्षणे नयनेचकपिलपिंगलेचयस्यकपिलकेशः कातराक्षइत्यर्थः श्रेष्ठमतिर्धर्मानुगप्रज्ञः कफात्मकः कफाधिकशरीरः श्लेष्मात्मा एवंविधोबृ

क्रूरदृक्तरुणमूर्तिरुदारःपैत्तिकःसुचपलःकृशमध्यः श्लिष्टवाक्सततहास्यरुचिर्ज्ञःपित्तमारुतकफप्रकृतिश्च ९ बृहत्तनुःपिंगलमूर्धजेक्षणोबृहस्पतिःश्रेष्ठमतिःकफात्मकः भृगुःसुखीकांतवपुःसुलोचनःकफानिलात्मासितवक्रमूर्धजः १०

हस्पतिः भृगुरित्यादि सुखीनित्यं सुखासक्तः कांतवपुर्दर्शनीयशरीरः सुलोचनः शोभनाक्षः कफानिलात्मा श्लेष्ममारुतप्रकृतिः असितवक्रमूर्द्धजः असिताः कृष्णावक्राःकुटिलाः मूर्द्धजाः केशाः यस्यकृष्णकुटिलकेशइत्यर्थः एवंविधोभृगुःशुक्रः १० अधुनाशनैश्चरस्वरूपंस्नाय्वादिसारत्वंचग्रहाश्रयंवसंततिलकेनाह मंदोलसइति अलसः क्रियास्वपटुः कपिलदृक् कातराक्षः कृशःदुर्बलःदीर्घः उच्चःतगात्रंयस्यगात्राणिवासः दुर्बलोच्चदेहः स्थूलद्विजोबृहद्दंतः परुषरोमकचः रूक्षतनूरुहकेशः अनिलात्मा वातप्रकृतिः एवंविधोमंदः शनैश्चरः स्नाय्वस्थीत्यादि मंदादीनांग्रहाणांस्नाय्वादिसारत्वं स्नाय्वस्थिनीप्रसिद्धार्थेदेहवर्त्ताशनैश्चरादित्यौ स्नायुर्मंदः शनैश्चरः शिरासारः अस्थिअर्कः आदित्यःअस्थिसारः असृग्रुधिरंतच्चंद्रमाः त्वक्चर्मतद्बुधः अथशब्दआनंतर्यार्थेशुक्रंरेतःतच्छुक्रः वसामेदस्तत्सु

जीवादित्यादि चन्द्रः शशी अर्क आदित्यः जीवो बृहस्पतिः एते सत्वसंज्ञाः सौम्यो बुधः सितः शुक्रः एतौ द्वौ रजःसंज्ञौ कुजो ऽङ्गारकः आर्किः सौरिः एतौ द्वौ तमःसंज्ञौ एते यथाक्रमं सत्वादिगुणाधिपतयो ग्रहाः प्रयोजनं सत्वरजस्तमोवान् शिशुर्योऽस्य भास्करस्तादृगितिस्वजातके अन्ये पुनः ग्रहबलाद्गुणं यति तथा च वीर्यैर्युतैः बलवद्भिस्तद्गुणो भवेत् जात इति अत्राचार्यस्य यवनेश्वरेण सह मतभेदः तेन भौमः सात्विक उक्तः तथा च तद्वाक्यं सत्वाधिका भास्करभौमजीवाः सुखात्मको राजसिकः शशी च शनैश्चरः तामसिको बुधस्तु संयोगतो नोल्लभते विशेषान् आचार्यस्य सत्यवचनमभिमतं तथा च सत्यः तामसिकौ कुजसौरी राजसिकौ भार्गवः शशिसुतश्च जीवशशिभास्कराः सात्विका ग्रहवत् प्रकृतयो नृणां एवं पंचमतेनाचार्यस्य यवनेश्वरेण सह मतभेदस्तत्र सत्यमतमपि अथ पूर्वमतमभिहितं सत्वकुजचंद्रार्कजीवाः पुनः किमित्युक्तमुच्यते इह गुणवचनः सत्वशब्दस्तत्र शौर्यपर्या

मधुपिंगलदृक्चतुरस्रतनुः पित्तप्रकृतिः सविताल्पकचः तनुवृत्ततनुर्बहुवातकफः प्राज्ञश्च शशी मृदुवाक्शुभदृक् ८

यः कार्याकार्यप्रवृत्तीनां सिंहादीनामप्यस्ति येन एकाकिनोपि वनवासिनः तथा च एकाकिनि वनवासिन्यराजलक्ष्मणि नीतिशास्त्रज्ञे सत्वोच्छ्रिते मृगपतौ राजेति गिरः परिणमति अथ गुणस्वरूपं यः सात्विकस्तस्य दयास्थिरत्वं सत्यार्जवं ब्राह्मणदेवभक्तिः रजोधिकः काव्यकलाशतज्ञः स सक्तचित्तः पुरुषोतिशूरः तमोधिको वञ्चयिता परेषां मूर्खोऽलसः क्रोधपरोतिनिद्र इति ७ अथ चन्द्रार्कयोः स्वरूपं चोटकेनाह मधुपिंगलदृगिति मधुवत्पिंगला दृष्टिर्यस्य सः ईषल्लोहिताक्षः चतुरस्रतनुः प्रसारितभुजद्वयप्रमाणसमोच्छ्रायः पित्तप्रकृतिः पित्ताधिकः अल्पकचः विरलकेशः ए-

प्रभूतमारुतश्लेष्मा प्राज्ञोमेधावी मृदुवाक्कोमलभाषी शुभदृक् दर्शनीयाक्षः एवंविधः शशीचंद्रः ८ अथअंगारकबुधयोः स्वरूप...
क्रूराइति क्रूरादुष्टा दृक् दृष्टिर्यस्यसक्रूरदृग् गारक. सचतरुणमूर्त्तिः नित्यंयौवनोपेताकारविग्रहः उदारोदाता पैत्तिकः पित्तबहुलः सच्चपलोतीवा-
स्थिरचित्त कृशमध्यस्तनूदरः एवंविधोऽगारक. सौमः श्लिष्टवाकूइत्यादि श्लिष्टवाकूगद्गदभाषी सततहास्यरुचिः नित्यंपरिहास्यशीलः पित्तमा
रुतकफप्रकृतिर्दोषत्रयोल्बणस्वभाव एवंविधोज्ञोबुधः ९ अथजीवशुक्रयोः स्वरूपंवंशछंदसिकेनाह बृहत्तनुरिति बृहत्तनुः स्थूलशरीरः मूर्धजाः
केशाः ईक्षणे नयनेचकपिलपिंगलेचयस्यकपिलकेशः कातराक्षइत्यर्थः श्रेष्ठमतिर्धर्मानुगप्रज्ञः कफात्मकः कफाधिकशरीरः श्लेष्मात्मा एवंविधोबृ

क्रूरदृक्तरुणमूर्तिरुदारः पैत्तिकः सुचपलः कृशमध्यः श्लिष्टवाक्सततहास्यरुचिर्ज्ञः पित्तमारुतकफप्रकृतिश्च ९ बृहत्तनुः पिंगल
मूर्धजेक्षणोबृहस्पतिः श्रेष्ठमतिः कफात्मकः भृगुः सुखीकांतवपुः सुलोचनः कफानिलात्मासितवक्रमूर्धजः १०

हस्पतिः भृगुरित्यादि सुखीनित्यं सुखासक्तः कांतवपुर्दर्शनीयशरीरः सुलोचनः शोभनाक्षः कफानिलात्मा श्लेष्ममारुतप्रकृति असितवक्रमूर्द्धजः असिता कृष्णावक्राः कुटिलाः
मूर्द्धजा केशा यस्यकृष्णाकुटिलकेशइत्यर्थ एवंविधोभृगु शुक्रः १० अधुनाशनैश्चरस्वरूपस्नाय्वादिसारत्वंचग्रहाश्रयवसंततिलकेनाह मदोलसइति
अलस क्रियास्वपटु कपिलदृक् कातराक्षः कृशदुर्बलं दीर्घ उच्चरंतगात्रंयस्य गात्राणिवास दुर्बलोच्चदेहः स्थूलद्विजोबृहद्दंतः परुषरोमकचः रूक्षतनूरु
हकेश अनिलात्मा वातप्रकृति एवंविधोमंद शनैश्चरः स्नाय्वस्थीत्यादि मंदादीनांग्रहाणांस्नाय्वादिसारत्वं स्नाय्वस्थिनीप्रसिद्धार्थेदेहवतांशनैश्चरादित्यौ
स्नायुर्मंद शनैश्चर शिरासार अस्थिअर्कः आदित्यः अस्थिसारः असृग्रुधिरंतच्चंद्रमाः त्वक्चर्मतद्बुधः अथशब्दआनंतर्यार्थे शुक्रंरेतः तच्छुक्रः वसामेदस्तत्सु

जातकेउक्तं अर्कादिताम्रमणिहेमयुक्तिरजतानिमौक्तिकंलोह वक्तव्यं बलवद्भिः स्वस्थानेजीवेपि तथाचबादरायणः अर्कस्यताम्रंमणयोहिमांशोर्भौ
मस्यहेमेंदुसुतस्ययुक्तिः जीवस्यरौप्यंस्वगृहेस्थितस्यतस्यैवहेमोशनसश्चमुक्ता तीक्ष्णांसुदेहप्रभवस्यसौसंकृष्णायसंचप्रवदंतितज्ज्ञाः प्रयोजनं सू
तिकागृहेबलवद्ग्रहेद्रव्यकर्ताहृतनष्टादिचिंतायांचतद्द्रव्यनाशादिपरिज्ञानं तच्छुभदशायांतस्मिन्नुपचयस्येतदाप्तिः उक्तविपरीतेहानिः द्रेष्काणैरित्या-
दि अत्रशकारादिभिर्गुपर्यंतैर्वर्णैः संज्ञाद्यैः शनैश्चरप्रभृतीनांगुर्वंतानांवृत्तानुरोधान्निर्देशः कृतः शनैश्चरस्शुक्ररुधिरचंद्रबुधगुरुषूद्य त्स्कलग्नगतेषु
शिशिराद्यः षडर्तवोज्ञेयाः तत्रशकारोपलक्षितः शनैश्चरः तस्मिन्नुदयेलग्नस्थेशिशिरऋतुर्विज्ञेयः शुकारोपलक्षितः शुक्रः तस्मिन्नुदयेवसंतः रु
कारोपलक्षितोरुधिरोभौमस्तस्मिन्नुदयेग्रीष्मः चकारोपलक्षितश्चंद्रस्तस्मिन्नुदयेवर्षाज्ञेयः ज्ञोबुधस्तस्मिन्नुदयेशरत् गुकारोपलक्षितोगुरुस्तस्मि
न्नुदयेहेमंतः आदित्येप्युदयेग्रीष्मः तथाचबादरायणः ग्रीष्ममथप्रवदंति कुजार्काविति द्रेष्काणैरित्यस्यवाइत्यनेनव्यवहितेनसंबंधः द्रेष्काणैर्वोदय
द्भिः शनैश्चरादिसंबंधिभिः शिशिराद्योज्ञेयाः एतदुक्तंभवति लग्नेग्रहासंभवेशनैश्चरेद्रेष्काणेलग्नगतेशिशिरः एवंशुक्रद्रेष्काणेवसंतः भौमद्रेष्काणेग्री
ष्मः रविद्रेष्काणेग्रीष्मः एवंचंद्रद्रेष्काणेवर्षाः बुधद्रेष्काणेशरत् जीवद्रेष्काणेहेमंतः अत्रचमुख्योग्रहोदयेनर्तुनिर्देशः कर्तव्यः तदभावेद्रेष्काणेनेतिज्ञात
व्यम् वन्हीनामुदयोपिद्रेष्काणेनैव केचिद्वन्हीनामुदयेबलवद्ग्रहेणेतिव्याचक्षते तथाचमणित्थः ह्यायैर्लग्नोपगतैर्योबलवान्तद्ग्रहर्तुनिर्देशइति तत्रेतज्ज्ञा
तं लग्नेयोग्रहस्थितस्तदुक्तऋतुर्वाच्यः बहुषुलग्नगतेषुयोबलवान् ग्रहाभावेद्रेष्काणपतेर्ऋतुनिर्देशः प्रयोजनंनष्टजातकेऋतुनिर्देशः इतिहृतनष्टादिचिं
तायांचेति अत्राचार्येणग्रहाणांशाखाधिपत्यंनोक्तं उक्तंचस्वल्पजातके ऋगथर्वसामयजुषामधिपागुरुसौम्यभौमसिताः ऋग्वेदाधिपतिर्गुरुः अथ
र्ववेदाधिपतिः सौम्योबुधः सामवेदाधिपतिर्भौमः यजुर्वेदाधिपतिःशुक्रःप्रयोजनं बलवतिशाखाधिपेब्राह्मणादिस्तच्छाखापाठकोभवति ब्राह्मणो

जातकेउक्तं अर्कादिताम्रमणिहेमयुक्तिरजतानिमौक्तिकंलोहं वक्तव्यं बलवद्भिः स्वस्थानेजीवेपि तथाचबादरायणः अर्कस्यताम्रंमणयोहिमांशोर्भौ
मस्यहेमेंदुसुतस्ययुक्तिः जीवस्यरौप्यंस्वगृहेस्थितस्यतस्यैवहेमोशनसश्चमुक्ता तीक्ष्णांशुदेहप्रभवस्यसीसंकृष्णायसंचप्रवदंतितज्ज्ञाः प्रयोजनं सू
तिकागृहेबलवद्ग्रहेद्रव्यकर्ताहृतनष्टादिचिंतायांचतद्द्रव्यनाशादिपरिज्ञानं तच्छुभदशायांतस्मिन्नुपचयस्थेतदाप्तिः उक्तविपरीतेहानिः द्रेष्काणैरित्या-
दि अत्रशकारादिभिर्गुपर्यंतैर्वर्णैः संज्ञाद्यैः शनैश्चरप्रभृतीनांगुर्वंतानांवृत्तानुरोधान्निर्देशः कृतः शनैश्चरशुक्ररुधिरचंद्रबुधगुरुषूदयत्सकलग्नगतेषु
शिशिरादयः षड्तवोज्ञेयाः तत्रशकारोपलक्षितः शनैश्चरः तस्मिन्नुदयेलग्नस्थेशिशिरऋतुर्विज्ञेयः शुकारोपलक्षितः शुक्रः तस्मिन्नुदयेवसंतः रु
कारोपलक्षितोरुधिरोभौमस्तस्मिन्नुदयेग्रीष्मः चकारोपलक्षितश्चंद्रस्तस्मिन्नुदयेवर्षाज्ञेयः ज्ञोबुधस्तस्मिन्नुदयेशरत् गुकारोपलक्षितोगुरुस्तस्मि
न्नुदयेहेमंतः आदित्येप्युदयेग्रीष्मः तथाचबादरायणः ग्रीष्ममथप्रवदंति कुजार्काविति द्रेष्काणैरित्यस्यवाइत्यनेनव्यवहितेनसंबंधः द्रेष्काणैर्वोदय
द्भिः शनैश्चरादिसंबंधिभिः शिशिरादयोज्ञेयाः एतदुक्तंभवति लग्नेग्रहासंभवेशनैश्चरेद्रेष्काणेलग्नगतेशिशिरः एवंशुक्रद्रेष्काणेवसंतः भौमद्रेष्काणेग्री
ष्मः रविद्रेष्काणेग्रीष्मः एवंचंद्रद्रेष्काणेवर्षाः बुधद्रेष्काणेशरत् जीवद्रेष्काणेहेमंतः अत्रचमुख्योग्रहोदयेनर्तुनिर्देशः कर्तव्यः तदभावेद्रेष्काणेनर्तुज्ञात
व्यम् वन्हीनामुदयोपिद्रेष्काणेनैव केचिद्वन्हीनामुदयेबलवद्ग्रहेणेतिव्याचक्षते तथाचभणित्थः ह्याधेर्लग्नोपगतेर्योबलवान्तद्वहृतुर्निर्देशइति तत्रैतज्ज्ञा
तं लग्नेयोग्रहस्थितस्तदुक्तऋतुर्वाच्यः बहुषुलग्नगतेषुयोबलवान् ग्रहाभावेद्रेष्काणपतेर्ऋतुनिर्देशः प्रयोजनंनष्टजातकेऋतुनिर्देशः इतिहृतनष्टादिचिं
तायांचेति अत्राचार्येणग्रहाणांशाखाधिपत्यंनोक्तं उक्तंचस्वल्पजातके ऋगथर्वसामयजुषामधिपागुरुसौम्यभौमसिताः ऋग्वेदाधिपतिर्गुरुः अथ
र्ववेदाधिपतिः सौम्योबुधः सामवेदाधिपतिर्भौमः यजुर्वेदाधिपतिःशुक्रः प्रयोजनं बलवतिशाखाधिपेब्राह्मणादिस्तच्छाखापाठकोभवति ब्राह्मणे

चौरैर्ज्ञाते शास्त्रवित्तानम् अनिष्टस्थानस्थेग्रहे तन्वर्चैः शान्तीरिति १२ अथ ग्रहाणां दृष्टिस्थानानि निसर्गदृष्टिफलं भिन्नमहर्षिणयाह त्रिदशेति यस्मिन्स्थाने-
ग्रहाः स्थितास्तस्मात्त्रिदशादीनि स्थानानि चरणाभिवृद्धित पादवृध्या अवलोकयति ग्रहो यस्मिन्राशौ स्थितः तस्माद्यत्तृतीयदशमराशी यौ तौ चरणपादे
न चतुर्थभागदृष्ट्या अवलोकयति एवं त्रिकोणस्थौ नवपञ्चमस्थानगतावर्धदृष्ट्या चतुरस्रे अष्टमचतुर्थे अष्टमचतुर्थस्थानस्थो पादहीनदृष्ट्या सप्तमगृह
परिपूर्णदृष्ट्या चरणाभिवृद्धितः अत्रापि शब्दो वीप्सां द्योतयति चरणवृद्ध्या पादवृध्येत्यर्थः यावत्सा दृष्ट्या पश्यन्ति तावत्फलं प्रयच्छन्ति तथान्यस्वल्पजो
त के दशमतृतीये नवपञ्चमे चतुर्थाष्टमे फलं न पश्यति पादवृद्ध्या फलानि निवेदयन्ति अथ यदि ग्रहोऽनुक्तस्थानानि न पश्यतीति तथान्यसाधवस्या

त्रिदशत्रिकोणचतुरस्रसप्तमान्यवलोकयन्ति चरणाभिवृद्धितः रविजामरेज्यरुधिराः परे च ये क्रमशो
भवन्ति किल वीक्षणाधिकाः १३

गं पश्यति रविजस्तृतीयदशमे त्रिकोणमपि जीवः चतुरस्रमपि कुज सितार्कबुधहिमकराः कलत्रं च तथा च यवनेश्वरः होपश्चिमौ पष्ठमयूहितीयस
स्थानराशौ परित्यज्य राशि शेषान्ग्रहः पश्यति सर्वकालमिषुपु चैषाभिहिताद्विशा यामित्रमे दृष्टिफलं समयस्तु पादहीनं चतुरस्रयोश्च त्रिकोणयोर्दृष्टि
फलार्धमाहुर्दशमत्र्यसन्ने दशमे च पादम् रविजामरेज्यरुधिरा इति किलेत्यागमसूचने चरणाभिवृद्धित इत्यनुवर्तते एते रविजादयश्चरणाभिवृद्धि
तः पादोपचयाद्वीक्षणे दर्शने क्रमशो ऽधिकफलप्रदा भवन्ति रविजः सौरः सुदर्शने पादफलप्रदः अपरे ज्योतिर्गुरुस्त्रिकोणे अर्धफलप्रदः रुधिरोऽङ्गारकः सार
हीनफलप्रदः अपरे च बुधशुक्रचन्द्रास्तेन वीक्षणेऽपि सम्यक्फलप्रदाः एतन्नैसर्गिकग्रहाणां दृष्टिफलं स्थानवशात्तेषां यथास्वदृष्टिफलं पूर्णम् एतन्मतेऽन्यास

क्षते अपरेतु आहुः स्थानफलमेतत् तेनत्रिदशादिस्थानगतान् ग्रहराशीन्पश्यंति रविजादयोदर्शनेधिकफलप्रदाभवंति तद्यथा तृतीयदशमस्थान् ग्रहान् राशीन्वा शनैश्चरः पश्यन्येभ्योग्रहेभ्योधिकफलप्रदोभवति परिपूर्णंपश्यतीत्यर्थः एवंत्रिकोणस्थान्जीवः चतुरस्रगान्भौमः सप्तमस्थान्सूर्येन्दुबुधशुक्राः एतच्चबहुतराणांआचार्याणांमतं तथाचभगवान्गार्गिः दुश्चिक्यस्वगतान् सौरस्त्रिकोणस्थान् बृहस्पतिः चतुर्थाष्टमगान्भौमः शेषाः सप्तमसंस्थितान् भवंतिवीक्षणे नित्यमुक्ताधिकफलाग्रहाइति १३ अधुनाग्रहाणांकालनिर्देशंचवैतालीयेनाह अयनइति भास्करादादित्यात्प्रभृत्ययनादिकालनिर्देशः तत्रायननिर्देशोभास्करात्सूर्यात् क्षणोमुहूर्तस्तन्निर्देशश्चंद्रात् वासरोदिवसस्तन्निर्देशोभौमात् ऋतुर्मासद्वयात्मकस्तन्निर्देशोबुधात् मासनिर्देशोजीवात् मासार्द्धपक्षस्तन्निर्देशः शुक्रात् समः संवत्सरस्तन्निर्देशः सौरात् प्रयोजनं प्रश्नलग्नेयस्यग्रहस्यनवांशकोदयः सः ग्रहस्तस्मान्नवां

अयनक्षणवासरर्तवोमासोर्द्धंचसमाश्चभास्करात् कटुकलवणतिक्तमिश्रितामधुराम्लौचकषायइत्यपि १४

शकाद्यावत्संख्येनवांशकेभवतितावत्संख्योऽयनादिकोग्रहोपलक्षितः कालशुभाशुभफलपंक्तौवाच्यः अन्येत्वेवंव्याचक्षते लग्नेयावत्संख्योनवांशकउदितस्तावत्संख्योऽयनादिकालोंशपतिवशाद्वक्तव्यः तथाचमणित्थः लग्नांशकपतितुल्यः कालोलग्नोदितांशसमतुल्यः वक्तव्योरिपुविजयेगर्भाधानेथकार्यसंयोगेवक्तव्यः कटुकलवणेत्यादि भास्करादादित्यात् कटुकादिरसनिर्देशः तत्रादित्यात्सूर्यात्कटुकस्यरसस्यनिर्देशः कटुकमरीचादि चंद्रात्लवणस्य भौमात्तिक्तस्य तिक्तलिंबादिबुधान्मिश्रस्य षड्रसस्य जीवान्मधुरस्यमिष्टस्य शुक्रादाम्लस्य सौरात्कषायस्यप्रयोजनम् आधानकालेयोबलवान् तदुक्तरसस्यदोहददोगर्भिण्याभवति तथाचसारावल्याम् मासतृतीयेस्त्रीणांदोहदकोजायतेवश्यम् मासाधिपस्यभावैर्लग्नप्रयोगादिभिश्चित्यम् भोज

ह्यये धनेभवने स्वजनेनिधने धर्मेस्वोच्चेचभवंतिनोशेषाः स्वजनसंज्ञंचतुर्थस्थानं ततो
हृदोनभवंति तथाचसत्य· सुहृदस्त्रिकोणभवनाद्ग्रहस्यसुतभेव्ययेयधनेभवने स्वजनेनिधने धर्मेस्वोच्चेचभवंतिनोशेषाः स्वजनसंज्ञंचतुर्थस्थानं ततो

नाश्रयेनमम्येगृहोदयेतन्मवारोवा तद्धकरसान्वितभोजनज्ञानमिति १४ अधुनामित्रामित्रविधिशार्दूलविक्रीडितेनाह जीवइति सूर्यादीनांग्रहाणांक्रमा-
न्जीवादयः सुहृदः तत्रादित्यस्य सूर्यस्यजीवोबृहस्पतिः सुहृन्मित्रं जीवबुधौगुरुसौम्यौचन्द्रस्य शुक्रबुधौभौमस्य विगतोर्के सूर्योयेभ्योग्रहेभ्यस्ते-
सूर्यवर्जिताः सर्वएवबुधस्य विकुजाविगतांगारकाः सर्वएवबृहस्पतेः वीद्वर्कौविगतौचन्द्रार्कौयेभ्यस्तेसर्वएवशुक्रस्य विकुजेद्विना कुजोभौम इदुश्च-
द्रः इनःसूर्यः एतेविकुजेद्विनाः सर्वएवसौरस्य शनैश्चरस्य एवकेषांचिन्मतेनबहूनां अत्रचतेषांशत्रुमित्रव्यवहारएवेष्टोनोदासीनव्यवहारस्तस्मा-
न्मित्रेभ्योन्येशत्रवइति केचिद्यवनेश्वराद्याः तथाच रवेर्गुरुमित्रमतोन्यथान्येगुरोस्तुभौमंपरिहृत्यसर्वे चाद्रेरनर्कोभृगुनन्दनस्यव्यर्केंदवोन्येस्तु

जीवोज्जीवबुधौसितेंदुतनयौव्यर्काविभौमाःक्रमाद्वीद्वर्कौविकुजेद्विनाश्चसुहृदःकेषांचिदेवंमतं सत्योक्तेसुहृदस्त्रिकोणभवनात्स्वा
त्स्वात्ययधीधर्मपाः स्वोच्चायुःसुखपाःस्वलक्षणविधेर्नान्यैर्विरोधादिति १५

हृद मदिष्टः १ भौमस्यसुक्रशिशिजश्चापित्रमिदोर्बुध
देवगुरूनिधात् सौरस्यमित्राणयकुजेंदुसूर्या शेषानुरिपून्विद्धिनृणांचतद्वत् २ सत्योक्तइति सत्योक्तेहोराशास्त्रेस्वत्रिकोणभवनादात्मीयमूल
त्रिकोणराशेः स्वात्ययधीधर्मपाः स्वोच्चायुःसुखपाश्चतेग्रहाः सुहृदोभवति तत्रत्रिकोणमूलत्रिकोणतस्मात्स्वपोद्वितीयराश्याधिपः तस्माद्देवात्य
योद्वादशस्थानाधिपः धीस्थानपः पंचमस्याधिपः धर्मपोनवमाधिपः स्वोच्चपोग्रहउच्चस्यस्वामी आयुषोष्टमस्थानस्याधिपतिः सुखपश्चतुर्थ
स्थानाधिपतिः ग्रहोमित्रंभवति स्वलक्षणविधेर्विरोधादन्यैःअग्रिमस्थानाधिपतिभिर्ग्रहैःसहनायमित्रामित्रविभागःकल्पनीयः विरोधात्सुहृद्वस्त्व
न तल्लक्षणंस्वलक्षणं स्वलक्षणेविधिःतेनविरोधस्तस्मात् एतदुक्तंभवति यःसविधिःमित्रलक्षणाख्यभागःप्रदर्शितःअतोन्यस्थानाधिपायेग्रहास्तेग्रहस्यसु

हृदोनभवंति तथाचसत्यः सुहृदस्त्रिकोणभवनाद्ग्रहस्यस्वतभेव्ययेयधनेभवने स्वजनेनिधनेधर्मेस्वोच्चेचभवंतिनोशेषाः स्वजनसंज्ञंचतुर्थस्थान ततो
ह्रिराश्याधिपोमित्रसंज्ञः एकराश्यधिपोमध्यमः अनुक्तराश्यधिपः शत्रुः वक्ष्यतिच ह्येकानुक्तभूपान्सुहृत्समारिपून्संचिंत्यनैसर्गिकानिति एकराश्य
धिपोमध्यस्थइति यदुक्तं तथाच चंद्रार्कावेकराश्याधिपावपिमित्रसंज्ञौभवतः तयोर्हिराशिद्वयस्याधिपत्याभावात् राशिद्वयस्ययोऽधिपतिर्ग्रहः
सएव यद्युच्चराश्यधिपत्वात्त्रिभपत्वंप्राप्नोति तथापिद्विभपत्वएवज्ञातव्यः तस्यस्वराशिव्यतिरेकात् एतन्मंदबुद्धिव्युत्पादनार्थंस्पष्टतरंव्याख्या
यते तद्यथादित्यस्यसिंहस्त्रिकोणः तस्माद्द्वादशस्थानस्यकर्कटस्यचंद्रमाअधिपतिः सएकराश्यधिपोपिसन्द्वितीयस्यराश्यधिपत्यस्यभावादादित्य
स्यमित्रम् सिंहाच्चतुर्थोवृश्चिकः नवमोमेषः तयोर्भौमोऽधिपतिः आदित्यस्यस्वोच्चंमेषः तस्याधिपोभौमः मेषस्यसिंहनवमत्वादादित्यस्यस्वो
च्चत्वादेकराशित्वंमेषस्यैकत्वाद्वृश्चिकस्यद्वितीयत्वाद्भौमः द्विराश्यधिपोजातः तेनादित्यस्यमित्रं सिंहात्पंचमाष्टमौधन्विमीनौतयोरधिपतिर्जीवः स
चोक्तस्थानद्वयस्याधिपतित्वादादित्यस्यमित्रं गुरुः सिंहाद्द्वितीयैकादशौकन्यामिथुनौतयोर्बुधः स्वामी तत्रद्वितीयस्थानस्योक्तत्वादेकादशस्यानुक्त
त्वात् पठितैकराश्याधिपत्वाद्बुधोरवेर्मध्यमः सिंहात्षष्ठसप्तमस्थानेमकरकुंभौनोक्तौतयोराधिपत्यादादित्यस्यशनैश्चरः शत्रुः सिंहाद्दशमतृतीये वृषतु
ले तयोरनुक्तयोः स्थानयोः राश्यधिपत्वाच्छुक्रआदित्यस्यशत्रुः एवंरवेः अथचंद्रस्य तथाचंद्रस्यवृषस्त्रिकोणस्तस्माच्चतुर्थस्थानंसिंहस्तस्याधिप
सूर्यः सएकराश्यधिपोपिसद्वितीयस्यराशेरधिपत्यस्याभावाच्चंद्रस्यमित्रं वृषाद्द्वितीयोमिथुनः पंचमः कन्या तयोर्बुधः अधिपतिः सचोक्तस्थानद्वयस्या
धिपत्वाच्चंद्रस्यमित्रं वृषात्सप्तमद्वादशौवृश्चिकमेषौतयोर्भौमः स्वामी तत्रद्वादशस्योक्तत्वात्सप्तमस्यानुक्तत्वात्पठितैकराश्यधिपत्वाद्भौमश्चंद्रस्यम
ध्यमः वृषादष्टमैकादशौधन्विमीनौतयोः गुरुः स्वामी तत्रैकादशस्थानस्यानुक्तत्वात् अष्टमस्योक्तत्वात्पठितैकराश्यधिपत्वाज्जीवश्चंद्रस्यमध्यमः चंद्र

स्यषृषडज्ञः वृषात्षष्ठस्तुलातयोः शुक्रोधिपतिस्तत्रवृषस्योक्तत्वेनोक्तत्वात् षष्ठस्यानुक्तत्वात्पठितैकराश्यधिपत्वाच्चंद्रस्य शुक्रोमध्यमः वृषान्नवमदशमौमक
रकुंभौतयोः स्वामीशनिः तत्रनवमस्योक्तत्वाद्दशमस्यानुक्तत्वात्पठितैकराश्यधिपत्वात्सौरः चंद्रस्यमध्यमः एवंचंद्रस्य अथभौमस्य तद्यथा भौमस्यमेष-
स्त्रिकोण मेषाच्चतुर्थस्थानस्यकर्कटस्याधिपश्चंद्रः सएकराश्यधिपोपिसन्द्वितीयराशेराधिपत्याभावाद्भौमस्यमित्रमेषात्पंचमस्यसिंहस्याधिप सूर्य
सएकराश्यधिपोपिसन्द्वितीयराशेराधिपत्याभावाद्भौमस्यमित्रमेषान्नवमद्वादशौधन्विमीनौतयोर्जीवोधिपतिः सचोक्तस्थानद्वयस्याधिपत्याद्भौमस्य
मित्रमेषात्तृतीयषष्ठौमिथुनकन्येतयोरपठितत्वात् तयोर्बुधस्याधिपत्याद्भौमस्यबुध शत्रुः मेषाद्द्वितीयसप्तमौवृषतुलेतयो शुक्रः स्वामी तत्रद्वि-
तीयस्योक्तत्वात्सप्तमस्यानुक्तत्वात्पठितैकराश्यधिपत्वाच्छुक्रोभौमस्यमध्यमः मेषाद्दशमैकादशौमकरकुंभौतयोः सौरोधिपति भौमस्यमकरउ
क्तः तस्योक्तत्वादेकादशस्यानुक्तत्वात्पठितैकराश्यधिपत्वाच्छुक्रोभौमस्यमध्यमः एवंभौमस्य अथबुधस्य कन्यामूलत्रिकोणतस्माद्द्वादशस्या
नस्यसिंहस्याधिपतिः सूर्य सएकराश्यधिपोपिसन्द्वितीयराशेराधिपत्याभावात्बुधस्यमित्रसूर्यः कन्यायाः द्वितीयनवमौतुलवृषौतयोः शुक्रोधिपतिः स
चोक्तस्थानद्वयस्याधिपत्याद्बुधस्यमित्र कन्यायाः एकादशस्थानस्यकर्कटस्याधिपतिश्चंद्रः तस्यानुक्तत्वाद्बुधस्य शत्रुः कन्यायाः तृतीयाष्टमौवृश्चिकमे
षौतयोर्भौमोधिपतिः तत्राष्टमस्योक्तत्वात्तृतीयस्यानुक्तत्वात्पठितैकराश्यधिपत्वात् भौमोबुधस्यमध्यमः कन्यायाश्चतुर्थसप्तमौधन्विमीनौतयोर्जीवोधि
पतिस्तत्रचतुर्थस्योक्तत्वात्सप्तमस्यानुक्तत्वात्पठितैकराश्यधिपत्वाज्जीवोबुधस्यमध्यम कन्यायाः पंचमषष्ठौमकरकुंभौतयोः सौरोधिपतिस्तत्रपंचम-
स्योक्तत्वात्षष्ठस्यानुक्तत्वात्पठितैकराश्यधिपत्वात्सौरोबुधस्यमध्यमः एवंबुधस्य अथगुरोः जीवस्यधन्वीत्रिकोणतस्माद्दशमस्थानस्यकर्कटस्याधि
पतिश्चंद्रः सएकराश्यधिपोपिसन्द्वितीयराशेराधिपत्याभावाज्जीवस्यमित्र धनुषः पंचमद्वादशौमेषवृश्चिकौतयोः भौमोधिपतिः सचोक्तस्थानद्वयस्याधिपति

त्वाज्जीवस्यमित्रं धनुषोनवमस्यसिंहस्याधिपतिः सूर्यःसएकराश्यधिपोपिसन्द्वितीयस्यराशेरधिपत्याभावाज्जीवस्यमित्रम् धनुषःपंचमद्वादशौमेषवृश्चिकौ
तयोर्भौमोधिपतिः सत्योक्तस्थानस्याधिपत्याज्जीवस्यमित्रं धनुषोद्वितीयतृतीयौमकरकुंभौतयोः सौरोधिपतिः तत्रद्वितीयस्योक्तत्वात्तृतीयस्यानुक्तत्वात्पठि
तैकराश्यधिपत्वात्सौरोजीवस्यमध्यस्थः धनुषःसप्तमदशमौमिथुनकन्येतयोर्बुधोधिपतिः स्थानद्वयस्यानुक्तत्वाद्गुरोर्बुधः शत्रुः धनुषःषष्ठैकादशस्थानेवृष-
तुलेतयोःशुक्रोधिपतिः स्थानद्वयस्यानुक्तत्वाच्छुक्रोगुरोःशत्रुः एवंजीवस्य अथशुक्रस्य शुक्रस्यतुलास्त्रिकोणंतस्मान्नवमद्वादशस्थानेमिथुनकन्येत
योर्बुधोधिपतिः सत्योक्तस्थानद्वयस्याधिपतित्वाच्छुक्रस्यमित्रं तुलायाःचतुर्थपंचमौमकरकुंभौतयोरधिपतिः सौरःसत्योक्तस्थानद्वयस्याधिपत्वाच्छुक्र
स्यसौरःमित्रं तुलाद्वितीयसप्तमौवृश्चिकमेषौतयोर्भौमोधिपतिः तत्रद्वितीयस्योक्तत्वात्सप्तमस्यानुक्तत्वात्पठितैकराश्यधिपत्वाद्भौमःशुक्रस्यमध्यस्थः
तुलातृतीयषष्ठौधन्विमीनौतयोर्जीवोधिपतिः तत्रमीनःशुक्रस्योच्चस्योक्तत्वाद्धनुषोऽनुक्तत्वात्पठितैकराश्यधिपत्वाज्जीवःशुक्रस्यमध्यस्थः तुलाद्दश
मःकर्कटस्तस्यानुक्तत्वाच्छुक्रस्यचंद्रःशत्रुः तुलादेकादशःसिंहस्तस्याधिपःसूर्यः एकराश्यधिपोपिसन्द्वितीयराशेराधिपत्याभावात् तस्यस्थानस्या
नुक्तत्वाच्छुक्रस्यार्कःशत्रुः एवंशुक्रस्य अथसौरस्य सौरस्यकुंभस्त्रिकोणं तस्मात्पंचमाष्टमौमिथुनकन्येतयोर्बुधोधिपतिः सत्योक्तस्थानस्याधिपति
त्वात्सौरस्यबुधोमित्रं सौरस्योच्चस्तुलाकुंभाच्चतुर्थनवमौवृषतुलेतयोरधिपतिः शुक्रःसत्योक्तस्थानद्वयस्याधिपतित्वात्सौरस्यशुक्रोमित्रं कुंभाद्द्वि-
तीयैकादशौमीनधन्विनौतयोर्जीवोधिपतिः तत्रद्वितीयस्योक्तत्वादेकादशस्यानुक्तत्वात्पठितैकराश्यधिपत्वात्तस्यजीवोमध्यस्थः कुंभात्षष्ठः कर्क-
टस्तस्याधिपतिश्चंद्रस्तस्यानुक्तत्वात्सौरस्यचंद्रःशत्रुःकुंभात्सप्तमःसिंहस्तस्याधिपतिःसूर्यस्तस्यानुक्तत्वात्सौरस्यसूर्यःशत्रुःकुंभात्तृतीयदशमौ
मेषवृश्चिकौतयोर्भौमोधिपतिस्तयोरनुक्तत्वाद्भौमःसौरस्यशत्रुरिति १५ अधुनासत्योक्तेनैकद्व्येकानुक्रमपानूग्रहस्यसुहृन्मध्यस्थशत्रून्शार्दूलवि

कौद्रिस्पेनाह गमूपदमितावितिं रवेरादित्यस्यपद सौर सितः शुक्रः एतौद्वौशत्रुरिपू शशिजोबुधः समोमध्यस्थः नशत्रुर्नमित्रमुदासीनइत्यर्थः शेषा ग्रहाश्चन्द्रमांगारकगुरवोमित्राणीति तीक्ष्णांशुरित्यादिशीतगोश्चन्द्रमसः तीक्ष्णांशुः सूर्यः हिमरश्मिजोबुधः एतौद्वौ सुहृदौमित्रे शेषाः सर्वएवभौमजीव शुक्रसौराः समामध्यस्थाउदासीनाः जीवेदूष्णकरइति कुजस्यभौमस्यजीवोबृहस्पतिः इन्दुश्चंद्रः उष्णकरः सूर्यः एतेसुहृदोमित्राणि ज्ञोबुधः अरिः शत्रुः सितार्कीशुक्रसौरीसमौमध्यस्थाविति मित्रेसूर्यसिताविति सूर्योरविः सितः शुक्रः एतौद्वौबुधस्यमित्रेसुहृदौहिमगुश्चन्द्रमाः शत्रुररिः अपरे

शत्रू मंदसितौसमश्चशशिजोमित्राणिशेषारवेस्तीक्ष्णांशुर्हिमरश्मिजश्चसुहृदौशेषाःसमाः शीतगोः जीवेदूष्णकराःकुजस्यसुहृदो
ज्ञोरिः सितार्कीसमौमित्रेसूर्यसितौबुधस्यहिमगुः शत्रुः समाश्चापरे १६ सूरेः सौम्यसितावरीरविसुतोमध्योपरेत्वन्यथासौम्या
कौमित्रसुहृदौसमौकुजगुरूशुक्रस्यशेषावरी शुक्रज्ञौसुहृदौसमः सुरगुरुः सौरस्यचान्येरयोयेप्रोक्ताःस्वत्रिकोणभादिषुपुनस्ते
मीमयाकीर्तिता १७

न्येभौमगुरुसौराः समामध्यस्थाइति १६ सूरेरित्यादि सूरेर्बृहस्पतेः सौम्योबुधः सितः शुक्रः एतावरीशत्रू रविसुतः सौरोमध्यस्थः अपरे अन्येरविचंद्रभौमाः अन्यथामित्राणीत्यर्थः सौम्यार्कीत्यादि शुक्रस्यसौम्यार्कीबुधसौरौ सुहृदौमित्रे कुजोभौमः गुरुर्जीवः एतौद्वौसमौमध्यस्थौ शेषावादित्यचन्द्रावरीशत्रू शुक्रज्ञावित्यादि सौरस्यशनेः शुक्रज्ञौसितबुधौसुहृदौमित्रे सुरगुरुर्जीवः समोमध्यस्थः अन्येपरेरविशशिभौमाः अरयः शत्रव येप्रोक्ताइत्यादि येमयास्वत्रिकोणभादिषुपूर्वत्रिकोणभवनात्स्वात्यर्थीधर्मपाइत्यादिग्रंथेनोक्तास्तएवेह प्रविभज्यपुनर्भूयः प्रकीर्तिताः उदाहरणत्वेनप्रदर्शिताइति १७ एवंनैसर्गिकमित्रामित्रमध्यस्थविभागमुक्त्वाधुनातात्कालिकमित्रामित्रविभाग मा

दूलविक्रीडितेनाह अन्योन्येति अन्योन्यस्यपरस्परमेतेषुधनादिषुस्थानेषुग्रहस्यग्रहाव्यवस्थितास्तत्कालेजन्मनियात्रायांविवाहेप्रश्नेवातत्समयेसुहृदो मित्राणिभवंति धनस्थानंद्वितीयं व्ययस्थानंद्वादशमायस्थानं एकादशंसहजस्थानंतृतीयं व्यापारस्थानंकर्माख्यंदशमंबंधुस्थानंचतुर्थंएतेषुस्थानेषुयोग्रहःस्थितःसयस्मात्ग्रहाद्व्यवस्थितस्तस्यसुहृन्मित्रंभवति सचतस्यापिभवति यतउक्तमन्योन्यस्येति स्वतुंगभवनेप्येकेइति एकेऽन्येपुनराचार्याः ग्रहस्ययस्योच्चेयोग्रहःस्थितः सतस्यस्वोच्चस्थितंमित्रमिच्छंति तेनयवनेश्वरादयः तथाचतद्वाक्यं मूलत्रिकोणाद्धनधर्मबंधुपुत्रव्ययस्थानगतायहेंद्राः तात्कालिकास्तेसुहृदोभवंतिस्वोच्चेचयोयस्यविकृष्टवीर्यइति एतदप्याचार्यस्यनाभिप्रेतं यस्मादनेनैवस्वल्पजातकेउक्तं तत्कालेचदशायबंधुसहजस्वांत्येषुमित्रं-

अन्योन्यस्यधनव्ययायसहजव्यापारबंधुस्थितास्तत्कालेसुहृदः स्वतुंगभवनेप्येकेस्यस्त्वन्यथा।
द्व्येकानुक्तभपान्सुहृत्समरिपून्संचिंत्यनैसर्गिकां स्तत्कालेचपुन स्तुतानधिसुहृन्मित्रादिभिःकल्पयेत् १८

स्थिताइति अरयस्त्वन्यथेति अन्यथा अन्येन प्रकारेणग्रहस्यग्रहाव्यवस्थितास्तत्कालेऽरयःशत्रवोभवंति अन्योन्यमिति तद्यथा एकराशिगतःपंचमषष्ठसप्तमाष्टमनवमस्थानस्थश्चतत्कालंशत्रुर्ग्रहस्यग्रहोभवति द्व्येकानुक्तभपानिति पूर्वमेवदर्शितं द्वितीयभपानेकभपाननुक्तभपांश्चमित्रमध्यस्थशत्रून्नैसर्गिकान्शत्रूमंदसितावित्यादिनाग्रंथेनोक्तास्तान्संचिंत्यविज्ञायज्ञात्वातत्कालेजन्मादौतानेवारिसुहृन्मित्रादिभिरुपलक्षितान्कल्पयेत् तत्रधनादीनि मित्रस्थानानितेषुनैसर्गिकसुहृत्स्थितोधिमित्रंभवति मध्यस्थोमित्रं शत्रुर्मध्यस्थइति धनादिवर्जितेष्वन्येषुस्थितोनैसर्गसुहृन्मध्यस्थोभवति मध्यस्थःशत्रुःशत्रुरधिशत्रुरिति अमुनाग्रहाणांचतुर्विधंबलं स्थानदिक्चेष्टाकालबलाख्यम् १८

नभस्थलस्थौचदिवाकरारौ सौरेऽथवासुक्रनिशाकरौतुतुलेस्थितावन्यबलोभवेतामिति अन्यबलेग्रहाणामंतरेणुपान्ततइत्येवमुक्तंएवंयुक्तःएतद्ग्रहाणांदिग्ब
लमुच्यते १९ अधुनाचेष्टाबलंबोधकेनाह उदगयनेति मकरादिराशिषट्कमुत्तरमयनं कर्कटादिराशिषट्कंदक्षिणमयनमिति उदगयनेउत्तरायणेरविशीतमयूखौसू
र्यचंद्रमसौबलिनौभवत परिशेषाः भौमबुधगुरुसितसौराः वक्रगाविपरीतगतयोबलिनोभवंति तथान्ये समागमगाश्चंद्रेणसहिताबलिनएव चंद्रेणसंयोगोग्र
हाणांसमागमशब्दवाच्यः रविणासहाऽस्तमयोभौमादीनांपरस्परंयुद्धं उक्तंचाचार्यविष्णुचंद्रेण दिवसकरेणास्तमयः समागमः शीतरश्मिसहितानां कुसुतादी
नांयुद्धंनिगद्यतेन्योन्ययुक्तानामिति विपुलकराइति विपुलाः करायेषांतेविपुलकराः विस्तीर्णरश्मयोबलिनोभवंति शीघ्रकेंद्रे द्वितीयतृतीयपदस्थेग्रहस्यविपु-

उदगयनेरविशीतमयूखौवक्रसमागमगाःपरिशेषाः
विपुलकरायुधिचोत्तरसंस्थाश्चेष्टितवीर्ययुताःपरिकल्प्याः २०

लकरत्वंप्रायःसंभवति वक्रासन्नत्वात् युधिसंग्रामेचोत्तरसंस्थाबलिनएव कुसुतादीनांयुद्धमित्युक्तं तत्रयः उत्तरदिग्भागसंस्थितोजयीसचबलवान् उत्तर
संस्थत्वमत्रोपलक्षणार्थं यस्तेजयीसएवबलवान् तत्रैतज्जयलक्षणं दक्षिणादिक्स्थःपुरुषोवेपथुरप्राप्यसन्निवृत्ततनुः अधिरूढोविकृतोनिःप्रभोविवर्णा
श्रयः सजितः उक्तविपरीतलक्षणसंपन्नोजयगतोविनिर्दिष्टः विपुलःस्निग्धोद्युतिमान् दक्षिणादिक्स्थोपिजययुक्तइति एतच्छुक्रस्यप्रायःसंभवति यस्मा
त्पुलिशाचार्यः सर्वेजयिनउदक्स्थादक्षिणादिक्स्थोजयीशुक्रइति एतच्चेष्टाबलं एषामन्यतमेनसंयुक्तश्चेष्टाबलसंयुक्तोभवति २० ६९ ६९

अधुनाग्रहाणां कालबलनैसर्गिकबलं चाह । निशीति शशिकुजसौराश्चन्द्रभौमशनयः निशि रात्रौ वीर्यवन्तो बलिनः ज्ञो बुधः सर्वदा सर्वस्मिन्काले निशि दिने च बली अन्ये परे रविगुरुसिता अह्नि दिने बलिनः क्रूराः पापाः प्रयुक्ताः बहुलपक्षे कृष्णपक्षे बलिनः सौम्याः शुभग्रहाः सितगता शुक्लपक्षे बलिनः कृष्णपक्षे चन्द्रमा अपि क्रूरो बलवान् भवति यस्माद्यवनेश्वरः मासे तु शुक्ले प्रतिपत्प्रवृत्ते पूर्वे शशी मध्यबलो दशाहे श्रेष्ठो द्वितीये ऽल्पबलस्तृतीये सौम्यैस्तु दृष्टो बलवान् सदैवेति सितगताः शुक्लपक्षे स्थिताः सौम्या बलिनः अयनेति प्रमाणमस्य अयने तत्तु वर्षे स्ववर्षे आत्मीयवर्षे यो ग्रहो यत्र वर्षे ऽधिपतिः स तत्र बलवान् स्वदिवसे आत्मीयवासरे स्वहोरायां कालहोरायां तथा स्वमासे यस्मिन्मासे यो ऽधिपतिः स तत्र बली अयनदिवसहोरामासानां ये ऽधिपतयस्तैर्भेदैः कालबलोपेते

निशि शशिकुजसौराः सर्वदा ज्ञोऽह्नि चान्ये बहुलसितगताः स्युः क्रूरसौम्याः क्रमेण । अयनदिवसहोरामासपैः कालवीर्यं शकुबुगुशसाद्या वृद्धितो वीर्यवन्तः ॥ २१ ॥

रुपलक्षणीयास्ते कालबलोपेता इत्यर्थः केचिदयनदिवसहोरामासपैरिति पठन्ति अन्ये त्वादिवसस्यहोरामासगैरिति पठन्ति एषः सापराधः पाठः एतेषु कालेषु सर्व एव बलिनो भवन्ति एतद्ग्रहाणां कालवीर्यं एषामन्यतमेन संयुक्तः कालबलसंपन्नो भवति शकुबुगुशसाद्या इति शादयो वर्णा येषां शकार आद्यः सो ऽशाद्यः शकाराद्यः शनैश्चरः सर्वेभ्यो बलहीनः कुकाराद्यो रुधिरः भौमः शनैश्चरात्प्रबलवान् बुकाराद्यो बुधः स भौमाद्बलवान् गुकाराद्यो गुरुः स बुधाद्बली शुकाराद्यः शुक्रः स जीवाद्बली चकाराद्यश्चन्द्रः स शुक्राद्बली सकाराद्यः सविता स चन्द्राद्बलीति एतद्ग्रहाणां नैसर्गिकबलं यस्मादनेनैव स्वल्पजातके उक्तं मन्दारसौम्यवाक्पतिसितचन्द्रार्काः यथोत्तरं बलिनः नैसर्गिकबलमेतद्बलसाम्ये स्यादधिकचिन्तेति यत्र ग्रहाणां ग्रहयोर्वा बलसाम्यं भवति तत्र स्याद्बलाधिक्यम् अधिवीर्यवत्तास्तेषामिति अत्राचार्येण चतुष्प्रकारस्य ग्रहाणां बलस्य सम्यक्

त्वावर्षाणामधस्तान्मासाद्यंस्थापयितव्यं तद्यथा यदिलिसाशतद्वयेनद्वादशमासालभ्यंते तदवशेषलिसाभिःकियंतइति तेनावशेषलिसाद्वादशभिःसंगुण्य शतद्वयेनविभाज्यावाप्तंमासास्तेचवर्षाणामधःस्थाप्यमासशेषंत्रिंशतासंगुण्यशतद्वयेनप्राग्वद्विभाज्यावाप्ताश्चदिवसाःतान्मासानामधःस्थापयेत् दिनशेषंषष्ट्यासंगुण्यप्राग्वद्विभाज्यावाप्तंघटिकादिवसानामधःस्थाप्याः घटिकाशेषंषष्ट्यासंगुण्यप्राग्वद्विभाज्यावाप्तंचशेषकाघटिकानामधःस्थाप्याः एवंलग्नायुर्दायः अपरेराशितुल्यंवदंति अपरेन्येमणित्थादयः आचार्यलग्नस्यराशितुल्यआयुर्दायमिच्छंति लग्नेयावंत्योराशयोभुक्तास्तावंत्यएववर्षाणिलग्नायुः लग्नस्यभुक्तभागादिकंलिसापिंडीकृत्यमासाद्यानयनेत्रैराशिकंकर्तव्यं यद्यष्टादशभिर्लिसाशतैर्द्वादशमासालभ्यंते तदेताभिःलग्नभुक्तलिसाभिःकियंतइति प्राग्वद्वर्षाणामधस्तान्मासाद्याःस्थापितव्याः तथाचमणित्थः लग्नराशिसमाश्चाब्दामासाद्यमनुपाततः लग्नायुर्दायमिच्छंतिहोराशास्त्रविशारदाइति तदेवमतंशोभनमित्यस्माकमभिप्रेतम् अन्येप्येवमिच्छंति यथा लग्नांकपतौबलवति अंशतुल्यराश्यधिपेबलवतिराशितुल्यंवदंतिकथयंतीत्यर्थः तथाचसारावल्याम् लग्नाद्यथांशतुल्यःस्यादंतरेचानुपाततः तत्पदेबलसंयुक्तेराशितुल्यंचभाधिपे हित्वावक्रमिति येनग्रहेणयावत्संख्यमायुर्दायोदत्तस्तत्तस्यसंभवति तस्मात्स्वादायुषोभौमादिकस्यवक्रं विपरीतांगतिंहित्वावर्जयित्वायोग्रहोरिपुगृहगतः शत्रुक्षेत्रावस्थितोभवतितेनस्वादायुषस्त्रिभागोहीयते सग्रहस्त्रिभागमपहरतीत्यर्थः वक्रितः पुनः शत्रुक्षेत्रगतोपिनापहरति तथाच वक्रचारंविनात्र्यंशंशत्रुराशौहरेद्ग्रहः एतद्बहूनांमतं आचार्यस्यपुनः एषएवपक्षोऽभिप्रेतः अन्यथाहित्वाभौमंरिपुगृहगतैर्हीयते स्वत्रि-भागंइत्येवावक्ष्यत् वक्रंहित्वायोग्रहोरिपुराशिगतएवज्ञायते यथावक्रगोग्रहोंशायुर्दायंबलवत्वात्त्रिगुणंददाति तथात्रापिनापहरतीतिनिश्चयः अन्येपुनरेवंव्याचक्षते यथा वक्रमंगारकंहित्वायोग्रहोरिपुराशिगस्तेनस्वादायुषस्त्रिभागोहीयते भौमः शत्रुक्षेत्रगतोपिनापहरति अत्रचबादरायणः भूम्याःपुत्रं वर्जयित्वारिभस्थाहन्युः स्वस्वादायुषस्तोत्रिभागमिति सूर्योच्छिन्नद्युतिषुसूर्येणरविणाउच्छिन्नाकर्तिताद्युतिर्येषांतेसूर्योच्छिन्नद्युतयः आदित्यमंडले

अस्तमितेषु ग्रहेषु दलमर्धं हीयते किंतु शुक्रार्कपुत्रौ सितशनैश्चरौ मोक्ष्य वर्जित्वा तावस्तगतावपि नापहरतः तथा च बादरायणः अस्तयाताः सर्वपवादेहा
निकुर्युर्हितादैत्यपूज्यार्कपुत्रौ २ अथ ग्रहाणामायुषश्चक्रपातेनापहानिमहर्षिर्यथाह सर्वार्धमिति असत्सु पापग्रहेषु व्ययभवनादारभ्य द्वादशस्थाना
त्प्रभृति सप्तमान्तं यावदवस्थितेषु वामव्युत्क्रमेण यथाक्रमं सर्वार्धादयो भागाः क्षीयन्ते तत्र लग्नाद्द्वादशस्थः पापग्रहः सर्वमायुरात्मीयमेवापहरति एका
दशस्थोऽर्धं दशमस्थस्त्रिभागं नवमस्थश्चतुर्भागं अष्टमस्थः पञ्चमभागं सप्तमस्थः षड्भागमिति सत्स्वर्धमिति एतेष्वेव व्ययादिषु स्थानेषु सत्सु शु
भग्रहेषु व्यवस्थितेषु शुभग्रहोक्तस्यार्धं क्षीयते तत्र लग्नाद्द्वादशस्थः शुभग्रहः स्वादायुषोऽर्धमपहरति एकादशस्थश्चतुर्भागम् दशमस्थः षड्-

सर्वार्धत्रिचरणपञ्चषष्ठभागाः क्षीयन्ते व्ययभवनादसत्सु वामम्
सत्स्वर्धं ह्रसति तथैकराशिगानामेको ह्रति बली तथाह सत्यः ३

भागम् नवमस्थोऽष्टमभागम् अष्टमस्थो दशमभागं सप्तमस्थो द्वादशभागमिति तथैकराशिगानामिति उक्तस्थानेषु यदा ग्रहद्वयं भवति यद्
वा बहवस्तदा तेषामेव संस्थितानां मध्यादेक एव यो बली वीर्यवान् स एवैकोंऽशभागं यथापठितमपहरति नान्ये तत्रस्था अपहरन्ति एतत्सत्य आह सत्या
चार्यः कथयति अत्र ग्रहणं यथासंभवभागप्रदर्शनार्थम् तथा च सत्यः एकादशोऽक्रमात्सप्तमादिति भागहरणकर्माणि एकर्क्षगेषु वीर्याधिकः स्व
भागं हरेदेकम् अर्धं तृतीयमथ यच्चतुर्थं तथा पञ्चमं च षष्ठं च आयुःपिण्डात्पापा हरन्ति सौम्यास्तथार्धानि द्वादशसंस्थ पापाः स्वादायशोभनस्ततोऽर्धं तु अ
[illegible] वराहमिहिरस्याप्येवमतम् इह सत्यमतोपन्यास आगमानुसृतिप्रदर्शनार्थः ३ ५ ५

अथलग्नस्थः पापश्चक्रपातवदायुषोंशमपहरतितस्यांशप्रमाणज्ञानंवसंततिलकेनाह सार्द्धोदितइति उदितायेनवांशास्तेउदितनवांशाः सहार्द्धोदितेननवांशे नवर्ततइतिसार्द्धोदितोदितनवांशाः तात्कालिकस्यस्फुटलग्नस्ययेभुक्ताभागाः तेषांलिप्ताःपिंडीकृत्यशतद्वयेनभागमपहृत्यावाप्ततस्मिन्कालेभचक्रस्यच-यावंतोनवांशकाउदिताः पश्चादर्धोदितोनवांशकः सतत्रउदितनवांशसमूहेयोज्यः एवंकृतेसार्द्धोदितोदितनवांशसमूहोभवति तेनगणितागतंसमस्तमेवायुः पिंडगुणनीयम् एवंकृतेसार्द्धोदितोदितनवांशहतंसमस्तमायुः पिंडभवति तस्मादष्टाधिकशतेनभागेहृतेयदवाप्यतेवर्षादितन्नाशमुपैतिक्षयंगच्छति किंसर्वेषांनेत्याह क्रूरेविलग्नसहितइति यदाविलग्नस्थःक्रूरः आदित्यांगारकशनैश्चराणामन्यतमोभवतितदेव आगतंवर्षादिसमस्तायुः पिंडात्संशोध्यए

सार्द्धोदितोदितनवांशहतात्समस्ताद्भागोष्टयुक्तशतसंख्यमुपैतिनाशम्
क्रूरेविलग्नसहितेविधिनात्वनेनसौम्येक्षितेदलमतःप्रलयंप्रयाति ४

वंकृतेतत्कालजातस्यजंतोरायुर्वर्षाणिस्फुटंभवति किंतुप्रत्येकस्यग्रहस्यैतत्कर्मकर्तव्यंयेनायुःसंशुद्धानिदशावर्षाणिसर्वेषांभवंति विधिनात्वनेन सौम्येक्षितइति अनेनविधिनासएवलग्नस्थः क्रूरग्रहोयदासौम्येक्षितःशुभग्रहेणादृश्यते तदाविधिनात्वनेनयत्फलमायुःपिंडात्सार्द्धोदितोदित नवांशहतात्समस्तायुःपिंडादष्टोत्तरशतेनभागेहृतेयत्फलंलब्धंअतोदलमर्धंप्रलयंयाति तदर्धीकृत्यायुःपिंडात्पातयेदेवंकृतेआयुःप्रमाणंस्फुटं भवति अन्यएवंव्याचक्षते तात्कालिकेनलग्नेनभुक्तायेनवांशकास्तेसार्द्धोदितनवांशेनसहग्राह्याः अयमर्थः तात्कालिकस्यलग्नस्यराशीनपास्य-भागालिप्ताःपिंडीकृत्यशतद्वयेनभागमपहृत्यावाप्तमुदितांशकस्तैः कर्मप्राग्वत्कार्यंएतदपिस्थूलम् तेनलग्नभागाल्लिप्तीकृत्यताभिःप्रत्येकग्रहदत्तवर्षादि-

रायुर्दायस्तद्गुणयाद्धः स्वच्छेदैर्भागमपहृत्योपर्युपरि योजयेत् वर्षस्थाने भगणकलाभिर्भागमपहरेल्लब्धं वर्षादि तस्य भागस्यात्र कार्यं तथा च सारावल्याम्
लग्नांशाग्निभिर्हतात्प्रत्येकं त्रिभिर्नागाभ्युपाः भान्त्यंशकलाविलिप्ताभिर्लब्धं वर्षादि विशोधयेत् १ स्वायुषोऽत्र भगो क्रूरे सौम्ये चैवं तदर्द्धमिति एतदेवाश
मतिमाति नकेवलमत्र पापग्रहरूपातेष्वेवविधिः लग्नादिस्थग्रहविशोध्यानशेषपापविषमभागादूनमन्नदातेष्वमहृ स्थन्करूपातोऽस्तिनान्यथेति नाव -
पेणायुः पिंडस्थभागमपहृत्य लब्धमायुर्दायं पातयेत् अथ रूपाद्गुणो भागहारो भवति तदा रूपाद्भागहारं संशोध्य शेषेणायुर्दायं संगुण्य
मपहृत्य लब्धमेवायुः श्रद्धं भूपतिरुक्तं उग्रग्रहोनरूपहृद्भागनकं पयसीहरः आयुःपिंडं भवेत्तेन लब्धं वर्षादि शोधयेत् रूपायुर्दानाहारः स्याद्रूपा-
च्छेदेन ताडयेत् रूपेण विभजेल्लब्धं तदेवायुः स्फुटं भवेत् आसीन्साद्धोदितीतिकर्मपिंडमेव पापपापसौम्योभवत् तदा योलग्नाद्रिताशकसमीपवर्तीसिए
वैयास्यानेतरश्मि तमधर्मन्यर्द्धेनसीणास्वरूपानधस्थः तथा च बादरायणः सूर्यागारकृशानीनामेकास्मिन्लग्नगे भवति ह्यानिः विधिनास्त्वनेन सौम्येषि
तेरुपातयेल्लब्धम् ४ अथ पूर्वादीनां परमायुःप्रमाणं तान्यधिकृत्याह समाः षष्टिर्द्विघ्ना इति समाशब्देन वर्षमुच्यते समानां वर्षाणां षष्टिर्द्विघ्नाद्वि
गुणीकृता विंशत्यधिकं वर्षशतं भवति एवं विंशत्यधिकं वर्षशतं पञ्च निशाः पञ्च रात्रयो होरानाडीत्यर्थः मनुजकरिणां मनुजानां मनुष्याणां करिणां हस्ति-
नां च परमायुः हयानामश्वानां द्वात्रिंशद्वर्षाणि परमायुः खरोष्ट्रयोः करभयोः अनयोः पञ्चककृतिः पञ्चकस्य कृतिः पञ्चानां वर्गः पञ्चविंशतिः परमायुः विरू
पा साप्यायुरिति सा पञ्चककृतिः विरूपा विगतरूपा एकोना चतुर्विंशतिर्वर्षाणि वृषमहिषयोः वृषाणां महिषाणां च परमायुः गोमहिष्योरित्यर्थः शुनां
सारमेयाणां द्वादशवर्षाणि परमायुः स्वग्रहणं सर्वेषां नखिनामुपलक्षणार्थं तेन सिंहमार्जारादीनामप्येतदेव स्मृतं छागादीनामिति दशकसहिताः षट् षोडशव
र्षाणि परमायुः छागादीनां आदिग्रहणादजवयमृगमेषाणामपि परमायुरिति सर्वेषामशेषभूतम् परमायुर्दायप्रयोजनं अश्वादीनां जातानामायुःप्रमाण-

ज्ञानार्थमिति तद्यथा अश्वादेर्जातस्यपुरुषवदायुःप्रमाणमानीयततस्त्रैराशिकंकर्तव्यंयदिविंशत्यधिकवर्षशतंपंचदिनाधिकयस्यपुरुषस्यायुः प्रमाणं तस्येदमायुस्तद्द्वात्रिंशद्वर्षायुः प्रमाणस्याश्वस्य किंस्यादितिएवमागतमायुः प्रमाणमश्वस्यतत्कालजातस्यवाच्यंएवंसर्वेषामभिहितप्राणिनांस्वायुषाम परेणत्रैराशिकंकृत्वातत्कालजातस्यस्वायुषः प्रमाणनिर्देशः कार्यः अन्येएववदंति यथापठितंपरमायुषः प्रमाणंनकश्चिज्जीवति तदयुक्तम् यस्माद्विंश-त्यधिकाद्वर्षशताद्भ्यधिकमप्यायुर्गणितकर्मणाभवति यस्मात्परमायुः प्रमाणपठनंत्रैराशिककार्यमेवज्ञातव्यमिति ५ अथयस्मिन्योगेजातस्य परमायुर्भवतितद्योगज्ञानंपुष्पिताग्रयाह अनिमिषपरमांशकेति अनिमिषोमीनः तस्यपरमांशकोनवमनवांशकः तस्मिन्ननिमिषपरमांशके

समाःषष्टिर्द्विघ्नामनुजकरिणांपंचचनिशाहयानांद्वात्रिंशत्खरकरभयोःपंचककृतिः विरूपा-
साप्यायुर्वृषमहिषयोर्द्वादशशुनांस्मृतंछागादीनांदशकसहिताःषट्कपरमम् ५

विलग्नेशशितनयेबुधेगविदृषेचपंचवर्गलिसेस्थिते लिसाःपंचविंशतिभुक्ताबुधोदृषेस्थितःसकलाः समस्ताग्रहाअन्येसर्वएवयदिस्वतुंगभेषुस्थिताः पर-मोच्चगताभवंतितथाजातस्यपरमायुःप्रमाणंविंशत्यधिकंवर्षशतंपंचदिनाधिकमायुर्भवति तत्रचकर्म तद्यथा आदित्यादयोग्रहाः सलग्नाईदृशाः अत्रादित्यानांबुधवर्जितानांयथापठितानिपरमायुःप्रमाणवर्षाणिभवंतिबुधस्यपुनःक्रियते तत्रतावद्बुधोनीचान्मीनाद्विच्युतः तस्मात्तात्कालिका-दस्माद्बुधात् ११।० ०।२५ बुधपरमनीचध्रुवकमिदं ११।१५।० ० संशोध्यजातमेतालिसा १।१५।२५ एतल्लिसापिंडीकृतं २७।२५ एताभिस्त्रै-राशिकेयदि भगणार्धलिसानाएताःसंगुण्य १० ८० ० बुधपरमनीचवर्षाणिषट्भवंति तदातासांनीचाक्रांतलिसानां २७।२५ किंस्या

मगतेलग्ने वृषभस्थेन बुधेन पंचविंशतिलिप्ता भुक्ता भवंत्यन्येच ग्रहाः स्वोच्चराशिषु परमोच्चभागव्यतिरेकेणापि यदिस्थितास्तदायोगशक्त्यैव परमायुः प्रमाणंजातोजीवति अथबुधस्यपरमनीचध्रुवकर्मेदं ११।१४ पूर्वंप्रदर्शितंसांप्रतंकर्मकाले कथमिदं ११।१५।० प्रदर्शितमित्यत्रोच्यते चतुर्दशभागा भुक्ताः पंचदशेपतितेपरमनीचभागेव्यवस्थितोभवति अतश्चतुर्दशभागाः परमनीचस्थस्यप्रदर्शिताः तत्रस्थस्यपरमनीचप्रदर्शितमायुर्भवति तस्माद्यावत्पंचदशोभागोनभुक्तोबुधेनतावत्त्रैराशिकोसत्तिर्नकर्तव्येत्यतः कर्मकालेपंचदशभागाः प्रदर्शिताः इत्येतत्सर्वेषामेवग्रहाणांत्रैराशिककालेपठितेभागेभुक्तेःप्रदर्शयितव्यानि तत्रत्रैराशिकार्थमुच्चध्रुवकाः तथात्रैराशिकार्थपरमनीचध्रुवकाः एतैःकर्मकर्तव्यमिति ६ अथास्यापरमतायुर्दायस्यदूषणार्थंशालिन्याह

अनिमिषपरमांशकेविलग्नेशशितनयेगविपंचवर्गलिप्ते भवतिहि-
परमायुषःप्रमाणंयदिसकलाःसहिताःस्वतुंगभेषु ६

| सू | च | मं | बु | गु | शु | श | ल |
|---|---|---|---|---|---|---|---|
| ० | १ | ९ | १ | ३ | ११ | ६ | ११ |
| ९ | २ | २७ | २४ | ४ | २६ | १९ | २९ ५९ |

आयुर्दायमिति एतदायुर्दायंनकेवलंमयययवनमणित्थशक्तिपूर्वैरुक्तंयावद्विष्णुगुप्तेनापिचाणक्यापरनाम्नैवमुक्तम् आचार्यदेवस्वामीतथासिद्धसेनश्चैवंचक्रेकृतवानित्यर्थः तथाचविष्णुगुप्तः परमोच्चगतैःसर्वैर्मीनेमीनांशसंस्थिते सौम्येचवृषगेजातःपरमायुःसजीवति तथाचदेवस्वामी सूर्याद्यैरुच्चगतैर्मीनेमीनांशसंस्थितेलग्ने सौम्येवृषभयातेजातःपरमायुरप्नोति तथाचसिद्धसेनः मीनेपरमांशगतेसौम्येगविपंचवर्गलिप्तास्थे सर्वैःपरमोच्चगतैर्जातःपरमायुराप्नोति यद्येवंबहुभिराचार्यैरुक्तंतत्कोस्यदोषः तत्रोच्यते वक्ष्यमाणंसत्याचार्यमतेप्रदर्शितमायुर्दायंबहुतराणामाचार्याणांमतमिति यस्मादाचार्यवराहमिहिरस्यप्रतिज्ञेयं ज्योतिषमागमशास्त्रंविप्रतिपत्तौनयोग्यमस्माकं स्वयमेवविकल्पयितुंकिंतुबहूनांमतंवक्ष्ये अस्यपरमतस्यबहु

कुंभलग्नस्याद्यंशकोदये आदित्यचंद्रशुक्राः परमोच्चे बुधजीवशनैश्चराः परमनीचे भौमश्च कुंभस्याप्यष्टाविंशतिमं भागं भुक्त्वा स्थितस्तदा तात्कालिका ग्रहाः सलग्नाः अत्र लग्नेन किंचिद्भुक्तमिति लग्नायुर्दायो नास्ति परमोच्चगतानां परमनीचगतानां च ज्ञात एव भौमस्य क्रियते तात्कालिकाद्भौमादस्मात्

| मू | च | बु | बृ | शु | श | ल | | |
|---|---|---|---|---|---|---|---|---|

| मू | च | पं | बु | बृ | शु | श | ल |
|---|---|---|---|---|---|---|---|
| ० | १ | १० | ११ | ९ | ११ | ० | १० |
| ९ | २ | २८ | १४ | ४ | २६ | १९ | ६ |
| ० | ० | ० | ० | ० | ० | ७ | ० |

१०।२८ भौमस्य परमोच्चध्रुवकमिदं १।२८ संशोध्य जातं १।० एतल्लिप्तापिंडीकृत १८०० अथ त्रैराशिकं यदि भगणार्द्धलिप्तानामेतासाम् १०८०० भौमनीचमासाः नवतिर्भवंति ९० तदैतासां कियंत इति लब्धा मासाः १५ एतैर्वर्षं सत्रिमासं जातं वर्ष १ मास ३ एतद्भौमपरमोच्चवर्षेष्वेतेषु १५ संशोध्य जातं वर्ष १३ मास ९ एष भौमायुर्दायः अथ जीवस्य लग्नाद्द्वादशस्थत्वाच्चक्रपातेनार्द्धं पातयित्वा

यस्मिन्योगे पूर्णमायुः प्रदिष्टं तस्मिन्प्रोक्तं चक्रवर्तित्वमन्यैः

जातजीवायुर्दायः वर्ष ३ मास ९ परमोच्चगतानां परमनीचगतानां च शत्रुक्षेत्रत्वात् त्र्यंशां अस्तंगतानामर्द्धं च न पात्यते यस्मादनिमिषपरमांशके विलग्ने इत्यत्र योगे चंद्रमसो वृषभस्थत्वाद्यद्यायुषः त्रिभागः पात्यते तदा पूर्णमायुर्न भवतीति यस्मादन्याचार्यमतमिति तात्कालिकमित्रामित्रविधावक्तुं मूल-त्रिकोणाद्धनधर्मबंधुपुत्रव्ययस्थानगता ग्रहेंद्राः तात्कालिकाः स्युः सुहृदो ग्रहस्य स्वोच्चे वयो यस्य विकृष्टवीर्यः १ जामित्रषष्ठाष्टमशत्रुमूर्तिद्यूनत्रिकोणे कगृहे विनिष्टाः तात्कालमेते रिपवो भवंति ह्येतानि मित्राणि रिपूंश्च वक्ष्ये २ अनेनापि शक्रश्चंद्रमसः तात्कालिकं मित्रं न भवति तस्मान्मीनस्थे शुक्रे वृषस्थश्चंद्रमाः शत्रुगृहगो भवति तस्य च शत्रुक्षेत्रस्थत्वाद्यद्यायुषस्त्रिभागः पात्यते तदा अनिमिषपरमांशक इत्यत्र योगे पूर्णमायुर्न प्राप्नोतीति तन्नाचा

र्येणभृगमाहिरूयेवप्रदर्शितं तेनैतत्ज्ञापयति परमोच्चगतानांपरमनीचगतानांचग्रहाणांक्षेत्रेभ्यःशमस्थगतानांचार्द्धंचनपात्यते तेनयथादर्शितयोगभुय
कृथक्ग्रहायुर्दायवर्षाणिलिख्यते सूर्यस्यवर्ष १९ चंद्रस्यवर्ष २५ भौमस्यवर्ष १५ मास १ बुधस्यवर्ष ६ जीवस्यवर्ष ३ मास ९ शुक्रस्यवर्ष २१ शनेःवर्ष १०
लग्नेननकिंचिद्भुक्तमितिलग्नायुर्दायोनास्ति अथैतेषांयोगः वर्ष ९८ मास ६ अथागारकस्यलग्नगतत्वात्सार्द्धोदितेतिकर्मक्रियते लग्नेचलग्नेकुमारभ-
क्तानवति ९० नवांशकाभुक्ताभवति तेनचनवांशाश्चचक्रस्योदिताउदयंतएकूनवतिसमाः ९१ तेनैकनवत्यासर्वायुःपिंडमिदंवर्ष ९८ मास ६ सगु-
ण्यजात ८ ९ ६ २ ६ अस्याप्साधिकशतेनभागमपहृत्याप्तवर्षाणि ८२ मास ११ दिन २८ घटी २० अस्मात् ९८।६ संशोध्यजातवर्ष १५ मास
६ दिन १ पल ४० एवमस्यऊर्ध्वंविंशतेरधस्तादायुरुत्पन्नमिति यस्मात्युक्तमुक्तमायुर्विंशतेःस्यादधस्तादिति अत्रान्येवदंति यथाकूरहीनमीनल
ग्नेदृष्टिरूपैतद्यत्तमिहिरेणोक्तं भूनिमिषपरमायाकइति अनेनापिप्रकारेणनवक्तव्यम् यथालग्नायुर्विंशतेःस्यादधस्तादित्यथवांधिकलग्नेसौम्येचंद्रेविंश
तितमेभागेबुधस्तत्रास्तमितः सर्वेष्वन्येषुपरमनीचस्थेषुयस्यजन्मभवतितस्यचक्रपातेनैवायुर्दायोबहुःपततीति तस्यैवतावत्प्रदर्श्यते तत्रतात्का
लिकाग्रहाः सलग्नाः तत्रबुधस्यप्राग्वत्कृत्वाजातवर्ष १० मास १० अन्येपापरमनीचस्थत्वात्ज्ञापयते लग्नेननकिंचिद्भुक्तमितितस्यायुर्दायोनास्ति
चंद्रस्यक्षीणस्यपापत्वाल्लुमाद्वादशस्थत्वाच्चक्रपातेनसर्वपततितदातस्यायुर्दायोनास्ति आदित्यस्यलग्नैकादशत्वाच्चक्रपातेनार्द्धंपातयित्वाजातवर्ष
४ मास ६ बुधस्यास्तमितत्वादर्द्धंपातयित्वाजातवर्ष ९ मास ५ दशमस्थत्वाच्चक्रः स्वायुषस्तृतीयमंशमपहरतिइति सौम्यत्वात्तदर्द्धमस्मात् च-
ङ्गाणार्द्धमेकूनषण्मासान्पातयित्वाजातान्यवशेषाणिनवमासाश्चशुक्रस्यवर्ष ८ मास ९ भौमस्यद्वादशस्थत्वात्तन्मभागसार्द्धंवर्षपातयित्वाजाता
निवर्षाणिषट्इति एवंसर्वेषांवर्षाणि वर्ष ४ मास १ सूर्यस्यवर्ष ० मास ० चंद्रस्यवर्ष ६ मास ० भौमस्यवर्ष ० मास ९ बुधस्यवर्ष ७ मास ६ जीवस्यवर्ष ८ मास ९ शुक्र

स्य वर्ष १० मास० शनैश्चरस्य वर्ष० मास० लग्नस्य वर्ष० मास० सर्वेषां योग. वर्ष ४२ मास ५ अत्रासंभवेप्यभिगम्यापि ब्रूमः एवंविधायुर्दाय. सर्वेप्यस्तंगता यदि भवंति तदा सूर्योच्छिन्नद्युतिषु चदलं प्रोज्झ्य शुक्रार्कपुत्रावितिकृत्वा तथापि पंचत्रिंशत् वर्षाणि मासोनानि यतो बुधस्य पूर्वमेवार्द्धं पातितं एवं द्विचत्वारिंशतोऽधस्तादायुर्नागच्छतीति तथापि विंशतेरधस्तादित्यसंबद्धं अत्राप्यन्ये एवं वदंति क्रूरहीने विलग्ने जाता अष्टाप्यूर्ध्वं विंशतेः अधस्तान्म्रियमाणा दृश्यंते तेनान्याचार्यमतमसंबद्धं अन्याचार्यमतं पूर्वापर्येणाविचार्यैतद्वदंति यैरेवाचार्यैरनेन मार्गेणायुर्दायः प्रदर्शितः तैरेवायं मृत्युयोगोऽभिहितः स चेह लिख्यते तथा च बादरायणः षष्ठाष्टमस्थो रिपुदृष्टमूर्तिः पापग्रहः पापगृहे यदि स्यात् स्वांतर्दशायां मरणाय जंतोर्ज्ञेयः सयुद्धे विजितो यदान्यैः १ तथा च यवनेश्वरः षष्ठाष्टमस्थो रिपुदृष्टरौद्रो पापैः सुहृत्स्थानगतश्च दृष्टः स्वांतर्दशायां प्रकरोति मृत्युं पाशाध्वबंधादि परिक्षयाद्वा १ तथा च सारावल्याम् क्रूरदशायां क्रूरः प्रविश्य चांतर्दशां यदा कुरुते पुंसां स्यात्संदेहस्तदारियोगो हि सदैव महान् १ रवितनयस्य दशायां क्षितिजस्यांतर्दशा यदा भवति बहुकालजीविनामपि मरणं निःसंशयं पुंसाम् १ क्रूरराशौ स्थितः पापः षष्ठे वा निधने पि वा तत्स्थेनवारिणा दृष्टः स्वपाके मृत्युदो ग्रहः १ योलग्नाधिपतेः शत्रुर्लग्नस्यांतर्दशां गतः करोत्यकस्मान्मरणं सत्याचार्यः प्रभाषते १ एवं क्रूरहीने लग्ने ये जातास्तेषां वर्षाष्टकादूर्ध्वं दर्शितकालादधस्तान्मरणं संभवत्येव ते चापि मृत्युयोगेनाने न मृता इति ज्ञेयाः यस्मात्तस्यांतर्दशा दर्शितग्रहसंबंधिनी कदा भवति अत्रायं नियमः तस्मादन्याचार्यमतेनैवाष्टाभ्य ऊर्ध्वं दर्शितकालादधस्तान्मरणं संभवत्येव तस्मादेतत् दूषणमसंबद्धं प्रथमं अथ द्वितीयस्य दूषणस्यासंबद्धत्वमुच्यते अत्र चक्रवर्तित्वयोगोपि विना दीर्घमायुः संभवति अत्रोदाहरणम् यत्र तात्कालिका ग्रहाः सलग्नाः वृषे कोदशभागान्मुक्ता

| सू | च | म | बु | गु | शु | श | लग्न |
|---|---|---|---|---|---|---|---|
| ६ | ७ | ३ | ५ | १ | ५ | ० | ८ |
| १ | ३ | २७ | १४ | ४ | २६ | १९ | ० |

येणमृगयाद्दिहृयेवमदर्शित तेनैतत्ज्ञापयति परमोच्चगतानापरमनीचगतानान्वशत्रुक्षेत्रेत्र्यंशमस्तंगतानांनात्वार्द्धेन्वनपात्यते तेनयथादर्शितयोगपृथ
क्पृथक्ग्रहायुर्दायवर्षाणिलिख्यते सूर्यस्यवर्ष १९ चंद्रस्यवर्ष १५ भौमस्यवर्ष १३ मास ९ बुधस्यवर्ष ६ जीवस्यवर्ष ३ मास ९ शुक्रस्यवर्ष २१ शनेःवर्ष १०
लग्नेननकिंचिद्भुक्तमितिलग्नायुर्दायोनास्ति अथैतेषांयोगः वर्ष ९८ मास ६ अथांगारकस्यनीचभगतत्वात्सार्द्धोदितोतिकर्मक्रियते तत्रचलग्नेकुमारभ-
त्वान्नवति ९० नवांशकाभुक्ताभवति तेनननवांशकचक्रस्योदितागदयगताएकनवतिसमाः ९१ तेनैकनवत्यासर्वायुःपिंडमिदवर्ष ९८ मास ६ सगु-
णपजात ९ ९ ६ २ ६ अस्याशाधिकशतेनभागमपहृत्याबासवर्षाणि ८२ मास ११ दिन २८ घटी २० अस्मात् ९८।६ संशोध्यजातवर्ष १५ मास
६ दिन १ पल ४० एवमस्यऊर्ध्वंविंशतेरधस्तादायुस्सम्भाषितं तस्माद्युक्तमुक्तमायुर्विंशतेः स्यादधस्तादिति अथान्येवदंति यथाक्रूरहीनमीनल
ग्नहृदिकरवैवद्वाराहमिहिरेणोक्तं अनिमिषपरमांशकइति अनेनापिप्रकारेणनवक्तव्यम् यथानायुर्विंशतेःस्यादधस्तादित्यत्रथाचिलग्नेक्षीणेचंद्रेरिष्ठा
ठिलग्ने भागेबुधस्तत्रास्तमिताः सर्वेष्वन्येषुपरमनीचस्थेषुयस्यजन्मभवतितस्यचक्रपातेनैवायुर्दायोबहूपततीति तस्यैवतावत्प्रदर्श्यते तत्रतात्का
लिकाग्रहाः सलग्नाः तत्रबुधस्यभागवक्रत्वाज्जातवर्ष १० मास १० अन्येषांपरमनीचस्थत्वात्ज्ञापयते लग्नेननकिंचिद्भुक्तमितितस्यायुर्दायोनास्ति
चंद्रस्यक्षीणस्यपापत्वाद्भुमाद्वादशस्थत्वाच्चक्रपातेनसर्वंपतति तदातस्यायुर्दायोनास्ति आदित्यस्यलग्नेकादशत्वाच्चक्रपातेनार्द्धंपातयित्वाजातवर्ष
४ मास ९ बुधस्यास्तमितत्वादर्द्धंपातयित्वाजातवर्ष ५ मास ५ वशामस्थत्वात्शुक्रः स्वासायुषस्तृतीयपञ्चमपहरतिइति सौम्यत्वात्तुदर्धमस्मात्प-
ञ्चभागादर्धमेकनवमासान्पातयित्वाजातान्यष्टौवर्षाणिनवमासाश्चशुक्रस्यवर्ष ८ मास ९ भौमस्यलग्नात्सप्तमस्थत्वात्सप्तमभागसार्द्धवर्षंपातयित्वाजात
निवर्षाणिषड्इति एवंसर्वेषांवर्षाणि वर्ष ४ मास ९ सूर्यस्यवर्ष ० मास ० चन्द्रस्यवर्ष ६ मास ० भौमस्यवर्ष ५ मास ५ बुधस्यवर्ष ७ मास ६ जीवस्यवर्ष ८ मास ९ शुक्र

यस्माद्वक्ष्यति हित्वार्कंसुनफानफादुरधरास्वांत्योभयस्थैर्ग्रहैः शीतांशोः कथितोन्यथात्रबहुभिः केम-
वर्षशतमप्यायुः संभवति केमद्रुमाख्यश्चायंयोगः यस्माद्वक्ष्यति हित्वार्कंसुनफानफादुरधरास्वांत्योभयस्थैर्ग्रहैः शीतांशोः कथितोन्यथात्रबहुभिः केम-
द्रुमोन्यैस्त्वसौ तस्मादेवंविधेयोगेजातोदीर्घमायुः प्राप्नोति केमद्रुमत्वाच्चदरिद्रोभवति वक्ष्यतिच केमद्रुमेमलिनदुःखितनीचनिःस्वाःप्रेष्याः खलाश्च
नृपतेरपिवंशजाता केवलंदरिद्रादीर्घायुषोदृश्यंते नकेनचित्कस्यचिद्दरिद्रस्यायुःप्रमाणंज्ञातं यथायंदरिद्रोविंशत्यधिकेनवर्षशतेनसपंचदिनेनमृतः
तस्मात्क्षौद्रमेवदूषणंज्ञातव्यम् एवमस्यदूषणस्यासंबद्धत्वंप्रदर्शितमिति असंभाव्यत्वाद्वराहमिहिरकृतमेतच्छालिनीद्वयंनसंभाव्यते यच्चदर्शि
तान्याचार्यमतेनायुर्दायत्यक्तासत्यमतायुर्दायमंगीकरिष्यत्याचार्यस्तत्रचसत्यमतस्यबहुतराणामाचार्याणांमतांगीकरणमेवप्रयोजनं यस्मात्पूर्वमेवाचा
र्यमतेनायुः प्रतिज्ञाव्याख्याता ज्योतिषमागमशास्त्रंविप्रतिपत्तौनयोग्यमस्माकं स्वयमेवविकल्पयितुं किंतुबहूनांमतंवक्ष्ये अथकश्चिदाह ननु

प्रत्यक्षोयंतेषुदोषःपरोपिजीवत्यायुःपूर्णमर्थैर्विनापि ८

लग्नात्ससमस्थः
यीय योगस्त्वयाप्रदर्शितः सकेमद्रुम एवनभवति यस्मादाचार्यएववक्ष्यति केंद्रेशीतकरेथवाग्रहयुतेकेमद्रुमोनेष्यतइति लग्नात्ससमस्थः
केंद्रस्थश्चंद्रमास्तस्मादयंकेमद्रुमोनभवति अत्रचब्रूमः अत्रचंद्रमानगण्यते यस्माच्चंद्रमसः सकाशाद्ग्रहेणान्येनयोगः कर्त्तव्यइति यद्येवंतल्लु-
ग्नात्केंद्रस्थः कथंकरोतीत्यत्रोच्यते चंद्रलग्नयोस्तुल्यत्वात् तथाचयवनेश्वरः मूर्तिंचहोरांशशिनंचविद्यात् अत्रचगार्गिः व्ययार्थकेंद्रगश्चंद्राद्दि
नाभानुंभवेद्ग्रहः कश्चित्स्याद्वाविनाचंद्रंलग्नात्केंद्रगतोथवा योगःकेमद्रुमोनामतदास्यात्तत्रगर्हितः भवतिनिंदिताचारादरिद्र्यामयसंयुताइ-
ति तस्माल्लग्नात्ससमस्थेचंद्रमस्यस्ययोगस्यकेमद्रुमतासिद्धैवेति ८ ७ ७ ७ ७ ७

वर्षशतमप्यायुः संभवति केमद्रुमाख्यश्चायंयोगः यस्माद्वक्ष्यति हित्वार्कंसुनफानफादुरधरास्त्वंत्योभयस्थैर्ग्रहैः शीतांशोः कथितोन्यथात्रबहुभिः केमद्रुमोन्यैस्त्वसौ तस्मादेवंविधेयोगेजातोदीर्घमायुः प्राप्नोति केमद्रुमत्वाच्चदरिद्रोभवति वक्ष्यतिच केमद्रुमेमलिनदुःखितनीचनिःस्वाःप्रेष्याःखलाश्च नृपतेरपिवंशजाताः केवलंदरिद्रादीर्घायुषोदृश्यंते नकेनचित्कस्यचिद्दरिद्रस्यायुःप्रमाणंज्ञातं यथायंदरिद्रोविंशत्यधिकेनवर्षशतेनसपंचदिनेनमृतः तस्मात्क्षोद्रमेवदूषणंज्ञातव्यम् एवमस्यदूषणस्यासंबद्धत्वंप्रदर्शितमिति असंभाव्यत्वाद्वराहमिहिरकृतमेतच्छालिनीह्ययंनसंभाव्यते यच्चदर्शितान्चार्यमतेनायुर्दायंत्यक्त्वासत्यमतायुर्दायमंगीकरिष्यत्याचार्यस्तत्रचसत्यमतस्यबहुतराणामाचार्याणामंतागीकरणमेवप्रयोजनं यस्मात्पूर्वमेवाचार्यमतेनायुःप्रतिज्ञाव्याख्याता ज्योतिषमागमशास्त्रंविप्रतिपत्तौनयोग्यमस्माकं स्वयमेवविकल्पयितुं किंतुबहूनांमतंवक्ष्ये अथकश्चिदाह ननु

प्रत्यक्षोयंतेषुदोषःपरोपिजीवत्यायुःपूर्णमर्थैर्विनापि ८

योयं योगस्त्वयाप्रदर्शितः सकेमद्रुमएवनभवति यस्मादाचार्यएववक्ष्यति केंद्रेशीतकरेथवाग्रहयुतेकेमद्रुमोनेष्यतइति लग्नात्ससमस्थः केंद्रस्थश्चंद्रमास्तस्मादयंकेमद्रुमोनभवति अत्रचब्रूमः अत्रचंद्रमानगण्यते यस्माच्चंद्रमसः सकाशाद्ग्रहेणान्येनयोगः कर्त्तव्यइति यद्येवंतल्लग्नात्केंद्रस्थः कथंकरोतीत्यत्रोच्यते चंद्रलग्नयोस्तुल्यत्वात् तथाचयवनेश्वरः मूर्तिंचहोरांशशिनंचविंद्यात् अत्रचगार्गिः व्ययार्थकेंद्रगश्चंद्राद्विनाभानुभवेद्ग्रहः कश्चित्स्याद्वाविनाचंद्रंलग्नात्केंद्रगतोथवा योगःकेमद्रुमोनामतदास्यात्तत्रगर्हितः भवतिनिंदिताचारादरिद्र्यामयसंयुताइति तस्माल्लग्नात्ससमस्थेचंद्रमस्यस्ययोगस्यकेमद्रुमतासिद्धैवेति ८ ७ ७ ७ ७ ७

स्थितः एवंमिथुनेचन्द्रमास्त्रीन् भागान् कुंभेभौमोष्टाविंशतिभागान् मेषेबुधः पंचदशभागान् सिंहेजीवः पंचभागान् मेषेसप्तविंशतिः सत्रिभागान् शुक्रः
कुंभेविंशतिभागान् सौरः धन्विलग्नपंत्यंशे तथया ईदृशाग्रहाः अत्रपूर्वप्रदर्शितरूपेणागतानिग्रहायुर्दायवर्षाणिलिख्यंते वर्ष ७ मास ५ सूर्यस्यवर्ष
२१ मास ११ चंद्रस्यवर्ष १२ मास ८ भौमस्यवर्ष ७ मास ० बुधस्यवर्ष १४ मास ७ जीवस्यवर्ष १८ मास २ शुक्रस्यवर्ष १९ मास ० शनेःवर्ष ८ मास ० ल
ग्नस्य अथबृहस्पतेर्वर्षाणांचक्रपातादर्धभागमपास्यजातवर्ष ११ मास ० चंद्रस्यषड्भागमपास्यजातवर्ष १८ मास ८ रवेर्गुरुर्मित्रभूतोन्यथान्यइति
शुक्रः शत्रुः सन्नार्कभूतत्रिकोणास्सिंहान्नवमेस्थाने स्थितः तस्मात्तात्कालिकमित्रीभूतः तेनपूर्णस्य शत्रुक्षेत्रमध्यस्थितस्तेनतस्यायुर्दायेनाकिंचित्सत-
मि चन्द्रस्त्वमिथुनेमित्रक्षेत्रेस्थितः तस्यापियथादर्शितान्येवायुर्दायवर्षाणि यस्मादुक्तम् इंदोर्बुधदेवगुरुस्तुविद्यात् अंगारकः कुंभेशत्रुक्षेत्रेस्थितः य-
स्मादुक्तम् भौमस्यशुक्रः शशिजश्चमित्रमिति शेषान्रिपून्शेपतात्स्वनेश्वरस्तस्यशत्रुस्तात्कालिकश्चैकगृहेभिवृत्तसान्ध्वनेश्वराधिशत्रुः किंत्वमार
कस्यशत्रुक्षेत्रस्थस्यापिनपततियस्मादुक्तम् हित्वावक्रचरिपुगृहगतैर्हीयतेस्वत्रिभागइति तस्मादंगारकस्ययथागतमेवायुः चाद्रेरनर्कोदातिवचनात्सौ-
म्योबुधस्यमित्रम् तेनतस्यमेषस्थत्वात् यथागतमेवायुः बुधस्य बृहस्पतेरप्यादित्योमित्रं यस्मादुक्तं गुरोश्वसौमपास्त्वित्यसर्वइति तस्मात्सिंहस्थ
स्य बृहस्पतेः यथागतमेवायुः शुक्रस्य मेषेस्वाधिमित्रक्षेत्रे यस्मादुक्तम् भृगुनंदनस्यतर्केंदुवर्ज्याः सुहृदः प्रदिष्टाः तस्मात्तस्यापियथागतमेवायुः श
नैश्चरस्यापिकुंभस्वक्षेत्रस्थितत्वाद्यथागतमेवायुः लग्नस्यपातत्वाद्भारहीनत्वात् यथागतमेवायुः एवमायुर्दायवर्षाणि पृथक्पृथक्लिख्यंते वर्ष १७
मास ५ सूर्यस्यवर्ष १८ मास ८ चंद्रस्यवर्ष १२ मास ८ भौमस्यवर्ष ७ मास ० बुधस्यवर्ष १२ मास ८ गुरोःवर्ष १८ मास २ शुक्रस्यवर्ष ९ मास ० शनेःवर्ष १०
मास ० लग्नेएवंविधेचतुर्दशाधिकवर्षशतमप्यायुःसंभवति ११२ मास ११ पक्षवर्षमवर्ष २२ मास ० तत्रासर्वैर्योगैः ११५ मास ११ एवंविधेयोगेषोडशाधिक

तेनयुक्ताप्यंकेनकेषांनगताब्दसंख्याकालः शको१०४४ नांशाविशोध्यतस्मादतीतवर्षाधकगवर्षजातम् एवंनेस्फुजिध्
कृज्ञायते अन्यच्च यवनाचार्यैः पूर्वैः कृतमिति तदर्थंस्फुजिध्वजोप्याह यवनाऊचुः येसंग्रहेदिग्जनजातिभेदाः
हस्य तदेतत्ज्ञायते यथावराहमिहिरेणपूर्वयवनाचार्यमतमेवोपन्यस्तं अस्माभिस्तन्नदृष्टम् स्फुजिध्वज
पीयमेववार्तापाराशरीयासंहिताकेवलमस्माभिर्दृष्टानजातकंश्रूयतेस्कंधत्रयमिति पाराशरस्येति तदर्थंवराह
चित्रंप्रोङ्ह्मपाराशरः कथयतेदोर्भाग्यदंयोषितामित्येवमगदिमयमणित्थयोर्होराशास्त्रेविधेते तथाच एकोनविं
विंशतिः तिथिसंख्याकुजःसोम्योद्वादशोच्चगतोगुरुः कुजवद्दैत्यपूज्यस्तु वर्षाणामेकविंशतिः एकोनसूर्यपुत्रस्य
यमिदंप्रोक्तमर्धनीचगतस्यतु अंतरेत्वनुपाताच्चकारयेदायुःसंग्रहम् तथाचमणित्थः नवरूपाः शरयमलास्तियथोक्ता
कृतिसंख्याः सूर्यादीनांस्वतुंगभेष्वब्दाः नीचेष्वस्माद्दलमन्यत्रानुपाततःकार्यम् आयुर्दायविधानंहोराराशितुल्यमपि
तायुर्दायोयवनेश्वरसत्यमतानुसारीव्याख्यायते ग्रहभुक्तनवांशराशितुल्यमिति यत्रतत्रराशौयस्मिन्नवांशकेग्रहोव्यव
षादेरारभ्ययावत्संख्याराशेःसंबंधीभवति तावंत्येववर्षाणिग्रहःस्वायुर्दायंप्रयच्छति एवंभुक्तनवांशराशितुल्यंभवति
तस्माद्यद्भुक्तंग्रहेणतेनसहत्रैराशिकंकृत्वामासाद्यानयनमपिकर्त्तव्यं त्रैराशिककरणंचवक्ष्यति एवमायुर्दायानयनं
थाचतद्वाक्यम् राश्यंशकसंयोगादायुरिहसमासतोग्रहाददयुः एतच्चसत्यवाक्यं बहुसाम्यंसमुपैति बहुसंमतंबहूना
न्वयवनेश्वरः आयूंषिराश्यंशकचारयोगादिति अत्रतावत्सत्ययवनेश्वरवाक्यव्याख्यानेकिंचिद्विप्रतिपन्नं राशेरंशकचारयो

तेनयुक्ताब्यंकेनकेषांनगताब्दसंख्याकालः शको१०४४ नांशविशोध्यतस्मादतीतवर्षाध्कगवर्षजातम् एवन्चेत्स्फुजिध्वज [illegible]
कृज्ञायते अन्यच्च यवनाचार्यैः पूर्वैः कृतमिति तदर्थंस्फुजिध्वजोप्याह यवनाऊचुः येसंग्रहेदिग्जनजातिभेदाः प्रोक्ताः पुराणैः क्रमशोग्र
हस्य तदेतज्ज्ञायते यथावराहमिहिरेणपूर्वयवनाचार्यमतमेवोपन्यस्तं अस्माभिस्तन्नदृष्टम् स्फुजिध्वजकृतमेवदृष्ट्वा पराशरस्या
पीयमेववार्तापाराशरीयासंहिताकेवलमस्माभिर्दृष्टानजातकंश्रूयतेस्कंधत्रयमिति पाराशरस्येति तदर्थंवराहमिहिरः शक्तिपूर्वैरित्याह
चित्रंप्रोज्झपाराशरः कथयतेदोषार्थयद्योषितामित्येवमादिमयमणित्थयोर्होराशास्त्रेविद्यते तथाच एकोनविंशतिः सूर्यश्चंद्रमाः पंच
विंशतिः तिथिसंख्याकुजःसौम्योद्वादशोच्चगतोगुरुः कुजवद्दैत्यपूज्यस्तुवर्षाणामेकविंशतिः एकोनसूर्यपुत्रस्यपरमोच्चगतस्यच आयुर्दा
यमिदंप्रोक्तमर्धंनीचगतस्यतु अंतरेत्वनुपाताच्चकारयेदायुःसंग्रहम् तथाच्चमणित्थः नवरूपाः शरयमलास्तिथयोर्काः पंचरूपाः क्रमशः रूपयमा
कृतिसंख्याः सूर्यादीनांस्वतुंगभेष्वब्दाः नीचेष्वस्माद्दलमन्यत्रानुपाततःकार्यम् आयुर्दायविधानंहोराराशितुल्यमपि अथवराहमिहिरस्यस्वम
तायुर्दायोयवनेश्वरसत्यमतानुसारीव्याख्यायते ग्रहभुक्तनवांशराशितुल्यमिति यत्रतत्रराशौयस्मिन्नवांशकेग्रहोव्यवस्थितः सचनवांशकोमे
षादेरारभ्ययावत्संख्याराशेःसंबंधीभवति तावंत्येववर्षाणिग्रहःस्वायुर्दायंप्रयच्छति एवंभुक्तनवांशराशितुल्यंभवति यस्मिंश्चनवांशकेवर्तते
तस्माद्यद्भुक्तंग्रहेणतेनसहत्रैराशिकंकृत्वामासाद्यानयनमपिकर्तव्यं त्रैराशिककरणंचवक्ष्यति एवमायुर्दायानयनंचसत्याचार्येणोक्तम् त
थाचतद्वाक्यम् राश्यंशकसंयोगादायुरिहसमासतोग्रहाद्द्युः एतच्चसत्यवाक्यं बहुसाम्यंसमुपैति बहुसंमतंबहूनामाचार्याणांसंमतं तथा
यवनेश्वरः आयूंषिराश्यंशकचारयोगादिति अन्नतावत्सत्ययवनेश्वरवाक्यव्याख्यानैर्किंचिद्विप्रतिपन्नं राशीरंशकचारयोगादितिव्याचक्षते य-

थापस्मिन्राशौग्रहोवर्तते तत्रतेनयावतोनवांशकाभुक्तास्तावत्येववर्षाणयायुः सग्रहोददाति अत्रचव्याख्यानेपरमग्रहदायसाध्यमानेनवर्षाणिभ
वति एतद्व्याख्यानवादरायणादिभिरंगीकृतं तथाचबादरायणः ग्रहयुक्तकालागुणिताद्वादशनवभिर्ग्रहस्य भगणोन्त्यः द्वादशहृतावशेषेऽब्दमा
सदिननाडिकाःक्रमशः इयमाचार्येणवराहमिहिरेणाविनष्टैवस्वल्पजातकेभिहिताएतदनुसारेणसत्ययवनेश्वरेणव्याख्यानंक्रियते आयुःपिण्डा-
द्यशकचारयोगादिति राशीनामंशकाराश्यंशकाः तेषुचारयोगादिति यत्रतत्रराशौमेषांशकस्थोग्रहोवर्षमेकंप्रयच्छति वृषनवांशकस्थोग्र-
होवर्षद्वयंप्रयच्छति एवमुत्तरोत्तरांशकवृद्ध्यावर्षवृद्धिर्यावन्मीनांतेद्वादशइति पूर्वव्याख्यानेनयवनेश्वरसत्यवाक्ययोराशिग्रहणमनर्थकम
ति अवश्यमेवराश्यंशकैर्भवितव्यमिति १ अथानेनैवव्याख्यानानुसारेणाचार्यः सएवायुर्दायानयनमार्ययाह सत्योक्तेति सत्योक्ते

स्वमतेनकिलाहजीवशर्माग्रहदायपरमायुषःस्वराशम् ग्रहभुक्तनवांशराशितुल्यंबहुसाम्यंसमुपैतिसत्यवाक्यम् १

सत्यमतापूर्वायकरणेतात्कालिकमिष्टमभिमतं ग्रहंलिप्तीकृत्यलिप्तापिण्डकलातस्यशतद्वयेनभागमपहृत्ययद्वाप्तंतद्वाप्ताख्यस्याप्यम् अ
वशेषमधःस्याप्यम् अवाप्तमण्डलभागविशुद्धेऽब्दाःस्युः मण्डलभागशब्देनद्वादशभागउच्यते तेनावाप्तस्यद्वादशभिर्भागमपहृत्यावाप्तंत्याज्य
म् यदवशिष्यतेतेऽब्दाः स्फुटास्तावद्वर्षाणितेनग्रहेणायुर्षोदत्तानिभवंति शेषात्तुमासाद्याः यदवशेषंस्थापितं तस्माद्द्वादशगुणितात्तेनैवछेदेन
विभक्तान्मासालभ्यंते तच्छेषात्त्रिंशद्गुणिताद्दिनानि तच्छेषात्षष्टिघ्नाद्घटिकाः पुनरपिषष्टिघ्नात्प्राग्वत्लभ्यंतेविकलाःलभ्यंतेइति एवमा
गतग्रहस्यायुर्दायंभवति तत्रोदाहरणं तात्कालिकोग्रहः ११।८।४५ लिप्तापिण्डीकृताः २३ २५ अस्यशतद्वयेन २०० भागमपहृत्यावाप्त

११ जातंअवशेषं १२५ अवासस्यास्य द्वादशभिर्भागंनप्रयच्छति इतिएतदेवावशेषंतस्माद्ग्रहेणैकादशवर्षाणिदत्तानिभवंति अवशेषं १२५ द्वाद
शभिर्गुणितंजातं १५०० अस्यशतद्वयेनभागमपहृत्यावासं ७ जातंएवंससमासाः अथमासशेषम् १००जातंएतत्त्रिंशता ३० गुणितंजातं३०००
अथशतद्वयेनभागमपहृत्यावासं १५ दिवसाःपंचदशइति शेषस्याभावात् घटिकाभावः एवमागतमेवंविद्यात् ग्रहाद्वर्षादिवर्ष ११ मास ७ दि
न १५ घटिका० अथैतदेवराश्यंशकलागुणितेतिन्यायेनप्रदर्श्यते तद्यथा राश्यादिग्रहः ११८ । ४५ अस्यराशिभागलिप्ताः पृथक् पृथक् द्वाद
शहताः अथभूयोनवाहताः १२ । ८६ । ५४० । १०८ । ८६४ । ४८६० अत्रलिप्तानामेतासां ४८६० षष्ट्याभागेहृतेलब्धं ८१अवशेषं०एताघटिका
लब्धमिदं ८१ भागेलब्धे ८६४ सयोज्यंजातं ८४५ अस्यत्रिंशताभागेहृतेलब्धं ३१ अवशेषं १५ एतेदिवसाः अथलब्धमिदं ३१ राशिष्वेतेषु

सत्योक्तेग्रहमिष्टंलिप्तीकृत्वाशतद्वयेनाप्तम् मंडलभागविशुद्धेब्दाःस्युःशेषात्तुमासाद्याः १०

१८ संयोज्यंजातं १३८ अस्यद्वादशभिर्भागेहृतेलब्धं ११ शेषं ७ एतेमासाः लब्धस्यास्य ११ द्वादशभिर्भागंनप्रयच्छतीत्यतएतदेवात्रशेषं ११ एतानि
ग्रहायुर्दायवर्षाणि एवंवर्ष ११ मास ७ दिन १५ घटि० एतत्पूर्वकृतायुर्दायेसंविहितमिति एवंयवनेश्वरसत्याचार्यबादरायणवराहमिहिरेणायुर्दायःप्रद
र्शितइति १० एवमागतस्यायुर्दायस्यसत्याचार्यमतेनैवकर्मविशेषार्थवंशस्थेनाह स्वतुंगवक्रेति स्वतुंगस्थैः स्वोच्चगतैर्ग्रहैः वक्रोपगतैःविपरीत
गत्याश्रितैश्चयत्स्वदत्तमायु स्तत्त्रिशत्संगुणंकार्यं उत्तमांशोपगतैः वर्गोत्तमांशस्थितैः स्वांशकस्थितैः स्वनवमभागगतैः स्वभस्थैः स्वराश्युप
गतैःस्वत्रिभागगैःस्वद्रेष्काणस्थैः एतैः यद्दत्तमायुः तद्द्विसंगुणंकार्यं इयान्विशेषइति मदत्तशब्देनसत्याचार्योभिधीयते यस्मात्तन्मतमिहप्र

अत्रचबादरायण. होरादयोप्येवंबलयुक्तान्यानिराशितुल्यानिवर्षाणिसंप्रयच्छन्त्यनुपाताच्चांशकादिफलं एतच्चाचार्यवराहमिहिरेणस्वल्पजातके । वि
नष्टैवाभिहितं क्रूरोदयइति मययवनादिमतायुर्दायेक्रूरोदयेक्रूरेलग्नगतेसार्द्धोदितोपिनवांशहतात्समस्तादितिन्यायेनयदायुषोपचयःक्रियते
तदत्रास्मिन्सत्यमतायुर्दायेनकर्तव्यम् अन्यत्सर्वंकर्तव्यं कार्यंचनाब्दैरिति प्रथमोपदिष्टैः पूर्वकथितैरब्दैः नवतिथिविषयेतियेब्दायवनबादरा
यणाचार्यमतेनपठिता जीवशर्ममतेनचग्रहदायपरमायुषः स्वरांशमिति तैरब्दैस्त्रैराशिकमुक्तंतदिहनसंभवति यथादित्यस्य द्वादशकानामंश
कानामेकोनविंशत्यब्दाभवंति तदेकस्मिन्नंशकेकिमितिसत्यायुर्दायेनकर्तव्यम् १२ अथमयादिमतमुपन्यस्यजीवशर्ममतंचोपन्यस्यसत्यम-
तस्यैवांगीकरणमिंद्रवज्रयाह सत्योपदेशइति अत्रास्मिन्मतत्रयेसत्योपदेशोवरंश्रेष्ठइत्यर्थः किंतुतदप्यन्येबहुवर्गिणाभिः वक्राभिः गुणना-

किंत्वत्रभांशप्रतिमंददातिवीर्यान्विताराशिसमंचहोरा क्रूरोदयेचोपचयःसनात्रकार्यंचनाब्दैःप्रथमोपदिष्टैः १२

भिरयोग्यंकुर्वंतिविनाशयंति कास्ता गुणनाः स्वतुंगवक्रोपगतैस्त्रिसंगुणमित्यादिकाः तत्रयदिस्वगृहेग्रहोभवतितदाद्विगुणमायुः कुर्वंति सएवस्वगृ
हांशकेयदिभवतितदाभूयोपिद्विगुणंकुर्वंति सएवस्वद्रेष्काणेयदाभवतितदाभूयोपिद्विगुणं वर्गोत्तमांशेसएववक्रीयदिभवतितदाभूयस्त्रिगुणंकुर्वं
तिसएवस्वोच्चस्थोभवतितदाभूयोपित्रिगुणंकुर्वंति एवमनवस्था अनेनानवस्थाप्रसंगेनसत्योक्तमप्यायुर्दायमयुक्तंबहुवर्गिणाभिःकुर्वंति तथा
चमयः वर्गोत्तमेस्वराशौद्रेष्काणेस्वेनवांशकेद्विगुणं वक्रोच्चगतेत्रिगुणंद्विगुणंकार्यंयथासंख्यं तथाचसारावल्याम् बहुताडनसंप्राप्तोयांकरो-
त्येकवर्गिणां वराहमिहिराचार्य. सानदृष्टाचिरंतनैरिति एतदयुक्तं तदत्रकिंकार्यमित्याह आचार्यकत्वंतुबहुप्रतायामिति एतदाचार्यकत्वमत्रागमः

बहुमतायामासायामेकतु यद्भूरिबहुतरगुणनंतदेवकार्यमिति बहुषुगुणनाप्रासास्वेकैवक्रियतेइति बहुवारमत्रद्विगुणप्रासस्तत्रसकृदेवद्विगुणयायुःस्त- व्यमत्रद्विगुणत्वंत्रिगुणत्वंप्रासस्तत्रसकृदेवत्रिगुणकर्तव्यं यत्रवारद्वयंत्रिगुणत्वप्रासस्तत्रसकृदेवत्रिगुणंकर्तव्यं एकस्तुयद्भूरितदेवकार्यमितिवचनात् स्वल्प जातकेप्युक्तमाचार्येण वर्गोत्तमेस्वराशौस्वद्रेष्काणोस्वनवांशकेस्वकेसकृत्द्विगुणं वक्रोच्चयोस्त्रिगुणितं द्वित्रिगुणत्वेसकृत्त्रिगुणमिति चक्रपातंवर्जयि- त्वाबहुवर्गिणान्यायेनैतदेवकर्म शत्रुक्षेत्रस्योनीचस्थस्यपराभवोभवति अस्तगतोवातदासकृदेवार्धापहानिःकार्या नीचेतोर्धंन्हसतीत्यत्रापिअनुवर्त नीय उक्तंस्वल्पजातके शत्रुक्षेत्रेन्यशनैश्चरवर्ज्यसूर्यलुप्तकिरणाश्चसपयातिस्वायुषोस्तयातोर्धंन्हसन्तीति एवमुक्तस्यसत्याचार्यमतस्यस्पष्ट

सत्योपदेशोवरमत्रकिंतुकुर्वन्त्ययोग्यबहुवर्गिणाभिः
आचार्यकत्वंबहुघतायामेकतुयद्भूरितदेवकार्यं ११

ता भवतीत्याचार्यस्यमतमथापहानिःप्रासागुणनाचप्रासातत्रसकृदेवापहानिःकृत्वासकृदपिगुणनाकार्या किन्त्वपहानौकर्तव्यायांचक्रमातापहानिकृ त्वा ततःशत्रुक्षेत्रस्यस्यापहानिःसकृदेवकर्तव्या ततःसकृदेवगुणनाकार्या अत्रचभगवान्गार्गिःराशितुल्याशसंख्यानिग्रहोस्थानिभपञ्चाशति लग्न मसपलोन्यानिमुक्तराशिसमानितु मासाद्यानूनकार्यमनुपातादतःपर सर्वार्धत्रिचतुर्थांशान्वापूर्वंचतुःसप्तत् हरतिपापःस्वादायात्स्वर्धंपितरेग्रहा व्य याच्चमपहानिस्तुकथितपतेयाभव एकस्त्वेकस्मिंश्चैवकरोतिबलवान्ग्रहः शत्रुक्षेत्रगतस्यशनैश्चरवर्ज्यसूर्यगतस्तथा इतिस्वाहारयाद्यभिगावुसितादित्यनंदनो न चानिसुतमाप्तशत्रुक्षेत्रगतस्तथा ध्रुवापहानिःकर्तव्याततोन्यासुबहुष्वपि मासास्वेकैवकर्तव्यापास्यातासुमहत्तरा ततोपिगुणनाकार्याप्येकैवमहतीसकृत् द्वान्य

वर्गोत्तमेस्वांशेस्वद्रेष्काणेस्वकेगृहे त्रिभिर्वक्रगतस्याथस्वोच्चराशिगतस्यच ग्रहदायोभवत्येवंशोध्यसेपकृतस्तुयः अन्यग्रंथ्याचार्येणांशायुःप्रमाणीकृतं तथा पिलग्नोपदिसम्यग्बलीभवतितदांशायुःकर्तव्यं अथार्कोबलवांस्तदापिंडायुः तथाचमणित्थः विलग्नेतिबलोपेतेशकभद्दोंशसंभव रवौपिंडोद्भवंकुर्यादितित्रूमश्चिरं तना: तथाचसारावल्यां अंशोद्भवंविलग्नात्पिंड्यभानोर्निसर्गजंचंद्रादिति अन्येप्येवमाहुः यथांशायुःपिंडायुषीद्वेअपिकार्ये द्वाभ्यामपिदशांतर्दशाविभाग परिकल्पनाकार्या तत्रयदल्पंतस्यायांतिमांतर्दशासैवयद्यपिकस्यतत्कालंवर्तते तदाधिकमायुर्जीवति शत्रुदशाचेत्तदातत्रैवमरणंमित्रदशानेत्तदापिजीव मध्यमदशान्वेत्तदापीडाभवतिततोपिजीवति अस्माकंसत्याचार्यमभिमतमिति १३ अथयस्मिन्योगेजातस्यायुःप्रमाणंनज्ञायते तद्योगज्ञानंपुं

गुरुशशिसहितेकुलीरलग्नेशशितनयेभृगुजेचकेंद्रयाते भवरिपुसहजोपगैश्वशेषैरमितमिहायु रनुक्रमाद्विनास्यात् १४ इतिश्री भ॰ विरचि॰ बृहज्जातकवि॰ आयुर्दाय॰ सप्तमः ७

अथाह गुरुरिति कुलीरलग्नेकर्कटोदयेगुरुशशिसहितेजीवचंद्रयुक्तेतथाशशितनयेबुधेभृगुजेचशुक्रेकेंद्रयातेकंटकगतेशेषैः परिशिष्टैः रविसोमसौ रैः भवरिपुसहजोपगतैः भवस्थानमेकादशंरिपुस्थानंषष्ठंसहजस्थानंतृतीयं एतेषुभवरिपुसहजेषुउपगतैः स्थितैः इहास्मिन्योगेजातस्यानुक्र माद्विनागणितक्रमांतरेणापिविनामितं अपरिमितायुःस्याद्भवेत् एतदुक्तंभवति यदाकर्कटलग्नंभवतितत्रैवचंद्रजीवौव्यवस्थितौभवतः बुधशुक्रौ सहितौपृथक्स्थौवालग्नचतुर्थसप्तमदशमस्थानानामन्यतमेयथासंभवंभवतः परिशेषाः आदित्यांगारकशनैश्चराः पृथक्सहितावायथासंभव मेकादशषष्ठतृतीयगाः भवंति तदाईदृग्योगेयोजातः तस्यामितप्रमाणमायुर्भवति अनुक्रमाद्गणितानीतंविनैव अयमर्थः एवंविधेयोगेदृष्टे

पगणनानकर्तव्या यस्मात्तस्यासंभवइति अतोन्यथाजातस्ययथागतेनायुषावश्यमेवभवितव्य नायुःपिंडस्यार्वाक्तस्यमृत्युर्भवति नचायु पिंडमति
क्रम्यते नजीवितव्यमिति यस्मिन्योगेजातस्यानाचारस्यैवायुषोध्वंसोभवतिइति तथाचस्मृत्युक्तम् पारदारनायुष्य इत्येवमादिकैर्दोषैर्नजीवति एतयो
गेजातस्यायुर्वेदोक्तैर्विधिसेवितैरसायनैः प्रयोगैर्यथाविहितैर्दीर्घमायुरवाप्नोतीति १४ इतिश्रीभट्टोत्पलवि॰बृहज्जात॰आयुर्दाया॰सप्तमः ७ अथातोदशा
तर्दशाध्यायोव्याख्यायते परिज्ञातसमस्तायुष पुरुषस्यजीविताभ्यंतरेस्थितयो स्वस्वदशयोः परिच्छेदः क्रियते तत्रवशोध्यसेपस्फुटमायुर्यत्प्रमा
णं येनग्रहेणदत्ततावत्प्रमाणेवतस्यसंबंधिनीदशाभवति तत्रदशाक्रमोनज्ञायतेतज्ज्ञानमालिन्याह उदयोलग्नतनु रविरादित्यआत्मा शशांकश्चंद्रोमनः
एषामुदयरविशशांकानामध्याद्य प्राणीबलवान् तद्बलवशात्तस्यसंबंधिनीप्रथमादशाभवति प्राधान्याद्देवता तथाचयवनेश्वरः निशाकरादित्यविलग्नम
ध्यतत्कालयोगादधिकबलयः बिभर्तितस्यादिदशोच्यतेसाशेषास्तत शेषबलक्रमेणेति उदयश्चरविश्चशशांकश्चोदयरविशशांकाः उदयरविशशांकानाम्प्रा-
णीउदयरविशशांकप्राणी उदयरविशशांकप्राणीचकेंद्रादिसस्याश्चोदयरविशशांकप्राणिकेंद्रादिसस्याः एवमेषामध्यायेनप्रथमादशादत्तातस्यैवके
द्रादिसस्या केंद्रपणफरापोक्लिमेषुस्थिताग्रहाःवीर्यापचयक्रमेणदशादद्युः एवलमार्कशशांकानामध्यादेकस्यबलवतोदशाआदौपरिकल्प्या तत-
स्तस्यकेंद्रस्यास्तेषांदशाःपरिकल्प्या ते केंद्रस्थैः प्रथमेवयसिफलदत्तभवति यदुक्तम् प्रथमवयसिमध्येत्येचदद्युः फलानीति तथाचयवनेश्वर
पूर्वेतुकेंद्रोपगता फलंतिमध्येवयःपाणफरनिविष्टाः आपोक्लिमस्थाःफलदावयोत्त्येयथाबलस्वसमुपैतिपूर्वम् अथयदिकेंद्रस्थाग्रहाःनभवति तद क
प्रथमेवयसिफलप्रयच्छतीत्याह नहिनफलविपाकइत्यादि केंद्रस्थाद्यभावेकेंद्रस्थानाग्रहाणामभावेअसंभवेसतिप्रथमेवयसिय फलविपाकःसुना
यतोदैनयोप्रकृत्यर्थगमयतःपणफरस्थानामप्यभावेमध्येवयसिफलविपाकोनहिनएतदुक्तंभवति यदाकेंद्रस्थाग्रहानभवतितदापणफरस्थाः पूर्वफल

च्छतिततआपोक्लिमस्थाः अथकेंद्रस्थाः पणफरस्थाश्चनभवंति तदासर्वस्मिन्नेववयसिआपोक्लिमस्थाः फलंप्रयच्छंतियतउक्तंभवतिहिफलपक्तिः पूर्वं मापोक्लिमेतिइति एवमापोक्लिमस्थानामभावेप्रथमंकेंद्रस्थाः फलंप्रयच्छंति ततःपणफरस्थाः आपोक्लिमस्थानभवंति नचपणफरस्थास्तदासर्वस्मिन्नेववयसिकेंद्रस्थाः फलंप्रयच्छंति एतदुक्तंभवति लग्नार्कशशांकानांयोबलवांस्तद्दशाभवेत्प्रथमा प्रथमांदशांकल्पयित्वाततस्तत्केंद्रगानांसर्वेषां कल्पनीया तेषांपरिकल्प्यपणफरस्थानांपरिकल्पनीयास्ततः परमापोक्लिमस्थानांकेंद्रस्थानामभावेप्रथमंदशापतेरनंतरंपणफरस्थानांकल्पनीयास्ततः आपोक्लिमस्थानांकेंद्रस्थानामभावेपणफरस्थानामप्यभावेआपोक्लिमस्थानामेवकल्पनीयाः अथकेंद्रस्थाभवंतिपणफरस्थानभवंति आपोक्लिमस्थाएवभवंति तदाकें

उदयरविशशांकप्राणिकेंद्रादिसंस्थाःप्रथमवयसिमध्येंत्येचदद्युःफलानि नहिन-
फलविपाकः केंद्रसंस्थाद्यभावेभवतिहिफलपक्तिः पूर्वमापोक्लिमेपि १

द्रस्थानांकल्पयित्वाआपोक्लिमस्थानामेवकल्पनीयाः अथकेंद्रस्थाएवकेवलंभवंतितदातेषामेवकल्पनीयाः अथपणफरस्थाभवंतितदापणफरस्थानामेवकल्पनीयाः अथापोक्लिमस्थाभवंति तदातेषामेवकल्पनीयाः तथाचस्वल्पजातकेउक्तं लग्नार्कशशांकानांयोबलवांस्तद्दशाभवेत्प्रथमा तत्केंद्रपणफरापोक्लिमोपगानांबलाच्छेषा. १अथदशाकालप्रमाणंकेंद्रस्थानानामपिदशाक्रमज्ञानमिंद्रवज्रयाह आयुःकृतमिति शोध्यक्षेपविशुद्धमायुर्योवद्वर्षप्रमाणंयेनग्रहेणदत्तंतस्यग्रहस्यसंबंधिनीदशाकल्प्यापरिकल्पनीया तत्रलग्नार्कशशांकानांयोबलवांस्तद्दशाभवेत्प्रथमेतिन्यायेनतद्दशांप्रथमंकल्पयित्वाततस्तत्केंद्रगानांमध्यात्सैवदशाप्रबलस्यातिबलस्यपूर्वंप्रथमंकल्प्या अनंतरंतस्मादूनबलस्यएवंक्रमेणयथायथाऊनबलाभवंतितथातथापश्चात्तदीयदशाः कल्पनीयाःएवं

केंद्रस्थानादशाः परिकल्प्यास्ततः पणफरस्थानाः अनेनैवक्रमेणपरिकल्प्याः ततः आपोक्लिमस्थानाः अनेनैवक्रमेणेति साम्येबहूनामिति केन्द्रस्थानाबहूनां ग्रहाणांबलसाम्येसतियद्बहुवर्षदस्यबहूनिवर्षाणियेनदत्तानितस्यप्रथमदशापरिकल्प्यानन्तरंकथंग्रहाणांबलसाम्यंभवति यदिद्वावपिसन्द्रात्रिकोणो च्चगतोभवतस्तदानैसर्गिकबलेनयोधिकः सएवबलीस्यात् किंतुस्थानादिक्रमेणकालबलग्रहदर्शनादिबलानियावद्गणितविधिनैवक्रियते तावद्बलसाम्यंभवति ग्रहाणांयथासामान्येनोदाहरणं यदिशनैश्चरोबलत्रयेणसंयुक्तोभवति भौमोपलद्वयेनतथातत्रभौमस्यनिसर्गबलवत्वात् बलसाम्यंभवत्येव सर्वेषामपिज्ञेयं तेषाञ्चसाम्येप्रथमोदितस्येति तेषांवर्षाणांसाम्येवर्षदानतुल्येपिप्रथमोदितस्यदशापरिकल्प्या प्रथममावावर्कमंडलाधउदितउद्गतस्तस्य

आयुःकृतयेनहियत्तदेवकल्प्यादशासामबलस्यपूर्वम्
साम्येबहूनांबहुवर्षदस्यतेषाञ्चसाम्येप्रथमोदितस्य २

यदाबलसाम्यंनभवति तदाबहुवर्षदेपिग्रहेस्थितेतदाप्रथमोदितेपिस्थितेबलाधिकस्यैवपूर्वदशापरिकल्प्यातेषाञ्चबलसाम्येप्रथमोदितस्येत्यत्रद्विविधउदयः प्रत्यहञ्चक्रभ्रमवशादेकः आदित्यविप्रकर्षेणापरः तत्रेहादित्यविप्रकर्षेणउदयोगणितस्कंधोक्तकालांशकवशाज्ज्ञेयः अत्रच भगवान्गार्गिः यश्चोलमे दुःसूर्याणांवशामाद्यांप्रयच्छति तस्मात्ततःप्रयच्छतिकेंद्रादिस्थाःक्रमेणतु तत्रापिबलिनःपूर्वंतत्साम्येबहुदायकाः तत्साम्येपिप्रयच्छंतियेपूर्वंरविविच्युताः २ एवंदशाव्यवस्थायांजातायामंतर्दशापाकग्रहस्थानवसंततिलकेनाह एकर्क्षगोर्द्धमिति दशापतिनोसहैकर्क्षगोग्रहः एकस्मिन्राशौव्यवस्थितः दशापतिःरत्तार्द्धशाकालस्यपरर्पतत्वपत्त्यस्यैराशीयैदशाणीपरिपाचयति त्र्यंशमिति त्र्यंशंत्रिकोणगृहगः दशापतेस्त्रिकोणगृहगोनवपञ्च

नयोरन्यतमस्थितोदशापतिर्दत्तांतर्दशाकालात्र्यंशंतृतीयभागमपहृत्यस्वैरात्मीयैः दशागुणैःपरिपाचयति स्मरगःस्मरांशमिति दशापतेःस्मरगः सप्तम स्थानस्थःदशापतिः दत्तांतर्दशाकालात्स्वरांशंसप्तमभागमपहृत्यस्वैर्दशागुणैः परिपाचयति पादंफलस्यचतुरस्रगतः दशापतेः चतुरस्रगोष्टमञ्चतुर्थ-स्थानस्थोदशापतिः दत्तातर्दशाकालात्पादञ्चतुर्थभागमपहृत्यस्वैर्दशागुणैःपरिपाचयति सहोराः होरालग्नंतयासहितापरस्परमन्योन्यमनेनप्रकारेण-व्यवस्थिताः स्वैः स्वैर्दशागुणैः परिपाचयति एतदुक्तंभवति यथादशापतेः सकाशादेकर्क्षादिस्थोग्रहोयथास्वंपठितमंशंपरिपाचयति तथालग्नमपि-पाचयति अत्रदशापतेःप्रथममंशपरिकल्पनांकृत्वापश्चादेकर्क्षादिस्थितानांकर्तव्याः यस्माद्दशापतेर्योभागआगच्छति तदनुसारेणार्द्धादयोभागाः प-रिशेषाणांभवंति अथैकस्मिन्स्थानेयदाबहवोग्रहाभवंतितदातेषांमध्येयोबलवान्सएवैकः परिपाचयतिनान्ये कथमेतदवगम्यते उच्यते एकवचन

एकर्क्षगोर्द्धमपहृत्यददातितुस्वंत्र्यंशंत्रिकोणगृहगःस्मरगःस्वरांशं

निर्देशात् एकर्क्षगोर्द्धमपहृत्यददातितुस्वमित्याद्येकवचनात् नकेवलंमिहिराचार्येणैकवचननिर्देशः कृतोयावत्स्वल्पजातकेपितथाचोक्तम् एकर्क्षगो-र्द्धंत्र्यंशंत्रिकोणयोः सप्तमेतुसप्तांशंचतुरस्रयोस्तुपादंपाचयतिगतोग्रहः स्वगुणैरिति गर्गादीनामप्येकवचननिर्देशोस्ति तथाचभगवान्गार्गिः एकर्क्षसं-स्थितश्चार्द्धंत्रिभागंतुत्रिकोणगः सप्तमस्थःस्वरांशंतुपादंतुचतुरस्रगः लग्नेनसहिताःसर्वेह्यन्योन्यफलदायकाः यवनेश्वरस्याप्येवम् कालोर्द्धमा-गेकग्रहाश्रितस्यतदर्धभागंलभतेचतुर्थे त्रिभागभागीचत्रिकोणसंस्थस्तदर्धभाक्स्याच्चपृथक्त्रिकोणे स्यात्सप्तमेसप्तमभागभागीस्थितोग्रह-श्चारवशात्ग्रहस्य एवंसर्वत्रैकवचननिर्देशः तस्मादेवंज्ञायते यतएकएवांशहारोभवतिनसर्वइति तथाचसत्यः अर्धंतुतृतीयमर्धात्तथार्धंस्वोच्चसप्त

जिह्वाज्ञेया तयारसस्योपलब्धेः आस्यग्रहणंचात्रवृत्तानुरोधीकृतं आग्नेयी आग्नेयंगुणंरूपमभिव्यंजयति दृष्यानुमेयंवायवी वायव्यंस्पर्शगुणमभिव्यंजय
ति त्वगनुमेयंस्पर्शेनोपलभ्यते नाभसी नाभसंगुणंशब्दमभिव्यंजयतिश्रवणानुमेयंकर्णोपलभ्यं एतदुक्तंभवति यदाशुभगंधःपुरुषोभवति तदास्यबुध
कृतापार्थिवीच्छायाज्ञेया यदामिष्टरसभोजीभवतितदास्यचंद्रशुक्रकृताछायाज्ञेया यदातीवरूपवान्सुकांतःपुरुषोभवति तदासूर्यभौमकृताआग्नेयीछाया
ज्ञेया यदास्पर्शेनमृदुर्भवति तदाशनैश्चरकृतावायवीछायाज्ञेयायदास्यवचनंकर्णयोःसुखकरंभवतितदाजीवकृतानाभसीछायाज्ञेया छायाविशेषलक्षणमाचार्यै
र्गसंहितायामभिहितं तथाच छायाशुभाशुभफलानिनिवेदयंतीलक्ष्यामनुष्यपशुपक्षिषुलक्षणज्ञैः तेजोगुणान्बहिरपिप्रविकाशयंतीदीपप्रभास्फटिकरत्नघ

छायांमहाभूतकृतांचसर्वेभिव्यंजयंतिस्वदशामवाप्य कंबुभि
वाप्यंबरजान्गुणांश्चनासास्यदृक्त्वक्श्रवणानुमेयान् २१

दस्थितेव स्निग्धद्विजत्वग्नखरोमकेशाछायासुगंधाचमहीसमुत्था तुष्ट्यर्थलाभाभ्युदयान्करोतिधर्मस्यचाहन्यहनिप्रवृद्धं स्निग्धासिताचहरितानयनाभिरामासौभा
ग्यमार्दवसुखाभ्युदयान्करोति सर्वार्थसिद्धिजननीजननीवचाप्याछायाफलंतनुभृतांशुभमाददाति चंडाधृष्यापद्महेमाग्निवर्णायुक्तातेजोविक्रमैःसप्रतापैः आग्नेयी
तिप्राणिनांस्याज्जयायक्षिप्रंसिद्धिंवांछितार्थस्यधत्ते मलिनपरुषकृष्णापापगंधानिलोत्याजनयतिवधबंधव्याध्यनर्थार्थनाशं स्फटिकसदृशरूपाभाग्ययुक्तात्युदा
रानिधिरिवगगनोत्थाश्रेयसांस्वच्छवर्णा २१ अत्रचवायव्यांछायांवर्जयित्वासर्वास्वेवछायासुशुभमशुभंफलमुक्तंतत्कथं शुभफलेयमशुभफलेयमिति तद्दृशा
ज्ञायते तत्ज्ञानमंतरात्मन स्वरूपंमालिन्याद् शुभफलमिति शुभफलंददातियःसशुभफलदःशुभफलदस्यग्रहस्ययादशातस्यां अंतरात्मास्वदेहस्थः

परमात्मास्विरूपः तादृगेव शुभो भवति पुरुषस्य तस्मिन्दशाप्रदर्शितमहद्दशाकाले बहुविधमनेकप्रकारं सौख्यं सकलभावमर्थागमधनलाभं च जनयत्युत्पादय-
ति अथ यदि वा शुभदशायां पुरुषस्यान्तरात्माप्यशुभो भवति तत्र दशाप्रदर्शितमहद्जाता तादृगेव फलदा सा न्वासौख्यमनर्थागमं च बहुप्रकारं जनयति मिश्रा
यां मिश्रमत्र यत्नायत्नवस्थति निमित्तानुनरसूक्ष्मदेहेंद्रियमहत्तरं तेनोपेतत्वच्छरीरस्यांशिकमठफलविन्मृणा प्रीतयेनफलोनार्थेनाखिन्नोविभिन्नदिति तस्मात्सर्वा
त्मनायातुरनुमेयपयामनः शुभाशुभानि सर्वाणि निमित्तानि स्युरेवन्तः एवं तस्य मनश्शुद्धिस्ताद्दशुद्धिर्ज्ञेया बहुधा इति कथितफलविपाकैरिति महाभास्क
सुयानि फलानि शुभान्यशुभानि वा कथितान्युक्तानि तानि यः पुरुषो भुङ्क्ते तस्य पुरुषस्य तद्वशा वर्तते इति ज्ञेय एतदुक्तं भवति यादृशफलं शुभमशुभ

शुभफलददशायां तादृशेवान्तरात्मा बहु जनयति पुंसां सौख्यमर्थागमं च
कथितफलविपाकैस्तर्कयेद्वर्तमानां परिणमति फलोक्तिः स्वप्नचिन्तास्ववीर्यैः २२

या पुरुषस्योपलभ्यते तत्र यस्य ग्रहस्य दशाया पठितं सा तस्य दशान्तरस्य वर्तते इति ज्ञेय एवं वर्तमानां दशां तर्कयेदूहयेदित्यर्थः एवं छायावशेनान्तरात्मवशेन फ
लप्रतिकवशेन वा गणितस्य जातकस्य वर्तमानां दशां वदेत् अथ सौरदशायां शुभायां अन्यग्रहत्तमुक्तं नवशुभायां अशुभायामप्यनेकधा अन्यग्रहफलं दृष्ट शुभदशा-
याशुभायां निधिमास्विशुभान्नसापि दशातदर्थमाह परिणमति फलोक्तिरिति अवीर्यैर्बलहीनैर्ग्रहैः फलानि यानि शुभान्यशुभानि वा दत्तानि तत्फलोक्तिः फ
लभाषिः स्वप्ने स्वभावस्थायां परिणमत्यनुभूयते चिन्तायां मनोरथेन चेति केचित्तु शुभफलददशायां तादृगेवान्तरात्मा इति पठन्ति पठित्वैवं व्याचक्षते यस्याः शुभा
या दशायाः पतरात्मा तद्दशाशुभा यदि भवति तदा बहु जनयति पुंसां सौख्यमर्थागममिति अथ यदि वा शुभायां दशायामशुभा तद्दशा असौख्यमनर्थागमं च

हृजनयति अनेनव्याख्यानेन शुभायामशुभायांचशुभाशुभानिभवंति मिश्रफलंप्रयच्छति नन्वेतदिष्यते यस्मादुक्तं एकस्येगोर्द्धमपहृत्यददातितुस्वमिति अत्रदशापतेःफलमपहृत्यांतर्दशापतिरेवस्वंफलंददातीतिज्ञेयं अन्यथापहृत्येतिनिरर्थकंस्यादिति तस्मात्पूर्वपाठःश्रेयान् द्वितीयःप्रमादपाठःप्रथमपाठेनवि-नाछायांस्वभास्वुभत्वमनुमातुंनशक्यतइति २२ अथैकग्रहदत्तयोःफलयोःसदृशयोर्नाशोभवति भिन्नदत्तानांबहूनामपिपक्तिरेवभवतीत्येतद्वसंततिलकेना-ह एकग्रहस्येति सर्वाण्येवफलानिनामसवर्ज्यस्वदशायांग्रहःप्रयच्छतीत्युक्तं तत्रैकेनग्रहेणयदासदृशंविरुद्धंफलद्वयंदत्तंभवति तस्मिन्सदृशेतुल्येद्वयोः फलविरोधेसतिनाशोभवति तस्यफलद्वयस्यवदेद्ब्रूयात् कीदृशंतद्विरुद्धमित्यत्रोच्यते यथाकश्चिद्ग्रहःकयापियुक्त्यादशाफलादिनासुवर्णदोभवति सएवान्य

एकग्रहस्यसदृशेफलयोर्विरोधेनाशंवदेद्यदधिकंपरिपच्यतेतत्
नान्योग्रहःसदृशमन्यफलंहिनस्तिस्वांस्वांदशामुपगताःस्वफलप्रदाःस्युः २३

यायुक्त्याअष्टवर्गफलयोगफलदृष्टिफलभावफलानामन्यतमेनसुवर्णापहारीभवति तदाफलद्वयेपिसुवर्णसंबंधोस्तीतिसादृश्यंस्वर्णदानापहारिणावितिवि-रोधः एवमेकस्यग्रहस्यसदृशेफलयोःविरोधेनाशंवदेत् नसुवर्णलाभोनचापहानिरितियदधिकंपरिपच्यते ततएकेनापिग्रहेणफलद्वयंदत्तमन्यरूपंतयोः मध्याद्यदधिकंतत्परिपच्यतेभवति यथाकश्चिद्ग्रहोनिर्दिष्टप्रकारद्वयेनसुवर्णदःसएवप्रकारेणैकेनसुवर्णापहारी तदाद्वयोरधिकत्वात्तद्दानस्यसुवर्णंददात्ये-वनापहरति अथवाप्रकारद्वयेनसुवर्णापहारी प्रकारेणैकेनसुवर्णदः तदापहरणस्याधिकत्वादपहरत्येव अथवासुवर्णापहारीरूप्यदश्चतथापिद्वे असदृ-शे असदृशत्वादधिकंपरिपच्यते सुवर्णापहारीरूप्यदश्चभवतिइतिकेचित् नान्योग्रहइति अन्येनग्रहेणदत्तंसदृशंविरोध्यपिफलंनान्योग्रहोपिहि-

वक्रादंगारकात्स्वादात्मीयस्थानादिवशफ्भः येष्वेवस्वस्थानात्तेष्वेवांगारकात् १।११।४।८।२।१०।९।७ एतेष्वर्कोभौमाच्छुभः तद्वदेवरविजात् रविजात्सूर्यपुत्रात्तद्वदेवयेष्वेवस्थानेषुस्वाच्छुभस्तेष्वेवसौरात् १।११।४।८।२।१०।९।७ एतेषुसौरादर्कः शुभइति सर्वत्रानुवर्तते शुक्रात्स्मरांत्यारिषुसएवार्कः स्मरांत्यारिषुसप्तमद्वादशषष्ठेषुशुक्रात्शुभः ७।१२।६।जीवाद्धर्मसुतायशत्रुषु जीवाद्बृहस्पतिस्थानात् धर्मसुतायशत्रुषु नवमपंचमैकादशषष्ठेषुशुभः ९।५।११।६ दशत्र्यायारिग शीतगोः शीतगोश्चंद्रात् दशत्र्यायारिगः दशतृतीयैकादशषष्ठगः शुभः १०।३।११।६ एतेष्वेवांत्यतपःसुतेषुचबुधात्शुभः एष्वेवप्रागुक्तेषुचंद्रस्थानेषुदशत्र्यायारिषुचशब्दात्तथात्यतपः सुतेषुद्वादशनवपंचमेषुबुधाच्छुभः १०।३।११।६।१२।९।५

जीवाद्धर्मसुतायशत्रुषुदशत्र्यायारिगःशीतगोरेष्वेवांत्यतपःसुतेषुचबुधाल्लग्नात्सबंधंत्यगः १

लग्नात्सबंधंत्यगः सहशब्देनप्रागुक्तानिचंद्रस्थानान्यनुकृष्यंते तेनांत्यतपःसुतस्थानानीतिसर्वत्रपरिभाषातेनैतेषुचंद्रस्थानेषुदशत्र्यायारिषुसबंधंत्येषुचतुर्थद्वादशसहितेषुगतोलग्नादुदयाच्छुभः १०।३।११।६।४।१२ तथाचसत्यः स्वात्स्थानाद्दिवसकरस्तृतीयषष्ठांत्यभंत्रिकोणानिहित्येषः ३।६।१२।५ एतानिवर्जयित्वातान्येववराहमिहिरदर्शितानिस्थानानिजातानि १।११।४।८।२।१०।९।७ सौरस्यतुसहजारिसुतांत्यसंज्ञानिहित्वेष्टइत्यनुवर्तते ३।६।५।१२ एतानिवर्जयित्वातान्येववराहमिहिरदर्शितानिस्थानानिजातानि १।११।४।८।२।१०।९।७ चंद्राद्दशमैकादशतृतीयषष्ठोपगः शुभःसूर्यः १०।११।३।६ जीवात्त्रिकोणयोः षष्ठस्तथैकादशश्चेष्टः ९।५।६।११ प्रथमद्वितीयसप्तमचतुर्थ

नैधनगतान् विनाराशीन्सौम्यादिष्ट सूर्यः १।२।७।४।८ एतानिवर्जयित्वातान्येववराहमिहिरप्रदर्शितानिस्थानानिजातानि १०।३।११।६।१२।९।
कुजस्तुसद्दशोर्कपुत्रेण १।११।४।८।२।१०।९।७ दशमैकादशषष्ठतृतीयगोत्यग्रतुर्यगोलमात् १०।११।६।३।१२।४ शुक्रस्थानाद्रविःषट्
ससमद्वादशेषु भवतीष्टः ६।७।१२ तथान्यसूक्ष्मजातके केंद्रायाष्टद्विनवस्वर्कः स्वार्कीभौमयोश्चशुभः षट्ससान्त्येषुसितात्षडायधीधर्मगोज्ञ
सात् उपचयगोर्कश्चन्द्रादुपचयनवमात्यधीयुतः सौम्यात् लग्नादुपचयवधुन्त्यसंस्थितः शोभनः प्रोक्तः इतिआदित्याष्टकवर्गः १ अथचन्द्राष्टकवर्गं
शार्दूलविक्रीडितेनाह लग्नात्सद्विति लग्नात्षट्त्रिदशायगः शशीन्द्रः लग्नादुदयात्षडित्यादिगः षष्ठतृतीयदशमैकादशेषुस्थानेषुशुभः ६।३

लग्नात्सट्त्रिदशायगस्सधनधीधर्मेषुचाराच्छशीस्वात्सास्तादिषुसाष्टससस्सुरवे षट्त्र्यायधी
स्योयमात् धीत्र्यायाष्टमकंटकेषुशशिजाज्जीवाद्व्ययायाष्टग केंद्रस्थश्चसितात्तुधर्मसु
स्वधीत्र्यायास्पदानगगः २

१०।११ सधनधीधर्मेषुचाराच्छशीसहशब्देनप्रागुक्तान्येवस्थानान्यनुक्षिप्यते
शशीचन्द्रः आराद्भौमादेश्वेवषट्त्रिदशायेषुधनधीधर्मसहितेषु द्वितीयपञ्चमनवमयुक्तेषुशुभः ६।३।१०।११।२।५।९ स्वात्सास्तादिषुआ
त्मीयस्थानादेष्वेवषट्त्रिदशायेषुसास्तादिषुसप्तमप्रथमसहितेषुशुभः शशी ६३।१०।११।७।१ साष्टससस्सुरवेरादित्यादेष्वेवस्थानेषुसा
ष्टससस्सु अष्टमसप्तम सयुक्तेषु ६।३।१०।११।८।७ शुभ षट्त्र्यायधीस्योयमात् यमात्सौरात् षट्त्र्यायधीस्थ षष्ठतृतीयेकादशपञ्चम-
स्थानस्थः शुभः ६।३।११।५ धीत्र्यायाष्टमकंटकेषुशशिजात् शशिजाद्बुधाद्बुधस्थानाद्धीत्र्यायाष्टमकंटकेषुपंचमतृतीयेकादशाष्टमकेंद्रेषुशुभः शशी ५।३।

११।८।१।४।७।१० जीवाद्व्ययायाष्टग केंद्रस्थश्च जीवाद्गुरुस्थानाद्व्ययायाष्टगः केंद्रस्थश्च द्वादशैकादशाष्टमकेंद्रस्थश्च शुभश्चंद्रः १२।११।८।१।४।७।
१० सितात्तुधर्मसुतधीव्यायास्पदःनंगग सिताच्छुक्राद्धर्मसुतधीव्यायास्पदानंगगेषु नवमचतुर्थपंचमतृतीयैकादशदशमसप्तमेषुशुभः ९।४।५।३
११।१०।७ तथाचसत्य षष्ठैकादशसप्तमतृतीयदशमादिसंस्थितश्चंद्र स्वादिष्टः ६।११।७।३।१०।१ सौरस्यतुसहजारिसुतायसंस्थितश्च शुभः ३।६।५
।११ रिपुनिधनसहजसप्तमदशमैकादशसंस्थितः सूर्यात् ६।८।३।७।१०।११ लग्नात्तृतीयदशमारिलाभसंस्थितः शुभश्चंद्रः ३।१०।६।११ भ्रातृसुत
कर्मधनलाभधर्मरिपुराशिगः कुजादिष्टः ३।५।१०।२।११।९।६ जीवात्तृतीयषष्ठद्विनवमसुतवर्जितेष्विष्टः ३।६।२।९।५ एतानिवर्जयित्वा तान्ये

वक्रस्तूपचयेष्विनात्सतनयेष्वाद्यादिकेषूदयाच्चंद्राद्विफलेषुकेंद्रनिधनप्राप्त्यर्थगःस्वाच्छुभः
धर्मायाष्टमकेंद्रगोर्कतनयाज्ज्ञात्षड्त्रिधीलाभगःशुक्रात्षड्व्ययलाभमृत्युषुगुरोःकर्मांत्यलाभारिषु ३

ववराहमिहिरपठितानिस्थानानिजातानि १२।११।८।१।४।७।१० प्रथमद्वितीयषष्ठाष्टमांत्यवर्जेषु भार्गवादिष्टः १।२।६।८।१२ एतानिवर्जयित्वाता
न्येववराहमिहिरपठितानिस्थानानिजातानि ३।४।५।७।९।१०।११ षष्ठधननवमपश्चिमवर्ज्येषुबुधात्शस्तश्च ६।२।५।९।१२ एतानिवर्जयित्वा
तान्येववराहमिहिरपठितानिस्थानानिजातानि १।३।४।७।८।१०।११ तथाचसूक्ष्मजातके शश्युपचयेषुलग्नात्साद्यमुनिः स्वात्कुजात्सनवधी
स्थः सूर्यात्साष्टस्मरगस्त्रिषडायसुतेषुसूर्यसुतात् ज्ञात्केंद्रत्रिसुतायाष्टमगगुरोर्व्ययभावाष्टकेंद्रेषु त्रिचतुः सुतनवदशसप्तमायगश्चंद्रमाः
शुभ शुक्रात् इतिचंद्राष्टकवर्गः २ अथभौमाष्टकवर्गंशार्दूलविक्रीडितेनाह वक्रस्तूपचयेष्विनादिति वक्रोंगारकः इनादादित्याद्

पन्चयेपुधिपडेकादशदशमेपुसतनयेषु पन्चमस्थानसहितेपुशुभ ३।६।१०।११।५ आयाधिकेषूदयाद्रूक शुभः उदयात्सुमादेष्वेवोपन्चयेष्वायो
धिकेषु प्रथमस्थानयुक्तेपुशुभ ३।६।१०।११।१ चन्द्रादिग्विफलेपुचंद्रस्थानादेष्वेवोपन्चयेपुदिग्विफलेपुदशमस्थानफलवर्जितेपुसेन दशम-
स्थानेनशुभनाप्यशुभफलं करोतीत्यर्थ ३।६।११ एतेपुशुभ कन्निधनभास्यर्यगः सास्त्त्रुभः स्वादात्मीयस्थानात्केन्द्रनिधनभास्यर्यग केन्द्राष्ट
मैकादशद्वितीयग शुभः १।४।७।१०।८।११।२ धर्मायाष्टमकेन्द्रगोर्कतनयात् सौराद्धर्मायाष्टमकेन्द्रगः नवमैकादशाष्टमकेन्द्रगतः शुभः ९।११
।८।१।४।७।१० ज्ञात्षट्निधीलाभगः ज्ञात्बुधात्षट्निधालाभगःषष्ठतृतीयपन्चमैकादशगत शुभ ६।३।५।११ शुक्रात् षड्व्ययलाभमृत्युपुशुक्र
स्थानात् षष्ठद्वादशैकादशाष्टमेषुशुभ ६।१२।११।८ गुरो कर्मान्त्यलाभारिपुगुरोःजीवाद्दशमद्वादशैकादशषष्ठेपुशुभः १०।१२।११।६ तथान्त्यत्यः
द्वादशपन्चमनवमतृतीयपष्ठान्विनाकुजस्त्विष्ट स्वस्थानात् १२।५।९।३।६ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि
११।४।७।१०।८।११।२ सौरस्तुनवमाभ्यधिकेषु अनयेषुएष्वेवद्वितीयस्थानंविनानवमाभ्यधिकेषु ११।८।९।१।४।७।१० भौमस्तृतीयपन्च-
मदशमैकादशारिपुस्थितः सूर्यादिष्ट ३।५।१०।११।६ चन्द्रान्मध्योदशमषष्ठसहजलाभेषु १०।३।६।११ दशमैकादशषष्ठात्यगः कुज भू-
मिज पूजितोगुरुस्थानात् १०।११।६।१२ षष्ठैकादशपन्चमतृतीयगशुभ सौम्यात् ६।११।५।३ अन्त्यायाष्टमषष्ठग कुजः पूजितः शुक्रात्
१२।११।८।६ प्रथमैकादशदशारिपुसहजोपगतश्चहोरायाः १।११।१०।६।३ तथान्त्यस्वल्पजातके सोमःस्वादायस्वाष्टकेन्द्रगःत्र्यायषट्सुते
पुबुधात्जीवाद्दशायशत्रुव्ययेष्विनादुपन्चयसुतेषुउदयादुपन्चयतनुषुत्रिषडायेष्विदुतः समोदशमःचंद्रस्थानादुपन्चयेपुदशमवर्जितेषुशुभ
दशमोशुभोपिनभवति ३।६।११ भृगुतोत्यषडायेषु १२।६।११ असितात्केन्द्रायनववसुषु १।४।७।१०।११।८।९ इतिभौमाष्टकवर्ग ३

अथबुधस्याष्टकवर्गंशार्दूलविक्रीडितेनाह छ्याद्यायाष्टतपइति इंदुजोबुधः भृगुजाच्छुक्रात् छ्याद्यायाष्टतपःसुखेषु द्वितीयप्रथमैकादशाष्टमनवमचतुर्थेषुसन्यात्मजेषुतृतीयपंचमयुक्तेषुशुभः २।१।११।८।९।४।३।५साज्ञास्तेषुयमारयोः एष्वेव छ्याद्यायाष्टतपःसुखेषुसाज्ञास्तेषु दशमसप्तमसहितेषुयमारयोः शनैश्चरांगारकयोः यमात् २।१।११।८।९।४।१०।७आराच्छुभः२।१।११।८।९।४।१०।७व्ययरिपुप्राप्त्यष्टगोवाक्पतेः वाक्पतेःजीवात् द्वादशषष्ठैकादशाष्टमगत शुभः १२।६।११।८धर्मायारिसुतव्ययेषुसवितुःसूर्यान्नवमैकादशषष्ठपंचमद्वादशेषुशुभः ९।११।६।५।१२स्वात्साद्यकर्मत्रिगःस्वादात्मीयस्थानादेष्वेव धर्मादिषुस्थानेषुसाद्यकर्मत्रिकेषु प्रथमदशमतृतीयसहितेषुगतःशुभः ९।११।६।५।१२।१।१०।३ षट्स्वायाष्टसुखास्पदेषुहिमगोश्चंद्रात् षष्ठद्वितीयैकादशाष्टमचतुर्थदशमेषुशुभः ६।२।११।८।४।१०साद्येषुलग्नाच्छुभः एष्वेवषष्ठादिषुस्थानेषुसाद्येषुप्रथमस्थानसहितेषुलग्नाच्छुभः ६।२।११।८।४।१०।१। तथान्यसत्यः स्वात्स्थानाच्छशितनयोद्वितीयसप्तमचतुर्थनिधनानिहित्वेष्टः २।७।४।८ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि१।३।५।६।९।१०।११।१२सूर्यस्यतुलाभारिस्फतात्यनवमस्थः११।६।५।१२।९ स्फतसहजषष्ठपश्चिमवर्जितेषुमंडलेषुबुधस्त्विष्टः सौराराभ्यांस्थानाद्विकल्पाच्छास्त्रनियमेन५।३।६।१२ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि १।११।४।२।८।९।१०।७ लग्नाच्छुक्रोयेषुप्रशस्यते तेषु चंद्रजस्तस्य येषुस्थानेषुलग्नाच्छुक्रः शुभस्तेष्वेवस्थानेषुशुक्रस्थानाद्बुधः शुभोभवति शुक्राष्टकवर्गःपठ्यते लग्नादिष्टसुक्रोरिपुसप्तमदशमपश्चि

छ्याद्यायाष्टतपःसुखेषुभृगुजात्सन्यात्मजेष्विंदुजःसाज्ञास्तेषुयमारयोर्व्ययरिपुप्राप्त्यष्टगोवाक्पतेः
धर्मायारिसुतव्ययेषुसवितुःस्वात्साद्यकर्मत्रिगःषट्स्वायाष्टसुखास्पदेषुहिमगोःसाद्येषुलग्नाच्छुभः ४

मान्दिला ६।७।१०।१२ एतानिस्थानानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि १।२।३।४।५।८।९।११ एतेषुस्थानेषु शुभंकस्थानाच्छु-
भोशुभः अस्तोयात्स्वाष्टमशत्रुमेषुजीवाद्बुधः येषु ११।१२।८।६ दशमस्वाभमषष्ठाष्टमेषुस्वबुधस्तुर्येन १०।२।११।६।८।४ उष्णांशोराधूनात्यनवमस्वक
तसहजवर्ज्येषु ७।१२।९।२।१ एतानिवर्जयित्वातान्येषवराहमिहिरपठितानिस्थानानिजातानि २।६।१०।११।८।४।१ एतेषुलभान्छुभः तथान्वस्व
लग्नजातके सौम्योऽस्तधनवायात्मजेष्विना १२।६।९।११।५ स्वान्मितनु ३।१ दशासुतेषु १० चन्द्राद्रिपुदशायाष्टकखगतः २।६।१०।११।८।४ सादि
पुविलमात् प्रथमस्वतायहिनिधनधर्मेषु १।४।११।२।८।९ सिताभियीसमस्तेषु ३।५ साशास्मरेषु १०।७ सौरारयोर्व्ययायारिपुवसुषु १२।११।
६।८ गुरोः इतिबुधस्याष्टकवर्गः ४ अथजीवस्याष्टकवर्गशार्दूलविक्रीडितेनाह दिगीति दिक्स्वाद्याष्टमदायबन्धुषुकुजाद्गीरष्ट्रति भ-
गिरुजीव कुजाद्गारभद्गमद्वितीयप्रथमाष्टमसप्तमैकादशचतुर्थेषुशुभः १०।२।१।८।७।११।४ स्वात्सचिकेन्द्रगिरोः स्वादात्मीयस्थानाद्
गिरः गुरुः पूर्वोक्तेषुदिक्स्वाद्यादिषुसचिकेषुतृतीयस्थानसहितेषुशुभः १०।२।१।८।७।११।४।३ सूर्यात्सत्रिनवेषुगुरुः शुभः सूर्यादादित्याद
ष्वेवस्थानेषुभागुक्तेषुसतपस्तृतीयेषुतृतीयनवमस्थानाधिकेषुशुभः १०।२।१।८।७।११।४।३।९ धीस्वनवादिग्लाभास्सितोभार्गवात् भ
गवाच्छुक्रात् पञ्चमद्वितीयनवमदशमैकादशषष्ठेषुशुभः ५।२।९।१०।११।६ जायायार्थनवात्मजेषुहिमगोः हिमगोश्चन्द्रात् सप्तमैकादशद्वितीयन
वमपञ्चमेषुशुभः ७।११।२।९।५ मदात्रिषट्धीव्ययेमदात्सौरात् तृतीयषष्ठपञ्चमद्वादशेषुशुभः ३।६।५।१२ दिग्धीषट्स्वसुखायपूर्वनवगोज्ञाद्गुरु ज्ञाद्बुधा
दशमपञ्चमषष्ठद्वितीयचतुर्थैकादशप्रथमनवमेषुशुभः १०।५।६।२।४।११।१।९ ससमरमोदयात् उदयाल्लग्नादेष्वेवस्थानेषुसस्मरेषुसप्तमस्थानसहिते
शुभः १०।५।६।२।४।११।१।९।७ तथान्यस्त्या येषुबुधस्याष्टकवर्गेषुगुरुः शुभफलस्वकारस्थानात् चन्द्राष्टकवर्गपठ्यते षष्ठधननवमपञ्चिमक्र्ज

घुधुधात्प्रशस्तश्च ६।२।९।१२ एतानिस्थानानिवर्जयित्वाजातानि १।३।४।५।७।८।१०।११ अत्रपंचमद्वितीययोः स्थानयोः वराहमिहिरेणसह भेदः अत्रनवराहमिहिरेणयवनेश्वरमतमंगीकृत्यद्वितीयस्थानस्यशुभत्वमंगीकृतं तथान्वयवनेश्वरः स्वस्थानगः स्थानफलवर्णमानप्राप्तिर्द्वितीयेन्वगुरुः करोति एवंद्वितीयेनशुभः विवाददैन्याध्वगदस्त्रिकोणेतस्मात्पंचमेनशुभः एष्वेवार्कादिष्टोनवमाप्त्यधिकेषुभवनेषु १।३।४।५।७।८।९।१०।११ अत्रापिपंचमद्वितीययोः वराहमिहिरेणयवनेश्वरमतमंगीकृतं तथान्वयवनेश्वरः स्थानेरवेर्बुद्धिसुहृद्द्वनाशिंकरोतिजीवोधनदोद्वितीये एवंद्वितीयेशुभत्वाद्वराहमिहिरेणांगीकृतं रुजापीडाध्वदारिद्र्यसूरिः स्यात्पंचमेतस्मात्पंचमेनशुभः आत्मसहजेषु सहजभवनंविनाकुजान्वगुरुरिष्टः १।४।५।७।१०।११

दिक्स्वाद्याष्टमदायबंधुषुकुजात्स्वात्सत्रिकेष्वंगिराःसूर्यात्सत्रिनवेषुधीस्वनवदिग्लाभारिगोभार्गवात्
जायायार्थनवात्मजेषुहिमगोर्मंदात्त्रिषट्धीव्ययेदिग्धीषट्स्वसुखायपूर्वनवगोज्ञात्ससमरस्त्रोदयात् ५

अत्रापिपंचमद्वितीययोः वराहमिहिरेणसह भेदः अत्रापियवनेश्वरः गुरुः कुजस्थानगतोऽरिहंताद्वितीयगस्तुधातिहर्षदाता तस्माद्वराहमिहिरेणाद्वितीयस्थानमंगीकृतं जामित्रगोव्याध्यरिशोककारीएवंसप्तमस्थानंनांगीकृतं द्वादशारिपुपंचमतृतीयसंज्ञेशुभः सौरात् १२।६।५।३ दशमैकादशनवमद्वितीयषट्पंचमेषुभृगोःजीवइष्टः १०।११।९।२।६।५ चंद्राज्जामित्रनवमसुतलाभकोशस्थेषुगुरुः शुभः ७।९।५।११।२ प्रथमद्वितीयपंचमचतुर्थधर्मारिलाभदशमस्थः सौम्याद्गुरुरिष्टः १।२।५।४।९।६।११।१० जीवोलग्नादेवमिष्टः सजामित्रः १।२।५।४।९।६।११।१०।७ तथाचस्वल्पजातके जीवोभौमाद्व्ययायाष्टकेंद्रगो २।११।८।१।४।७।१० कोत्सधर्मसहजेषु २।११।८।१।४।७।१०।९।३ स्वात्सत्रिकेषु २।११।८।१

९।७।१०।१२ शुक्रान्नवदशायामस्तधीरिपुषु ९।१०।११।२।५।६ शशिनः स्वरत्रिकोणार्थलाभगः ७।१।५।२।११ स्विरिपुधीव्ययेषु यमात् २।६।५।१२ नवदि-
पधीस्वायभपुत्रा ९।१०।४।१।५।२।११।६ स्वकामगोडुपात् ९।१०।४।७।५।१।११।६।७ इति जीवाष्टकवर्गः ५   अथ शुक्रस्याष्टकवर्गं शार्दूलविक्री-
डितेनाह लग्नादिति सितः शुक्रः लग्नाद्वाक्सुतलाभरधनवगः क्रमः लग्नात्प्रभृति सुतस्थानं पञ्चमं यावत्तथा लाभरधनवगः सितः शुभः तेषु प्रथमद्वि-
तीयतृतीयचतुर्थपञ्चमैकादशाष्टनवमेषु लग्नाच्छुक्रः क्रमः १।२।३।४।५।११।८।९ सात्यः शशांकात्सितः शशांकाच्चन्द्रादेष्वेव स्थानेषु सात्येषु सव्य-
येषु द्वादशस्थानाधिकेषु शुभः १।२।३।४।५।११।८।९।१२ स्वात्सात्तेषु स्वादात्मीयस्थानादेष्वेव स्थानेषु सात्तेषु दशमस्थानाधिकेषु शुभः

लग्नाद्वाक्सुतलाभरध्रनवगः सात्यः शशांकात्सितः स्वात्सात्तेषु सुतत्रिधीनवदशाच्छिद्राप्तिगः सूर्यजात्
रध्रायव्ययगो रवेर्नवदशामास्यष्टधीस्थो गुरोर्ज्ञाद्व्यायनवारिगस्त्रिनवषट्पुत्रायसात्य कुजात् ६

१।२।३।४।५।११।८।९।१० स्वात्सत्रिधीनवदशाच्छिद्राप्तिगः सूर्यजात् सौराच्चतुर्थतृतीयपञ्चमनवमदशमाष्टमैकादशेषु शुभः ४।३।५।९।१०।८।११
रध्रायव्ययगो रवेः रवेरादित्यादष्टमैकादशद्वादशेषु शुभः ८।११।१२ नवदशमास्यष्टधीस्थो गुरोः जीवान्नवमदशमैकादशाष्टमपञ्चमेषु शुभः ९।१०।११।८
।५ ज्ञाद्व्यायनवारिगः ज्ञात् बुधात् पञ्चमतृतीयैकादशनवमषष्ठेषु क्रमः ५।३।११।९।६ त्रिनवषट्पुत्रायसात्यः कुजात् कुजाद्भौमात्तृतीयन-
वमषष्ठपञ्चमैकादशेषु सात्येषु अत्र लग्नेन सहितेषु स्थानेषु शुक्रः क्रमः ३।९।६।५।११।१२ तथा स्वसत्यः स्वस्थानाद्भृगुतनयः षट्सप्तमप-
ष्टमेतरेष्विष्टः ६।७।१२ एतानि वर्जयित्वा तान्येव वराहमिहिरपठितानि स्थानानि जातानि १।५।२।४।५।८।९।१०।११ रिपवन्तिकर्मवर्ज्येषु सितस्य

द्रात्तुपुष्कलोनृणां ६ । ७ । १० एतानिवर्जयित्वातान्येववराहमिहिरपठितानिजातानि १ । २ । ३ । ४ । ५ । ९ । ८ । ११ । १२ अंत्योपांत्याष्टमगः सूर्यादिष्टस्तु भार्गवकथितः १२ । ११ । ८ भौमादंत्योपांत्यतृतीयनवमसुतरिपुशशिगश्चैवं १२ । ११ । ३ । ९ । ५ । ६ दशमैकादशनिधनत्रिकोणसंस्थोभृगुर्जीवात् १ । ११ । ८ । ५ । ९ सौम्यात्सुतधर्मलाभसहजारिसंज्ञेषु ५ । ९ । ११ । ३ । ६ लग्नादिष्टः शुक्रोरिपुसप्तमदशमपश्चिमान्हित्वा ६ । ७ । १० । १२ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि १ । २ । ३ । ४ । ५ । ८ । ९ । ११ आद्यद्वितीयरिपुसप्तमांत्यवर्ज्येषु सौराच्च १ । २ । ६ । ७ । १२ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि ३ । ४ । ५ । ८ । ९ । १० । ११ तथाचस्वल्पजातके शुक्रोलग्नादासुतनवाष्टला

मंदःस्वात्त्रिसुतायशत्रुषुशुभःसान्त्यांत्यगोभूमिजात्केंद्रायाष्टधनेष्विनादुपचयेष्वाद्येषुखेचोदयात्
धर्मायारिदशांत्यमृत्युषुबुधाच्चंद्रात्त्रिषड्लाभगःषष्ठायांत्यगतःसितात्सुरगुरोःप्रास्यंतधीशत्रुषु ७

भेषु १ । २ । ३ । ४ । ५ । ९ । ८ । ११ सव्ययश्चंद्रात् स्वात्सात्तेषु रविसुतात्त्रिधीसुखास्तनवकर्मरंध्रेषु वस्त्वंत्यायेष्वर्कान्नवदिग्लाभाष्टधीस्थितोजीवात् ज्ञात्त्रिसुतनवायारिष्वायसुतापोक्लिमेषुकुजादितिसुक्राष्टकवर्गः ६ अथसौरस्याष्टकवर्गंशार्दूलविक्रीडितेनाह मंदःस्वात्त्रिसुतायशत्रुषुशुभइति मंदः सौरः स्वादात्मीयस्थानात्तृतीयपंचमैकादशषष्ठस्थानेषुशुभः सान्त्यांत्यगोभूमिजात् भूमिजाद्भौमादेष्वेवप्रागुक्तेषुसान्त्यांत्येषुगतः दशमद्वादशसहितेषुशुभः ३ । ५ । ११ । ६ । १० । १२ केंद्रायाष्टधनेष्विनात् इनात्सूर्यात्केंद्रेकादशाष्टमद्वितीयेषुशुभः १ । ४ । ७ । १० । ११ । ८ । २ उपचयेष्वाद्येषुखेचोदयात् उदयाल्लग्नात्तृतीयषष्ठदशमैकादशप्रथमचतुर्थेषुशुभः ३ । ६ । १० । ११ । १ । ४ धर्मायारिदशांत्यमृत्युषुबुधात् बुधाद्बुधस्थाना

न्त्यमेकादशपञ्चदशमद्यादुशाष्टमेपुसुधः १ । ११ । ६ । १० । ११ । १८ चन्द्राच्चिषड्डासगः चन्द्रस्थानात्तृतीयषष्ठैकादशेषुशुभः १ । ६ । ११ पश्चात्स्यापमतः सिता
त् शुक्रस्थानात् पञ्चदशैकादशेषुशुभः ९ । १२ । ११ सुरगुरोःमास्त्र्यंत्यपीशत्रुषु सुरगुरोःजीवादेकादशद्वादशपञ्चमषष्ठेषुशुभः ११ । १२ । ५ । ६ तथान्यसत्य
एकादशपञ्चमषष्ठगोर्कजः स्यात्शुभस्तृतीयेच ११ । ५ । ६ । ३ स्थानान्निशाकरस्यतुपञ्चमषष्ठेभनवमेचैव ११ । २ । ६ येष्वात्मनोरविरिक्तेषुभास्करि स्यात्शौरिस्था
नात् आदित्याष्टकवर्गेपठ्यते स्वात्स्थानाद्दिनसकरस्तृतीयपञ्चषष्ठमात्रिकोणानि हिलेश्च २ । ६ । ११ । ५ । ९ एतानिहिलाजातानि १ । २ । ४ । ७ । ९ । १० । ११ । ८
अत्रवराहमिहिरदस्यधिकनवमस्थानतच्चयवनेश्वरविरोधितारद्वाहमिहिरेणेत्युक्तं तथान्ययवनेश्वरः पापमश्नतिनवमेविधत्तइति जीवादित्रिः षट्पञ्च
मपञ्चिमैकादशेस्यम ९ । ५ । १२ । ११ ध्यात्मसुतविजयलाभस्यकर्मणः पुष्कलोनृणा भौमस्थानात्सौरिः ३ । ५ । ६ । ११ । १२ । १० पश्चोत्योपात्य
गः शुक्रात् ६ । १२ । ११ दशमैकादशषष्ठाष्टमात्यनवमोर्कजः सौम्यात् १० । ११ । ६ । ८ । १२ । ९ स्थानाद्रिपोळभान्कुभस्तुळमायथास्तूयी आ
त्माष्टकवर्गेपठ्यते दशमैकादशषष्ठतृतीयगोळमणभ्रतुर्थमूलमात् १० । ११ । ६ । ३ । १ । ४ तथान्यस्वल्पजातके स्यात्सौरस्त्रिकृतायोगः ३ । ५
११ । ६ कुजात्स्वकर्मसहितेषु ३ । ५ । ११ । ६ । १२ । १० स्वायाष्टकेन्द्रगोर्को २ । ११ । ८ । १ । ४ । ७ । १० चन्द्रात्मघात्सलाभेषु ६ । १२ । ११ भिषद्दा
यगः शशांका ३ । ६ । ११ दुदयात्स्वसुखायकर्मणो २ । ६ । ११ । ४ । १ । १० पशुरोःसुतषट्व्ययायगो ५ । ६ । १२ । ११ ह्याद्ययायारिपुद्दि
वाषस्थः १२ । ११ । ६ । १० । १ । ८ इतिसौरस्याष्टकवर्गः ७ अथाष्टकवर्गफलनिरूपणार्थमालिन्याह इतिनिगदितमिति इत्यने
केनप्रकारेणयन्निगदितमुक्तंतदिष्टनेष्टमन्यत् यदन्यान्निगदितंतत्सर्वपनिष्टमशोभन एतदुक्तंभवति स्वादर्कः प्रथमायवंधुनिधनइत्यनेना
यान्युक्तानिस्थानानितेषामेवफल विशेषादधिकफलविपाकमेवमिष्टानिष्टयोःफलयोःविशेषात्संशोधनादधिकमिष्यते तत्फलविपाकंभवति एतज्जन्मा

जन्मस्थाने यत्रस्थाने ग्रहा स्थिता. तस्मात्स्थानाच्छुभाशुभानि फलानि प्रयच्छंति न तथा तत्कालाक्रांतराशितः एतदुक्तं भवति यानि शुभस्थानान्याचार्ये
णपठितानि तानि बिंदूपलक्षितानि कार्याणि यान्यशुभानि तानि रेखापलक्षितानि ततइष्टानिष्टयोः विशेषमंतरं कृत्वा अवशिष्टस्य फलस्य पक्तिरिति यत्रबिं
दूष्टकंजातं तत्रशुभफलं संपूर्णं यत्र च षड्बिंदवस्तत्र पादोनं फलं यत्र च बिंदुचतुष्टयं तत्रार्द्धफलं यत्र बिंदूद्वौ तत्र पादफलं असुभफलस्यैवं रेखाभिः कल्पना कार्या तत्र
चानिमिषपरमांशके विलग्ने इत्यत्र प्रयोगे जातस्यांगारकस्याष्टकवर्ग उदाह्रियते तत्राचार्यपठितानि स्थानानि बिंदूपलक्षितानि कार्याणि अपठितानि अशुभानि
स्थानानि रेखोपलक्षितानि कार्याणि तद्यथा ग्रहसंस्था मीनलग्नगतः शुक्रः मेषे द्वितीयस्थानस्थोर्कः तृतीये वृषे चंद्रबुधौ पंचमस्थाने कर्कटस्थो जीवः

इतिनिगदितमिष्टंनेष्टमन्यद्विशेषादधिकफलविपाकं जन्मभात्तत्रदद्युः उपचयगृह
मित्रस्वोच्चगैः पुष्टमिष्टं त्वपचयगृहनीचारातिगैर्नेष्टसंपत् ८ इत्यष्टकवर्गः

अष्टमे तुलायां शनैश्चरः एकादशे मकरस्थो भौमः अनया ग्रहसंस्थया प्रदर्श्यते न्यासः वक्रस्तूपचयेष्विनाष्टतनये स्वाद्याद्यादिकेषूदयाच्चंद्राद्विग्विफलेषु-
केंद्रनिधनप्रास्यर्थग स्वाच्छुभः धर्मायाष्टमकेंद्रगोर्कतनयाज्ज्ञात्षट्त्रिधीलाभगः शुक्रात्षड्व्ययलाभ १२ मृत्युषुकरोः कर्मांत्यलाभारिषु १ अष्ट-
कुंडलिकान्यासः अथशुभाशुभफलविशेषः क्रियते तत्र मेषे रेखापंचकं बिंदुत्रयं च जातं रेखात्रयं बिंदुत्रयं चापास्य द्वे रेखे जाते तस्मादेवंविधे योगे जात-
स्यसदैवचार वशात् मेषस्थोंगारको ष्टभागद्वयेनाशुभः वृषे रेखापंचकं बिंदुत्रयं जातं रेखात्रयं बिंदुत्रयं चापास्य द्वे रेखे जाते तस्माद्वृषस्थो भौमो ष्टभागद्वये
नाशुभो भवति मिथुने रेखापंचकं बिंदुत्रयं च जातं रेखात्रयं बिंदुत्रयं चापास्य द्वे रेखे जाते तस्मिन्मिथुनस्थो भौमो ष्टभागद्वयेनासुभः कर्कटे बिंदुचतुष्टयं

न्नवमैकादशपञ्चदशमहाद्याष्टमेषुसुधः १ ।११।६।१०।१२।८ चन्द्राच्चिषड्भागः चन्द्रस्थानात्तृतीयषष्ठैकादशेषुशुभः २।६।११ पश्चात्त्यायगतःसिता
त् शुक्रस्थानात् पञ्चद्वादशैकादशेषुशुभः ५।१२।११ सुरगुरोःप्राप्तान्त्यारिपु सुरगुरोःजीवादेकादशद्वादशपञ्चमषष्ठेषुशुभः ११।१२।५।६ तथान्त्यसत्य
एकादशपञ्चमषष्ठगोर्कजा त्स्वाच्छुभस्तृतीयेच ११।५।६।३ स्थानान्निशाकरस्यतुपञ्चमकर्मोपचयेष्वेव १।३।६ येष्वात्मनोरविस्त्रेषुभास्करात्स्वारशोरविस्था
नात् आदित्याष्टकवर्गेपठ्यते स्वारस्थानाद्दिनकरस्तृतीयषष्ठात्यमत्रिकोणानि हित्वेष्टः २।६।१२।५।९ एतानिहित्वाजातानि १।२।४।७।९।१०।११।८
अत्रवराहमिहिरादस्याधिकनवमस्थानतच्चयवनेश्वरविरोधितादराहमिहिरेणेत्युक्त तथान्त्ययवनेश्वरः पापप्रवृत्तिनवमेविधत्तइति जीवादिष्टः षट्पञ्च
मपाश्विमैकादशस्थम् ६।५।१२।११ स्यात्सुतविजयलाभार्थकर्मगः पुष्कलोनृणां भौमस्थानात्सौरिः ३।५।६।११।१२।१० षष्ठारव्योपात्य
गःशुक्रात् ६।१२।११ दशमैकादशषष्ठाष्टमात्यनवमोर्कजः सौम्यात् १०।११।६।८।१२।९ स्थानाद्विशोठभान्छुभस्तुलमायथास्तुर्यः आदि
त्याष्टकवर्गेपठ्यते दशमैकादशषष्ठतृतीयगोठभगम्ततुर्यमूठघात् १०।११।६।३।११।४ तथान्त्यस्वल्पजातके स्वात्सौरस्त्रिसुताधारिगः३।५
११।६ कुजाद्दंत्यकर्मसहितेषु ३।५।११।६।१२।१० स्वायाष्टकेन्द्रगोर्को २।११।८।१।४।७।१० चन्द्रात्स्वात्यलाभेषु ६।१२।११ त्रिषष्ठा
यगः शशाङ्का ३।६।११ इदयात्सस्वसायकर्मणो २।६।११।४।१।१० यगुरोःसुतषट्व्ययायगो ५।६।१२।११ ज्ञाच्चयायरिपु
वान्त्यस्थ ९।१२।११।६।१०।९।८ इतिसौरस्याष्टकवर्गः ७ अथाष्टकवर्गफलनिरूपणार्थंमालिन्याह इतिनिगदितमिति स्वने
त्तेनप्रकारेणयन्निगदितमुक्ततदिष्टनेष्टमन्यत् यदन्यन्निगदितत्तत्सर्वमनिष्टमशोभन एतदुक्तभवति स्वादर्कःप्रथमायतबन्धुनि
यान्युक्तानिस्थानानितेषामेषुफल विशेषाद्धिकफलविपाकमेवमिष्टानिष्टयोःफलयोःविशेषात्संशोधनादधिकफलमिष्यते तत्फलविपाकभवति एतच्चन

यस्तुचतुर्भिर्नेष्टः सर्वफलेकल्पनाप्येवं ननुपूर्वमुक्तं एकग्रहस्यसदृशेफलयोर्विरोधेनाशंवदेद्यधिकंपरिपच्यतेतत् इतिनिगदितमिष्टनेष्टमन्याद्दशयादीत
पुनरुक्तं उच्यते नैतत्पुनरुक्तं अष्टकवर्गविनायदुक्तमेकग्रहस्यसदृशफलयोर्विरोधइति तत्रसदृशयोःफलयोर्विरोधेनाशोविज्ञेयः यथासएवग्रहः कया
पियुक्त्यासुवर्णदोभवति सएवयुक्त्यंतरेणस्त्रवर्णापहारीतदानसुवर्णदोभवति नसुवर्णापहारीचेति यदधिकंपरिपच्यतेतत्रतत्रापि यदिकारणद्वये
नस्त्रवर्णापहारीभवति कारणेनैकेनसुवर्णदस्तथापिस्त्रवर्णापहारीभवति नसुवर्णदः अथकारणद्वयेनस्त्रवर्णदः कारणेनैकेनस्त्रवर्णापहारी तथा
पिकारणद्वयस्याधिक्यात्सुवर्णदएव एवंतत्रसदृशेफलयोर्विरोधेनाशंवदेन्नाशसदृशयोःइहतुपुनः सदृशेपिफलयोर्विरोधेनाशएवेति तद्यथा
बादरायणयवनेश्वरादिभिरष्टकवर्गेभिहितं अस्यग्रहस्यस्थानादयंग्रहः स्वस्मिन्स्थानेतिष्ठमानइमानिशुभान्यशुभानिफलानिप्रयच्छती
ति तत्रासदृशान्यपियदितानिफलानिभवंति तथापितेषांशुभाशुभविरोधादेवनाशंवदेत् विशेषादधिकफलविपाकजन्मभात्तन्नदद्युरि
ति यथाकश्चिद्ग्रहः केनचित्कारणेनस्त्रवर्णदोभवत्यपरेणरूप्यापहारीच तथाप्यसदृशोरपिफलयोर्विरोधेदानहरणात्मकेनशुभोनाप्यशुभ
इतिकल्पनीयः एवंस्थानाष्टकायत्रस्थानेबहुभिः शुभोभवत्यल्पेनाशुभः तत्रशुभाशुभफलविशेषंकृत्वाशुभमेवकल्पनीयं अनेनैव
प्रकारेणस्थानसंज्ञामात्रेणस्थानशुभाशुभत्वमेवोक्तं नपृथक्फलनिर्देशोयवनेश्वरादियावत् यद्येवंचाष्टकवर्गप्रधानंतत्संहितायांगोचर
फलेचंद्रस्थानात् किमितिपृथक्फलनिर्देशोवराहमिहिरेणकृतः जन्मन्यायासदोर्कइत्येवमादि अत्रोच्यते तस्मादष्टकवर्गफलविशेषाद्यदति
रिच्यते तदेववक्तव्यमिति तदेवपूर्वप्रत्ययनार्थमतिप्रसिद्धत्वाद्गोचरस्यान्यमतमेवांगीकृत्वोक्तं तथाच यात्रायांतेनैवोक्तं यस्यगोच
रफलप्रमाणतातस्यवेधफलमिष्यतेनवा प्रायशोबहुषुसंमतंत्विदंस्थूलमार्गफलदोहिगोचरइति यवनेश्वरेणापिपृथक्पृथक्फलनिर्दे-

रेखाचतुष्टयन्नजातम् तत्रनकिंचिदवशिष्यते तेनतत्स्थानेनशुभनाप्यशुभ समत्वान्मध्यम सिंहेबिंदुपंचकरेखात्रयंन्नजात रेखात्रयबिंदुत्रयचापा
स्यबिंदुद्वयंजातच तस्मात्तस्यसदैवसिंहस्थोभौमोष्टभागद्वयेनशुभोभवति कन्यायांरेखाषट्कबिंदुद्वयन्नजात बिंदुद्वयरेखाद्वयचापास्यरेखाचतुष्टय



जात तस्मात्कन्यास्थोभौमोष्टभागचतुष्टयेनाशुभः तुलायांरेखात्रयबिंदुपंचकन्नजात तत्ररेखात्रयबिंदुत्रय
चापास्यबिंदुद्वयजात तेनतुलास्थोभौमोष्टभागद्वयेनसदैवशुभः वृश्चिकेरेखासप्तकमेकोबिंदुर्जातः तत्र
बिंदुरेखाचापास्यरेखाषट्कजात तस्माद्वृश्चिकस्थोभौमोष्टभागषट्केनाशुभः धनुषिरेखाषट्कंबिंदुद्वयंच
तु तत्ररेखाद्वयबिंदुद्वयचापास्यरेखाचतुष्टयन्नजात एवमष्टभागचतुष्टयेधन्विस्थोभौमोसदैवाशुभः मक
रेरेखात्रयंबिंदुपंचकन्नजात तत्ररेखात्रयंबिंदुत्रयचापास्यबिंदुद्वयजात तेनमकरस्थोभौमोष्टभागद्वयेन
शुभः कुंभेरेखाचतुष्टयबिंदुत्रयन्नजातं अत्रचद्वस्थानात् दशमस्थान भौमस्यसमत्वात्समोबिंदु
र्नजातस्तस्माद्रेखात्रयबिंदुत्रयचापास्य एकारेखाजातातस्मात्कुंभस्थोष्टमभागेनैकेनाशुभः मीनेरे-
खापंचकबिंदुत्रयन्नजात रेखात्रयबिंदुत्रयचापास्यरेखाद्वयन्नजात तस्मान्मीनस्थोभौमोष्टभागद्वये
नाशुभः अस्यतोशुद्धोस्थापना एवशुभाशुभान्यधिकृत्यारोपफलानिभवंति तेषासशोध्य
शिष्यतेतदादेश्यं यत्ररेखाचतुष्टयंबिंदुचतुष्टयंचभवति तत्रसममध्यस्थोग्रहोभवति यत्ररेखाएकतत्रातीवाशुभः यत्रबिंदुएकत ।
तीवशुभः एवजन्मकालाक्रांतराशिवशेनसर्वग्रहाणामष्टकवर्गःकार्यः तथाचबादरायण एकेनयःशुभःस्यात्सद्विस्थाने सपापदोष

ग्रहइवफलमनुदद्याच्चंद्रस्तुयदीदृशःकष्टः वराहमिहिरोप्यबलानांग्रहाणांफलदाने असमर्थानांयात्रायामाह नीचस्थाग्रहविजितारव्यभिभूता-
विरश्मयोन्हस्वाः भुजगाइवमंत्रहताभवंतिकार्याक्षमालग्ने यात्रायांयवनेश्वरोपि स्ववर्गसंस्थाबलिनोविशेषाग्रहायथोद्दिष्टफलप्रदाःस्युः नीचेजि
ताश्चारिगृहेल्पवीर्यास्तेभंत्यनिष्टेष्टफलप्रवृत्तिं तत्रशास्त्रेषुयानिचान्यान्युच्चादिसंस्थानांशुभाशुभफलप्रवृत्तिप्रदर्शकानिनीचारिस्थानामशुभफ-
लप्रदर्शकानितानिजन्मसमयेज्ञेयानि यानिचशुभानामशुभानांवाफलानिग्रहवशेनैवपुष्टिप्रदर्शकानितानि चारवशात्फलदानकालेग्रहस्यज्ञेया-
नीति ८ इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतावष्टकवर्गाध्यायोनवमःसमाप्तः ९ अथातःकर्माजीवाध्यायोव्याख्याय-
ते अनेनपुरुषेणकथंधनमर्जयितव्यमित्यध्यायेऽस्मिन्निरूप्यते अत्रचप्रकारद्वयेनधनदाताग्रहोभवति लग्नाच्चंद्रमाच्चयोदशमस्थो
ग्रहः सधनदाताभवति अथलग्नचंद्रयोर्दशस्थानेशून्येभवतस्तदालग्नचंद्रादित्यानांयेयेदशमराशयस्तेषांयेऽधिपतयस्तेषुनवांशकेषुपुरुष-
स्यजन्मकालेस्थितास्तेषांनवांशकानांयेग्रहाअधिपतयस्तेग्रहाः धनदातारोभवंति किंतुलग्नाच्चंद्राच्चयेदशमाग्रहाः तेअनेनप्रकारेणधनदाता
रोभवंति किंतुलग्नाच्चंद्राच्चयेदशमाग्रहाः तेअनेनप्रकारेणधनदातारोभवंति किंतुभेंद्वर्कास्पदपतिगांशनाथाअनेनप्रकारेणेति तत्रादावे
वलग्नाच्चंद्राच्चदशमस्थोग्रहोयेनप्रकारेणधनंददाति तथाभेंद्वर्कास्पदपतिगांशनाथायेनप्रकारेणधनप्रदास्तत्प्रकारद्वयप्रदर्शनंग्रहर्षिण्याह
अर्थाप्तिरिति होरेंद्वोः लग्नचंद्रयोः दिवाकराद्यैः सूर्याद्यैः ग्रहैःदशमगतैः दशमस्थानाश्रितैः पित्रादिभ्योर्थाप्तिः धनप्राप्तिः विकल्पनीया
विचिंत्या तत्रपुरुषस्यजन्मसमयेलग्नाच्चंद्राद्वायद्यादित्योदशमस्थोभवति तदापितृतोर्थाप्तिर्भवति एवंचंद्रेलग्नाद्दशमगतेपितृपत्नितःमातुः
सकाशात् भौमेलग्नचंद्रयोर्दशमेसति शत्रुतः रिपुतः बुधेमित्रात् सुहृत्तः गुरौभ्रातृतःसहजात् शुक्रेस्त्रीतः योषितः सौरेभृतकजनात्कर्मकरात् सेव

शंकत्वेतरेणाष्टकवर्गमंगीकृत्य तथान्वतद्यस्य फलाष्टवर्गे शुभपापफलेसमानकल्पायफलौमथिदीर्घ ज्यायान्तुपक्षस्यफलंविधार्यपात्नाविधान्येनसमुद्र
रेन पृथक्फलनिर्देशकलावादरायणोप्यष्टकवर्गमेवाह रूपमेवतुल्यसस्येफलेवेत्स्यातान्नाशः फलयोस्तभयान्वा शत्र्यापत्तिर्यातिरिक्तस्तयोःस्य
स्थानेस्थानेकल्पनेयप्रदिष्टा उपचयगृहमित्रस्वोच्चगो पुष्टमिष्टंपाति लभाश्चद्राहत्यान्युपचयस्थानानितथामित्रक्षेत्राणिस्वोच्चश्च एतानिशुभ-
स्थानानि शुभस्थानोपलक्षणानि उपलक्षणत्वात्स्वक्षेत्रमूलत्रिकोणत्वगृह्यते तत्रलभार्चद्रद्योपचयतोमहः स्वक्षेत्रस्थः स्वोच्चस्थोमित्र-
क्षेत्रस्योमूलत्रिकोणस्थश्चपदाशुभंफलंप्रयच्छति तदातीवपुष्टंफलंप्रयच्छति अत्रश्रीदेवकीर्तिः लभादुपचयसंस्थश्चन्द्रादासगृहमूलतुंग
स्थः मित्रक्षेत्रगतोवाफलमतिशयितः शुभदस्यात् लभाश्चंद्राद्यान्यान्यपचयस्थानानि तथाशत्रुक्षेत्रनीचानिचतान्यशुभानि तेषुस्थितोय
होपदाशुभफलंप्रयच्छति तदप्यतिनिकृष्टमिति अथोविवशुभग्रहाः शुभफलंप्रयच्छति अशुभगृहस्थश्चाशुभमल्पं किमेवविधेषु ग्रहस्यज
न्मकालेस्थितिरन्वेष्या क्रियाचारवशात्फलकल्पनेति उच्यते जन्मकालेकथमेतत् उच्यते तत्रातद्दर्शनतः तथाचदेवकीर्तिः अपचयग
तोजीवेशत्रुक्षेत्रेजन्मकालेस्यात् यस्तुसदपास्पापफलमतिशयितोयथाकाल यवनेश्वरश्च यस्तुस्वनीचारिगृहोपगोन्येर्जितोरिदृष्टोल
नुर्विवर्णः सुतापभूज्जन्मपतौयलस्येसजन्मगोवधफलोनिरुक्तः ईपस्तुसुहृत्स्वोच्चसुदिष्टदृष्टोपिचर्क्षजन्मोपचयेचलीयान् योजातकेसूत्रस्तु
जन्मसस्योदयान्छुभनत्तशुभोप्यनिष्ट तथाचसत्यः जन्मन्युपचयभवनेएकोग्रहोस्तुपचयेषुपुष्टफलः अपचयभवनोपेताः पीडास्थानेषु
पचयाय फलकालेतुपुनर्मद्वयर्न्यमन्योग्रहोवलवानेवशुभमशुभवापुष्टंफलंप्रयच्छतीति चंद्रश्शुभोपिवलरहितःपापफलोभवति अत्रश्रीदेवकी
र्तिः शुभमशुभस्तफलदयात्सयलोवलेनहीनस्तु महदल्पसर्वमशुभफलोवलविहीनश्च तथाचसत्यः क्षेत्रचर्पुस्तुपलैर्विवर्जितः शत्रुभेरिसदृष्टः

भिषक्क्रियया रोगिणां परिचर्यया च धनमाप्नोति अथ चंद्रांशो भवति तदा कृष्याकर्षणेन जलदैः शंखमुक्ताप्रवालादिभिः अंगनाभिः स्त्रीभिः जलजानां क्रयविक्रयैः अंगनानां समाश्रययोरेतैः धनमाप्नोति अथ कुजांशो भौमनवांशो यदा भवति तदा धातुभिः मृत्तिकादिभिः पकाभिः सुवर्णरूप्यताम्रादीनि भवंति ताभिः प्राप्नोति अथवा धातुभिः मनःशिलाहरितालहिंगुलकांजनप्रभृतिभिः अग्निनाग्निक्रियया प्रहरणैः खड्गचक्रकुंतचापतोमराद्यैः साहसैः असमीक्षितकार्यकरणैरथवा स्वबलक्रियारंभैः धनमाप्नोति अथ सौम्यांशो बुधनवांशको यदा भवति तदा लिपिगणितादिकाव्यशिल्पैः धनमाप्नोति लिप्यक्षरविन्यासेन गणितेन आदिग्रहणाद्व्याख्यानेन यंत्रादिप्रयोगैः काव्यक्रियया शिल्पैः चित्रपुस्तकपत्रच्छेदबाणमाल्यरचनागंधयुक्तिप्र-

अर्कांशे तृणकनकोर्णभेषजाद्यैश्चंद्रांशे कृषिजलजांगनाश्रयाच्च
धात्वग्निप्रहरणसाहसैः कुजांशे सौम्यांशे लिपिगणितादिकाव्यशिल्पैः २

भृतिभिः धनमाप्नोति २ अथ जीवांशे द्वितीयप्रहर्षिण्याह जीवांशेति जीवांशे द्विजविबुधाकरादिधर्मैरिति अथ जीवांशको यदा भवति तदा द्विजेभ्यो ब्राह्मणेभ्यः विबुधेभ्यो देवेभ्यः पंडितेभ्यो वा आकरेभ्यः सुवर्णादीनां लवणादीनां अंजनादीनां गजादीनां च समुत्पत्तिस्थानेभ्यः आदिग्रहणात् क्रियावादेन धर्मैः यज्ञदानोपवासतीर्थगुरुसेवनादिभिः धनमाप्नोति अथ शुक्रनवांशको यदा भवति तदा मणिभिः वज्रमरकतपद्मरागेंद्रनीलप्रभृतिभिः रजतेन रूप्येण आदिग्रहणात्सर्वैर्लोहैः गोभिः तथा महिषकर्मणि महिषेभ्यो वा साधुः महिष्यः श्रेष्ठमहिष्यैः धनमाप्नोति अथ सौरांशको यदा भवति तदा श्रमेण अध्वगमनादिकेन वधेन च वध्यघातितया अथवा स्वशरीरताडनाद्येन भारवाहनेन नीचशिल्पैः स्व

भिषक्क्रिययारोगिणापरिचर्ययाच्चधनमाप्नोति अथचंद्रांशोभवति तदाकृष्याकर्षणेनजलदैः शंखमुक्ताप्रवालादिभिः अंगनाभिः स्त्रीभिःजलजानां क्रयविक्रयैः अंगनानांसमाश्रयणैरेतैः धनमाप्नोति अथकुजांशोभौमनवांशोयदाभवति तदाधातुभिः मृत्तिकादिभिः पक्वाभिः सुवर्णरूप्यताम्रादीनिभवंति ताभिःप्राप्नोति अथवाधातुभिः मनःशिलाहरितालहिंगुलकांजनप्रभृतिभिः अग्निनाग्निक्रिययाप्रहरणैः खड्गचक्रकुंतचापतोमराद्यैः साहसैः असमीक्षितकार्यकरणैरथवास्वबलक्रियारंभैः धनमाप्नोति अथसौम्यांशोबुधनवांशकोयदाभवति तदालिपिगणितादिकाव्यशिल्पैः धनमाप्नोति लिप्यक्षरविन्यासेनगणितेनआदिग्रहणाद्व्याख्यानेन यंत्रादिप्रयोगैः काव्यक्रिययाशिल्पैः चित्रपुस्तकपत्रछेदबाणमाल्यरचनागंधयुक्तिप्र

अर्कांशेतृणकनकोर्णभेषजाद्यैश्चंद्रांशेकृषिजलजांगनाश्रयाच्च
धात्वग्निप्रहरणसाहसैःकुजांशेसौम्यांशेलिपिगणितादिकाव्यशिल्पैः २

भृतिभिः धनमाप्नोति २ अथजीवांशेद्वितीयप्रहर्षिण्याह जीवांशेति जीवांशेद्विजविबुधाकरादिधर्मैरिति अथजीवांशकोयदाभवति तदाद्विजेभ्योब्राह्मणेभ्यः विबुधेभ्योदेवेभ्यः पंडितेभ्योवा आकरेभ्यःसुवर्णादीनांलवणादीनां अंजनादीनांगजादीनांचसमुत्पत्तिस्थानेभ्यः आदिग्रहणात्क्रियावादेन धर्मैः यज्ञदानोपवासतीर्थगुरुसेवनादिभिः धनमाप्नोति अथशुक्रनवांशकोयदाभवति तदामणिभिः वज्रमरकतपद्मरागेन्द्रनीलप्रभृतिभिः रजतेनरूप्येण आदिग्रहणात्सर्वैर्लोहैः गोभिः तथामहिषकर्मणिमहिषेभ्योवासाधुः महिष्यः श्रेष्ठमहिष्यैः धनमाप्नोति अथसौरांशकोयदाभवति तदाश्रमेण अध्वगमनादिकेनवधेनचवध्यघाततया अथवास्वशरीरताडनाद्येन भारवाहनेन नीचशिल्पैःस्व

कलानुमिते कर्मभिः धनमाप्नोति एवंजातककालवशात्पुरुषस्य धनागमज्ञात्वा कालानुकूलकर्मेशचारवशात् कर्मसिद्धिमाह कर्मेशाध्युषितन
शकर्मसिद्धिः कर्मणिर्देशः कर्मेशः लग्नादशमराशिः तदधिप कर्मेशः सञ्चारवशाद्यस्मिन्नवांशके अध्युषितो भवति व्यवस्थितो भवति तस्यय
स्वामी तस्य यानि कर्माणि अर्कांशे तृणकन्नकोर्णभिषजार्थैरित्यादीनि तत्समानानां सिद्धिर्भवति तानि प्रारब्धानि सिद्ध्यतीति अत्र केचित्कर्मेशा
पितसमानकर्मसिद्धिरिति पठति अत्र चनवांशकग्रहणनास्तिप्रकृतत्वात् भागनुवृत्तेः नवांशको व्याख्यायते तथा च भगवान्गार्गिः शुभकर्मा यो
मेन्नवांशे वर्तते ग्रहः चारक्रमेणतत्तुल्यात्कर्मणां सिद्धिमादिशेत् ज्ञानजातकस्येदं क्रियाश्रयकर्म कर्मेशाध्युषितनवांशकपतिकर्मणा यथा

जीवांशे द्विजविबुधाकरादिधर्मैः काव्यांशे मणिरजतादिगोमहिष्यैः
सौरांशे श्रमवधभारनीचशिल्पैः कर्मेशाध्युषितनवांशकर्मसिद्धिः २

प्रारब्धानां कालानुकूलसिद्धिर्वक्तव्यानान्येषामिति २ अथ धनागमज्ञानमहर्षिणाह मित्रारिस्वगृहगतैरिति चन्द्रलग्नयोर्मेषदशमगा गृहा
स्तद्भावेच्चये भेद्कर्मसत्पतिगाशनाथा तेच यदि जन्मकाले मित्रगृहस्थिता भवति तदा स्वांतर्दशाकाले मित्रगृहस्थिता भवति ततस्तस्मात्स्व
मित्रात् मित्रतः धनप्रदा भवति अथारिगृहस्थाः शत्रुगृहगा भवति तदारितएव अथ स्वगृहस्थास्तदा स्वगृहादेव धनप्रदा भवति तुगस्थे बलिनीति
यस्य पूर्वविधिना भास्करः सूर्यो धनप्रदो ज्ञातः तस्मिन्तुंगस्थे उच्चगे मेषमासे तद्बलिन्यन्यैर्बले कालचलाद्यैर्युक्ते तदा स पुरुषः स्वशौर्यादुलमर्जय
ते स्वविक्रमार्जितधनो भवतीत्यर्थः आयस्थेऽपि सौम्ये शुभग्रहे जन्मन्यायसंस्थैरेकादशस्थानगतैः उदयधनाश्रितैश्चलग्नगैः द्वितीयस्थान

गतैर्वर्तैश्चबलसहितैः वीर्यवद्भिः जातः अनेकधाबहुभिःप्रकारैःस्वधनंप्राप्नोतीति संचिंत्यंनिश्चयःकार्योयेनयेनप्रकारेणधनार्जनमाकांक्षतेतेनतेन प्रकारेणयत्नाद्वाप्नोतीत्यर्थः तथाचभगवान्गार्गिः धनदाजन्मसमयेमित्रारिस्वगृहोपगाः यस्यतस्यधनंदद्युर्मित्रारिस्वगृहोद्भवम् धनदोभास्क रोयस्यतुंगेबलसमन्वितः भवेज्जन्मनियस्यस्याद्वित्तमात्मोद्यमार्जितं लाभार्थलग्नगैःसौम्यैर्येनयेनैवकर्मणा धनार्जनंप्रार्थयतेतेनयत्नात्स मस्तुतइति ४ इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौकर्माजीवाध्यायोदशमः १० अथातोराजयोगाध्यायोव्याख्यायते तत्रादावेवयवनानांजीवशर्मणश्चमतंवैतालीयेनाह त्रिप्रभृतिभिरुच्चस्थैर्नृपवंशभवाभवंतिराजानः इतिसर्वजातकेषुप्रसिद्धं तत्रैतावद्यव-

मित्रारिस्वगृहगतैर्ग्रहैस्तथोर्यातुंगस्थेबलिनिचभास्करेस्ववीर्यात् आयस्थैरुदयधना
श्रितैश्चसौम्यैःसंचिंत्यंबलसहितैरनेकधास्वम् ४ इतिकर्माजीवाऽध्यायः

नानांमतभेदः यस्यजन्मसमयेक्रूरैः पापग्रहैःस्वतुंगगैः स्वोच्चस्थैर्जातोमहीपतीराजाभवति किंतुक्रूरमतिःपापबुद्धिरिति प्राहुःकथयंति अ थादेवसौम्यैरुच्चगतैः महीपतीधर्मात्माचभवति मिश्रैरुच्चगतैर्मिश्रस्वभावोराजाइति एषएवार्थोमणित्थेनाभिहितः तथाचतद्वाक्यं पापैःपापम ति-स्वोच्चगतैर्धर्मवांस्तथासौम्यैः व्यामिश्रैर्मिश्रमतिः पृथ्वीशोजायतेमनुजः क्रूरैस्त्विति जीवशर्मणःपक्षेतन्मतेक्रूरैस्तूच्चगतैः क्षित्यधिपोन राजाप्रजायते किंतुराज्ञातुल्योधनवान्भवति तथाचतद्वाक्यं पापैरुच्चगतैर्जातानभवंति नृपानराः किंतुवित्तान्वितास्तेस्युः क्रोधिनः कलह प्रियाइति वराहमिहिरस्ययवनेश्वरमतमभिप्रेतं यतस्तेनसामान्येनैवस्वल्पजातकेभिहितं त्रिप्रभृतिभिरुच्चस्थैर्नृपवंशभवाभवंति राजानः

पन्नादिभिरन्यकुलोद्भवाश्चनृपाःत्रिकोणगतैरिति १ अथद्वात्रिंशद्राजयोगान्वसततिलकेनाह वक्रार्कजाइति वक्रोङ्गारकः अर्कजः सौरः अर्कः
पूर्णाः गुरुर्जीवः एतैः वक्रार्कजार्कगुरुभिः भौमशनिसूर्यजीवैः सकलैः सर्वैश्चतुर्भिरपिस्वोच्चेषुस्थितैः कथितेकलग्नेएषांकथितग्रहाणांचतुर्णांम-
ध्यादेकैकस्मिँल्लग्नगतेचत्वारोराजयोगाभवन्ति तथात्रिभिश्च एषामेवमध्यात्रिभिः स्वोच्चगतैः कथितेकलग्नेद्वादशराजयोगाभवन्ति एवं
षोडशस्युःकाश्रितेष्विति एतेषामध्याद्वाभ्यामुच्चगताभ्यामनयोर्मध्यादेकस्मिँल्लग्नगतेशशिनिचंद्रेस्वक्षेत्रगेकर्कटस्थेतेषामेव वक्रार्कजार्कगु
रूणामध्याद्द्वद्वयेस्वोच्चाश्रितेतदेकतमेविलग्नगेद्वादशराजयोगाभवन्ति एकाश्रितेषुच तेषामेवमध्यादेकस्मिन्नुच्चाश्रितेतस्मिन्नेवविलग्नगेचत्वारो

अथराजयोगाध्यायमारभः प्राहुर्यवनाःस्वतुंगगैः क्रूरैः क्रूरमतिर्महीपतिः
क्रूरैस्तुनजीवशर्मणः पक्षक्षित्याधिपःप्रजायते १

राजयोगाभवन्ति एवंषोडशश्लोकैः पूर्वोक्तैः सहद्वात्रिंशत् तद्यथा मेषेर्कः कर्कटेजीवः तुलेसौरः मकरेकुजः शेषाःयथेष्टं ईदृश्यांग्रहसंस्थायांमेष
लग्नगतेएकोयोगः १ कर्कटेद्वितीयः २ तुलेतृतीयः ३ मकरेचतुर्थः ४ एवंवक्रार्कजार्कगुरुभिः सकलैः स्वोच्चेषुतदेकतमेलग्नेचत्वारोराजयोगाः
त्रिभिः तद्यथा मेषेर्कः कर्कटेजीवः तुलेसौरः शेषायथेष्टं ईदृश्यामपिग्रहसंस्थायांमेषलग्नेएकोयोगः कर्कटेद्वितीयः तुलेतृतीयः पूर्वैः सहसप्त ७ अ
थमेषेर्कः कर्कटेजीवः मकरेभौमः शेषायथेष्टम् ईदृश्यांचग्रहसंस्थायांमेषलग्नेएकोयोगः कर्कटेद्वितीयः मकरेतृतीयः पूर्वैः सहदश १० अथ
मेषेर्कः तुलेसौरः मकरेभौमः शेषायथेष्टम् ईदृश्यांचग्रहसंस्थायांमेषलग्नेएकः तुलेद्वितीयः मकरेतृतीयः ३ मवत्रयोदश १३ अथकर्कटेजीवः

तुलेसौरः मकरेभौमः शेषायथेष्टम् ईदृश्यांचग्रहसंस्थायांकर्कटेएकः तुलेद्वितीयः मकरेतृतीयः ३ एवंषोडशराजयोगाः १६ चतुर्भिःत्रिभिःस्वोच्चगतैःत
द्वेकृतमेविलग्नेइतिगतम् द्व्येकाश्रितेष्वित्यादियोगेषुयावत्कर्कटेचंद्रमानभवति तावद्योगाएवनभवंति तद्यथा द्व्याश्रितेषुग्रहेषुस्वक्षेत्रगतेचचंद्रेद्वादशरा
जयोगाव्याख्यायंते तद्यथा मेषेर्कः कर्कटेचंद्रजीवौशेषायथेष्टं ईदृश्यांचग्रहसंस्थायांमेषलग्नेएकोयोगः कर्कटेद्वितीयः २ अथमेषेर्कः कर्कटेचंद्रः
तुलेसौरः शेषायथेष्टम् तदामेषेतृतीयः ३ तुलेचतुर्थः४ अथमेषेर्कः कर्कटेचंद्रः मकरेभौमः शेषायथेष्टं तथामेषेपंचमः ५ मकरेषष्ठः ६ अथ
कर्कटेचंद्रजीवौ तुलेसौरः शेषायथेष्टम् तथाकर्कटेसप्तमः ७ तुलेऽष्टमः ८ अथकर्कटस्थौचंद्रजीवौ मकरेभौमः शेषायथेष्टम् तदाकर्कटेन

चक्रार्कजार्कगुरुभिःसकलैस्त्रिभिश्चस्वोच्चेषुषोडशनृपाःकथितैकलग्ने
द्व्येकाश्रितेषुचतथैकतमेविलग्नेस्वक्षेत्रगेशशिनिषोडशभूमिपाःस्युः २

वमः ९ मकरेदशमः १० अथतुलेसौरः मकरेभौमः कर्कटेचंद्रः शेषायथेष्टं तदातुलेएकादश ११ मकरेद्वादश १२ द्व्याश्रितेष्वितिगतं
अथैकाश्रितेषुकर्कटस्थेचंद्रेमेषस्थेर्केमेषलग्नेएकः १ कर्कलग्नेतद्गतयोश्चंद्रजीवयोः द्वितीयः२ कर्कटस्थेचंद्रेतुलास्थेसौरेतस्मिन्नेवलग्नेतृ
तीयः ३ कर्कटस्थेचंद्रेमकरस्थेभौमेतस्मिन्नेवलग्नेचतुर्थः ४ एवंपूर्वैर्द्वादशभिः सहषोडशश्लोकपूर्वोक्तैः षोडशभिः सहद्वात्रिंशद्राजयो
गाख्याताः ३२ २ अथचतुश्चत्वारिंशद्राजयोगाननुष्टुभाह वर्गोत्तमगतेलग्नइति लग्नेजन्मकालिकेलग्नेवर्गोत्तमगतेस्वनवांशकस्थइत्यर्थः
तस्मिंश्चंद्रवर्जितैरन्यग्रहैश्चतुराद्यैः दृष्टेचतुर्भिः पंचभिः षड्भिर्वावलोकितेद्वाविंशतिराजयोगाः स्मृताःउक्ताः अत्रलग्नेचंद्रदृष्टेनयोगभंगः किंतु

पश्यतामध्यनगण्यत सनुपश्यतुमतापश्यतु अन्यैश्चतुर्थादिभिः ग्रहैर्दृष्टेराजयोगोभवति एवंवर्गोत्तमगतेलग्नेद्वाविंशतियोगाः २२ एवंचंद्रेवर्गोत्तमराशिस्थेचतुरायैर्ग्रहैः दृष्टेद्वाविंशतियोगाभवंति एवंचतुश्चत्वारिंशत् ४४ अथलग्नेचंद्रेवाचतुर्भिर्दृश्यमानेपंचदश १५ विकल्पाभवंति पंचभिः दृश्यमाने ६ षड्विकल्पाभवंति षड्भिरेकः १ एवंद्वाविंशति २२ तद्यथा लग्नेचंद्रेवारविभौमबुधगुरुभिः दृश्यमानेएकोयोगः रविभौमबुधसितैः द्वितीयः २ रविभौमबुधसौरैः तृतीयः ३ रविभौमजीवसितैश्चतुर्थः ४ रविभौमजीवसौरैः पंचमः ५ रविभौमशुक्रसौरैः षष्ठः ६ रविबुधजीवशुक्रैः सप्तम ७ रविबुधजीवसौरैरष्टमः ८ रविबुधशुक्रसौरैर्नवमः ९ रविजीवशुक्रसौरैर्दशमः १० भौमबुधजीवशुक्रैरेकादशः ११ भौमबुधजीवसौरैर्द्वादशः १२ भौम

वर्गोत्तमगतेलग्नेचंद्रेवाचंद्रवर्जितैः
चतुराद्यैर्ग्रहैर्दृष्टेनृपाद्वाविंशतिः स्मृताः ३

बुधशुक्रसौरैस्त्रयोदशः १३ भौमजीवशुक्रसौरैश्चतुर्दशः १४ बुधजीवशुक्रसौरैः पंचदशः १५ एवंचतुर्भिरपिविकल्पाःपंचदश अथपंचविकल्पाः रविभौमबुधजीवशुक्रैरेकः १ रविभौमबुधजीवसौरैर्द्वितीयः २ रविभौमबुधशुक्रसौरैस्तृतीयः ३ रविभौमजीवशुक्रसौरैश्चतुर्थः ४ रविबुधजीवशुक्रसौरैःपंचमः ५ भौमबुधजीवशुक्रसौरैःषष्ठः ६ एवंपंचविकल्पैःषट् पूर्वोक्तैः पंचदशापि सहैकविंशति २१ रविभौमबुधजीवशुक्रसौरैः षड्भिरेकः १ एवंद्वाविंशति २२ उभाभ्यांप्रकारेणमेवंचतुश्चत्वारिंशत् ४४ परमार्थेनतुयोगद्वयमेवतद्यथा वर्गोत्तमगतेचंद्रेचतुराद्यैर्दृष्टे एकः उभेद्वितीयः संख्याप्रदर्शनगणितप्रदर्शनार्थं अत्रैवचंद्रमसोपिराशौवर्गोत्तमावस्थितिनिरूप्यगणितंक्रियतेतदेतेषामेवयोगाना

चतुःषष्ठ्यधिकंशतद्वयंसंभवति एवंप्रत्येकस्मिन्वर्गेवर्गोत्तमस्थेचतुःषष्ठ्यधिकमेवयोगशतद्वयं एवंचंद्रलग्नयोर्योगानामेकीकृतानांपंचशतान्य ष्टाविंशत्यधिकानिभवंति तथाचमांडव्यः विलग्नभवनंगतेबलयुतेचवर्गोत्तमेचतुःप्रभृतिभिर्ग्रहैः शशिनिवासमालोकिते ससंभवति पार्थिवः खलु कृपाणपापीरणेकदाचिदपिवीक्ष्यतेरिपुजनेनयस्याननम् ११३ अथशिखरिण्यापंचयोगानाह यमेइति यमेसौरेकुंभस्थेअर्केसूर्येऽजेमेषस्थेस ति शशिनिचंद्रेगविवृषस्थितेतैरेवतनुगैः तेषांग्रहाणामेकतमेतनुगेलग्नस्थेनकेवलंयावच्छशिजगुरुवक्रैः बुधजीवभौमैः नृयुकुसिंहालिस्थैः मिथुन हरिवृश्चिकस्थैः जातानृपतयोराजानोभवंति चकारोत्रलुप्तोद्रष्टव्यः तत्रैतज्जातं सौरःकुंभे रविर्मेषेचंद्रोवृषे बुधोमिथुने जीवःसिंहे भौमोवृश्चिके

यमेकुंभेर्केजेगविशशिनितैरेवतनुगैर्नृयुकुसिंहालिस्थैःशशिजगुरुवक्रैर्नृपतयः
यमेंदूतुंगेंगेसवितृशशिजोषष्ठभवनेतुलाजेंदुक्षेत्रैःससितकुजजीवैश्चनरपो ४

ईदृश्यांग्रहसंस्थायांकुंभलग्नेएकोयोगः १ मेषेद्वितीयः २ वृषेतृतीयः ३ यमेंदूइति सौरचंद्रौ तुंगेउच्चेनकेवलंयावदंगेतनौलग्नेइत्यर्थः सवितृ शशिजौसूर्यबुधौषष्ठभवने कन्यायां तुलाजेंदुक्षेत्रैः तुलाप्रसिद्धा अजोमेषः इंदुक्षेत्रंकर्कटः एतैर्यथासंख्यंससितकुजजीवैः शुक्रभौमगुरु युक्तैः नरपोद्वौराजयोगाविति तत्रैतज्जातं तुलेसौरः वृषेचंद्रः कन्यायामर्कबुधौतुलेशुक्रः मेषेभौमः कर्कटेजीवः ईदृश्यांग्रहसंस्थायांतुला लग्नेएकोयोगः १ वृषेद्वितीयः २ पूर्वैस्त्रिभिःसहपंच ५ अत्रषष्ठभवनेषष्ठराशौलग्नात्केचिदिच्छंति एतदुक्तं यस्मात्तुलस्थेशुक्रेमीनस्थस्या र्कस्यासंभवः तथाचबादरायणः तुलालग्नेसितसौरौमेषेभौमोगुरुःकुलीरगतः कन्यायांरविशशिजौजातोनृपतिर्वृषेसचंद्रोवा ४ अथान्यद्राज

योगत्रयशिखरिण्याह कुजेतुगे कैंद्रोरिति कुजे भौमेतुगस्थे उच्चस्थे मकरगते इत्यर्थः अर्के द्वौ सूर्यशशिनो धनुषि चापे स्थितयोः यमलभे यत्र तत्र गतैल मे शनैश्चरे तत्र गते मकरस्थ इत्यर्थः एवंविधे योगे जातः कुपति भूमीशः नृपतीराजा भवति यमलभे इति मकरकुंभयोः अन्यतमे लभे इति व्याख्यातं यमस्य लभे यमलग्न इति ये श्चित् एतत्र राशावपस्थिते सौरे लग्नगे इति व्याख्यानम् तच्चायुक्त यस्माद्बादरायणः लग्ने सौरस्तुगे भौमश्चन्द्र रिःौ चापभासाविति अस्माकं त्वयमत्याख्यासाध्वी प्रतिभाति यस्मान्मांडव्य आदित्यश्च निशाकरश्च भवतो वागीश्वरः गौपदासाद्ध भास्करिणा स्वराशिसहितः प्रासो मृगे मंगलः प्राप्नोति प्रथमं तव वासमुकुटी स्यापालनूडामणिश्चस्पति प्रतिपार्थिनोरणमुखे यस्मात्क्ष्मानादिव पति भूमेश्चान्य इति अ

कुजेतुगे र्के ह्वौ इन्दु धियमलभे च कुपति पतिर्भूमेश्चान्यः क्षितिसुतविलग्ने शशाशिनि
सचंद्रे सौरे स्तेरुरपतिगुरौ चापधरगे स्वतुंगस्थे मानावुदयमुपयाते क्षितिपतिः ५

स्मिन्नेव योगे क्षितिसुतविलग्ने भौमे च शशिनि चन्द्र युक्ते लग्नगे क्षितिसुतो गारकः तस्मिन्स्तोच्चस्थे शशिनि चन्द्रमसो युक्ते केंधनुर्धरस्थे राजयोग तत्रैत तं मकरलग्ने न ग्रागारकयुते धनुर्धरगते र्के अन्यो द्वितीयो भूमेः पतिर्भवति राजा इत्यर्थः अत्र च बादरायणः भानुश्चापे सेंदु भौमस्तुगप्रासो लग्ने वा स्यात् सचन्द्रे सौरे स्त इति सौरे शनैश्चरे सचन्द्रे शशिनि युक्ते तथाभूते स्ते सप्तमस्थानगते तथा सुरपतिगुरौ जीवे चापधरगे धनुर्धरस्थे भानौ आदित्ये स्वतुं गस्थे उच्चे मेषधाने उदयलग्नमुपयाते प्रासे जातः क्षितिपती राजा भवति तत्रैतज्जातं मेषलग्ने स्तेन च वार्के धन्विनि जीवः तुलागतो शशिसौरौ एवं विधे यो गे जातो राजा भवत्येव राजयोगास्त्रयः ५ अथ शिखरिण्या राजयोगद्वयमाह वृषे सेंदौ लग्न इति वृषे गवि सेंदौ इन्द्रयुक्ते लग्ने स्थिते सवितृगुरुतीक्ष्णां-

शुक्रतनयैः सूर्यजीवसौरैः यथासंख्यंसुहृज्जायारवस्थै चतुर्थसप्तमदशमस्थितैः नियमान्निश्चयात् मानवपतिः राजा भवति तत्रैतज्जातं वृषेलग्न स्तत्रैवचंद्रः सिंहेऽर्कोवृश्चिकेजीवः कुंभेसौरः एवंविधेयोगेजातोऽवश्यराजा भवति मृगेमंद इति मृगेमकरेलग्नेतत्रस्थेमंदेसौरे सहजारिपुधर्मव्य यगतैः तृतीयषष्ठनवमद्वादशस्थैः शशांकाद्यैः चंद्रांगारकबुधजीवैः एवंविधेयोगेजातः ख्यातः सर्वत्रविदितः पृथुगुणयशाः गुणाः शौर्यादयः वि स्तीर्णगुणकीर्तिः पुंगलपतिः मनुष्यनाथोभवति तनुशशांकाद्यैरित्युक्ते शुक्रः क्वगच्छतु उच्यते यथासंख्यात्पंचमस्थानस्याविद्यमानत्वात् शु क्रस्यादित्यपंचमत्वादनवकाशः तत्रैतज्जातम् मकरेलग्नस्तत्रैवसौरः मीनेचंद्रः मिथुनेभौमः कन्यायांबुधः धन्विनिजीवः शुक्रार्कौयत्रतत्र

वृषेसेंदौलग्नेसवितृगुरुतीक्ष्णांशुतनयैः सुहृज्जायारवस्थैर्भवतिनियमान्मानवपतिः
मृगेमंदेलग्नेसहजारिपुधर्मव्ययगतैःशशांकाद्यैःख्यातःपृथुगुणयशाःपुंगलपतिः ६
हयेसेंदौजीवेमृगमुखगतेभूमितनयेस्वतुंगस्थौलग्नेभृगुजशशिजावत्रनृपती

स्थौएवंविधेयोगेजातोराजाभवति पृथुगुणयशाः एवमत्रराजयोगौद्वौ तथाचमांडव्यः मृगेलग्नेसौरस्तिमियुगगतः शीतकिरणः कुजोयुग्मेना यौशशभृतसुतश्चापधरगः गुरुर्दैत्येज्यार्कौवभिमतगतौचारवशतः प्रसूतौयस्यासौभवतिनरपः शक्रसदृशः १।६ अथशिखरिण्याराजयोग त्रयमाह हयेसेंदावित्ति हयेधनुषिजीवेगुरौसेंदौसचंद्रेस्थिते भूमितनयेऽंगारकेमृगमुखगतेमकरस्थे मृगार्द्धपूर्वोमकरोमृगार्द्ध इतिवचनात् भृगुजशशिजौशुक्रबुधौस्वतुंगस्थौस्वोच्चप्राप्तौयदिलग्नेभवतस्तदानास्मिन्योगद्वयेएतत् तत्रैतज्जातं बृहस्पतौसचंद्रेधन्विगतेमकरगते-

मींमिएवंविधायाग्रहसंस्थायामीनलग्नेससुक्रेएकोयोगः कन्यालग्नेद्वितीयोयोगः सुतस्थाविति वक्रार्कौभौमसौरीसुतस्थौपञ्चमस्थानगतौ त
यागुरुशशिसिता जीवचंद्रशुक्राहिबुके चतुर्थस्थाने बुधेकन्यागतेलग्नेजातोऽन्योपरोपिनृपोराजागुणवान्भवति तत्रैतज्जात कन्यालग्नंतत्रैवबुध
मकरस्थोशनिर्भौमोधनुर्धरस्थाजीवचंद्रशुक्राः यदाभवति तदाजातोराजागुणवांश्चभवति एवंराजयोगास्त्रयः ७ अथशिखरिणयाराजयोग
यमाह झषेसेंदाविति झषेमीनेसेंदौसचंद्रेलग्नेमीनलग्नेसचंद्रे घटमृगमृगेंद्रेषुसहितेर्यमारार्कैः घट कुंभः मृगोमकरः मृगेंद्रःसिंहः तेषुयथास

सुतस्थौवक्रार्कौगुरुशशिसिताश्चापिहिबुके बुधेकन्यालग्नेभवतिहिनृपोन्योपिगुणवान् ७
झषेसेंदौलग्नेघटमृगमृगेंद्रेषुसहितेर्यमारार्कैर्भूपःसखलुमनुजःशास्तिवसुधाम्
अजेसारेमूर्तौशशिगृहगतेचामरगुरौसुरज्येवालग्नेधरणिपतिरन्योपिगुणवान् ८

र्यमारार्कैःस्थिते तत्रैतज्जात मीनोलग्नस्तत्रैवचंद्रःस्थितःकुंभेसौरः मकरेभौम सिंहेऽर्कः एवंविधेयोगेजातः यःउत्पन्न समनुजोमनु-
ष्योशास्तिवसुधांभूमिपरिपालयति राजाभवतीत्यर्थः खलुशब्दाह्यलंकारः अजेसारइति अजेमेषेसारेसभौमे मूर्तौलग्नेस्थितेतथाचा-
मरगुरौ जीवेशशिगृहगतेकर्कटस्थेजातोनृपोराजागुणवान्भवति अथवासुरज्येबृहस्पतौकर्कटस्थेलग्नगतेभौमेमेषस्थेजातोन्योपरोराजा
गुणवान्भवति एवमत्रराजयोगास्त्रय ८

अथराजयोगंविद्युन्मालयाह कर्किणीति कर्किणिलग्नेकर्कटकेलग्नेतस्थेतत्रैवव्यवस्थितेजीवेगुरौ चंद्रसितज्ञैः शशिशुक्रबुधैः आयप्राप्तैरेका दशस्थानस्थैः मेषगतेर्के आदित्येमेषस्थेजातंसंभूतंपृथ्वीनाथं भूमिपतिं विक्रमयुक्तं प्रतापसहितंविंद्याज्जानीयात् ९ अथद्रुतविलंबेन राजयोगमाह मृगमुखेति अर्कतनयः सौरः मृगमुखेमकरगतः सचतनुसंस्थोलग्नप्राप्तः तथाक्रियकुलीरहरयः मेषकर्कसिंहाः अधिपैः स्वनाथैः युक्ताः सहिताः तथामेषेभौमः कर्कटेचंद्रः सिंहेसूर्यइत्यर्थः तथाबुधशुक्रौज्ञसितौयथासंख्यंमिथुनतौलिसहितौ तथामिथुनेबुधः तुले

कर्किणिलग्नेतत्स्थेजीवेचंद्रसितज्ञैरायप्राप्तैः मेषगतेर्केजातंविंद्याद्विक्रमयुक्तंपृथ्वीनाथं ९
मृगमुखेर्कतनयस्तनुसंस्थःक्रियकुलीरहयोऽधिपयुक्ताः मिथुनतौलिसहितौबुधशुक्रौय
दितदापृथुयशाःपृथिवीशः १० स्वोच्चसंस्थेबुधेलग्नेभृगौमेषूरणाश्रिते सजीवेऽस्ते
निशानाथेराजामंदारयोःसुते ११

शुक्रः एवंविधोयदियोगोभवति तदाजातः पृथुयशाः विस्तीर्णकीर्तिः पृथिवीशोराजाभवति तत्रैतज्जातं मकरोलग्नस्तत्रैवसौरः मेषेभौमः कर्कटेचंद्रः सिंहेऽर्कः मिथुनेबुधः तुलेशुक्रः एवंविधायांग्रहसंस्थायांयत्रतत्रस्थेजीवेयदिजातोभवति तदापृथिवीशःपृथुयशाभवति १० अथराजयोगमनुष्टुभाह स्वोच्चेति बुधेस्वोच्चसंस्थेकन्यागतेलग्नगेभृगौशुक्रेमेषूरणाश्रितेदशमस्थानस्थितेनिशानाथेचंद्रेसजीवेबृहस्पतिसंयुक्तेऽस्तेसप्तमस्थानगतेमंदारयोः शनिभौमयोः सुतेपंचमेस्थितयोःजातोराजाभवति तत्रैतज्जातं कन्यालग्नेसबुधेमिथुनगतेशुक्रेगुरौसचंद्रेमीनस्थेमकरस्थयोः शनिभौमयोःजातोराजाभवति एतेराजयोगाःप्रोक्ताः ११ ७

मौमेएवंविधायाग्रहसंस्थायांमीनलग्नेसत्सुकेएकोयोगः कन्यालग्नेद्वितीयोयोगः सतस्थाविति वक्रार्कौभौमसौरौसुतस्थौपंचमस्थानगतौ त यागुरुशशिसिता जीवचंद्रशुक्राहिबुकेचतुर्थस्थानेबुधेकन्यागतेलग्नेजातोऽन्योपरोपिनृपोराजागुणवान्भवति तत्रैतज्जात कन्यालग्नतत्रैपबुधः मकरस्थोशनिर्भौमोधनुर्धरस्थाजीवचंद्रशुक्राः यदाभवतितदाजातोराजागुणवांश्चभवति एवंराजयोगास्त्रयः ७ अथशिखरिण्याराजयोगत्र यमाह झषेमेदाविति झषेमीनेमंदोसचंद्रेलग्नेमीनलग्नेसचंद्रे घटमृगमृगेंद्रेषुसहितेयमारार्कैः घटःकुंभः मृगोमकरः मृगेंद्रःसिंहः तेषुयथास-

सतस्थौवक्रार्कौगुरुशशिसिताश्चापिहिबुके बुधे कन्यालग्नेभवतिहिनृपोन्योपिगुणवान् ७
झषेमंदोलग्नेघटमृगमृगेंद्रेषुसहितेयमारार्कैर्यामुन्नतस्वलुमनुजः शास्तिवसुधाम्
अजेसारेमूर्तौशशिगृहगतेचामरगुरौसुरेज्येवालग्नेधरणिपतिरन्योपिगुणवान् ८

स्यमारार्कैःस्थिते तत्रैतज्जात मीनोलग्नस्तत्रैवचंद्रः स्थितःकुंभेसौरः मकरेभौम सिंहेऽर्कः एवंविधेयोगेजात यःउत्पन्नः समनुजोमनु-ष्योशास्तिवसुधांभूमिंपरिपालयति राजाभवतीत्यर्थः खलुशब्दोवाक्यालंकारे अजेसारइति अजेमेषेसारेसभौमे मूर्तौलग्नस्थितेतथाचा मरगुरौ जीवेशशिगृहगतेकर्कटस्थेजातोनृपोराजागुणवान्भवति अथवासुरेज्येबृहस्पतौकर्कटस्थेलग्नगतेभौमेमेषस्थेजातोन्योपरोराजा गुणवान्भवति एवमष्टराजयोगास्त्रयः ८

अथान्यद्राजयोगं विद्युन्मालिन्याह लेखास्थेइति लेखायां तिष्ठतीति लेखास्थः तस्मिन् लेखाशब्देनोदय उच्यते अर्के सूर्ये तत्स्थे लेखास्थे भूवृत्तादधो दितेन केवलं यावदजे मेषस्थे तत्रैव मेषलग्ने इंदौ चंद्रे स्थिते भौमे कुजे स्वोच्चे मकरस्थे मंदे सौरे कुंभस्थे जीवे गुरौ चापप्राप्ते धनुर्धरगते एवंविधे योगे जातो राज्ञः पुत्रो न प्रसुतो यदि भवति तदा तं भूमेर्नाथं विद्याज्जानीयात् अन्यकुलजो धनवान् अत्र केचिल्लेयस्थेर्के अजेंदौ लग्ने इति पठंति आदित्ये लेयस्थे सति सिंहगते सूर्ये चंद्रे मेषस्थे लग्ने तदपि न कश्चिद्विरोधो राजयोग एव भवति १४ अन्यद्राजयोगं विद्युन्मालिन्याह स्वर्क्षे इति स्वर्क्षे सिते आत्मीयराशौ स्थिते वृषतुलयोरन्यतमस्थेन केवलं यावत्पातालस्थे लग्नाच्चतुर्थे चंद्रे धर्मस्थानप्राप्ते नवमगते शेषे रन्यग्रहैः रविभौमबुधगुरुसौरैः दुश्चिक्यायगप्राप्तिप्राप्तैः

लेखास्थेर्केजेंदौ लग्ने भौमे स्वोच्चे कुंभे मंदे चापप्राप्ते जीवे राज्ञः पुत्रं विद्यात्पृथ्वीनाथं १४
स्वर्क्षे शुक्रे पातालस्थे धर्मस्थानप्राप्ते चंद्रे दुश्चिक्यायगप्राप्तिप्राप्तैः शेषैर्जातः स्वामी भूमेः १५

तृतीयलग्न एकादशस्थानस्थैः जातो भूमेः पृथिव्याः स्वाम्यधिपतिर्भवति तत्रैतज्जातं कुंभे लग्ने वृषे शुक्रः तुले चंद्रः शेषा ग्रहा यथासंभवं मेषकुंभधन्विस्थाः एवंविधयोगे जातो राजपुत्रो राजा भवति अन्यकुलजो धनवान् अथवा कर्कटे लग्नः तुले शुक्रः मीने चंद्रः शेषा ग्रहा यथासंभवं कन्याककर्कवृषस्थाः एवंविधे योगे जातो राजपुत्रो राजा भवत्यन्यकुलजोपि धनवान् १५ अथान्यद्राजयोगं नवमालिकयाह सौम्ये बुधे वीर्ययुक्ते कालादिबलैः युक्ते तथा भूते तनुयुक्ते लग्नस्थे शुभे सुभयाते शुभे सुभग्रहे गुरुसितयोरन्यतमे यथासंभवं वीर्याढ्येन सबले सुभग्राते धर्मस्थानगते नवमगत इत्यर्थः शुभे सुखयात इति पठंति चतुर्थस्थानस्थ इत्यर्थ. अवशेषैः परिशिष्टग्रहैः यथासंभवं धर्मार्थोपचयेषु नवमद्वितीयत्रिषडेकादशदशमानां अ

गतम्नगजन्नशतोपिजाताराजाभवति वस्यमाणेपुनराजवशजाणवराजाभवति तच्चशालिन्याह अपीति अपिशब्दः संभावनायांप्रोक्तभूपालयोगैः कथि तराजयोगैः स्वनकुलजातानीचशोऽपि अपिमानवाः पुरुषाः राज्यभाजः नृपाः भवंति किमुतकिंपुनः नृपकुलोत्याः राजवंशसंभूताः ते वक्ष्यराजानो-भवंति वक्ष्यमाणे पुनःयोगे नृपतिकुलसमुत्था राजवंशजाः पार्थिवा राजानोभवंति तेषुवक्ष्यमाणेषु अभूपालवंशजः अराजपुत्रः नृपतितुल्य-मेवंति राजसमइत्यर्थः नराजाकिमुतसंभावनायाम् ॥ अथराजयोगमोपजदसिकेनाह उच्चस्वत्रिकोणगैरिति त्र्याद्यैः त्र्यादिभिर्ग्रहै-र्गते स्वत्रिकोणगतैः वलस्थैः कालादिवलोपेतैः जाताभूपतिवंशजाः नृपकुलजातानरेंद्रा राजानोभवंति आदिग्रहणाच्चतुर्भिरपिपंचादिभिर

अपिग्नन्यकुलजातामानवाराज्यभाज किमुतनृपकुलोत्था प्रोक्तभूपालयोगे नृपतिकुलसमुत्था पार्थिवावक्ष्यमाणैर्भवंतिनृपतितु-ल्यास्ते नृपालपुत्रः ॥ उच्चस्वत्रिकोणगैर्वलस्थैस्त्र्याद्यैर्भूपतिवंशजानरेंद्रा पंचादिभिरन्यवंशजाताहीनैर्वित्तयुतानभूमिपाला ॥

न्यवंशजाताइति पंचादिभिः ग्रहैः स्वोच्चस्थैः मूलत्रिकोणगैर्वा अन्यवंशजाताहीनकुलजा अपिराजानोभवंति आदिग्रहणात्षड्भिः सप्तभिरपिहीनैर्वि-त्तयुताइति त्रिभिरुच्चस्थो मूलत्रिकोणस्थैर्वाहीनवलैः कालादिवलरहितैः राजकुलजा अपिराजानोनभवंति किंतुराजतुल्या भवंति एतेयथोक्तेः ही-नैः वित्तयुता सधनाभवंति नभूमिपालाः राजानः एतदुक्तंभवति एकेनग्रहेणद्वाभ्यांवास्वोच्चगाभ्यांमूलत्रिकोणस्थाभ्यांवाराजकुलजोपिराजान-भवति किंतुधनवान् एवंत्रिभिश्चतुर्भिर्वा अन्यवंशजातावित्तयुताभवंति नराजानः अन्नयदिग्रहाः यथाभिहितस्थस्थाउच्चस्था नभवंति स्वोच्च-गामूलत्रिकोणस्थे मदमस्थामपादयति तथापियथोक्तफलदाभवंति अथोच्चगताः केन्द्रवलाः स्वत्रिकोणगतावा तथापि ॥ ६९

अथान्यद्राजयोगं विद्युन्मालिन्याह लेखास्थेइति लेखायांतिष्ठतीतिलेखास्थः तस्मिन् लेखाशब्देनोदयउच्यते अर्केसूर्येतस्थेलेखास्थेभूस्तादधौ दितेन केवलयावद्जेमेषस्थेतत्रैवमेषलग्नेइंदौचंद्रस्थितेभौमेकुजेस्वोच्चेमकरस्थेमंदेसौरे कुंभस्थेजीवेगुरौचापप्रासेधनुर्धरगते एवंविधेयोगेजातोराज्ञः पुत्रोनृपसुतोयदिभवति तदातंभूमेर्नाथंविद्याज्जानीयात् अन्यकुलजोधनवान् अत्रकेचिल्लेयस्थेर्केजेदौलग्नेइतिपठंति आदित्येलेयस्थेसति सिंहगतेसूर्येचंद्रेमेषस्थेलग्नेतदपिनकश्चिद्विरोधोराजयोगएवभवति १४ अन्यद्राजयोगंविद्युन्मालिन्याह स्वर्क्षेइति स्वर्क्षेसितेआत्मीयराशौस्थितेवृषतुलयोरन्यतमस्थेन केवलंयावत्पातालस्थेलग्नाच्चतुर्थे चंद्रेधर्मस्थानप्रासेनवमगतेशेषैरन्यग्रहैः रविभौमबुधगुरुसौरैः दुश्चिक्यांगप्राप्तिप्रासैः

लेखास्थेर्केजेदौलग्नेभौमेस्वोच्चेकुंभेमंदे चापप्रासेजीवेराज्ञःपुत्रंविंद्यात्पृथ्वीनाथं १४
स्वर्क्षेशुक्रेपातालस्थेधर्मस्थानप्रासेचंद्रे दुश्चिक्यांगप्राप्तिप्रासैःशेषैर्जातःस्वामीभूमेः १५

तृतीयलग्नएकादशस्थानस्थैः जातोभूमे पृथिव्याःस्वाम्यधिपतिर्भवति तत्रैतज्जातं कुंभेलग्ने वृषेशुक्रः तुलेचंद्रः शेषाग्रहायथासंभवं मेषकुंभधन्विस्थाः एवंविधयोगेजातोराजपुत्रोराजाभवति अन्यकुलजोधनवान् अथवा कर्कटोलग्नः तुलेशुक्रः मीनेचंद्रः शेषाग्रहायथासंभवं कन्याककेदवृषस्थाः एवंविधयोगेजातोराजपुत्रोराजाभवत्यन्यकुलजोपिधनवान् १५ अथान्यद्राजयोगंनवमालिकयाह सौम्येबुधेवीर्ययुक्तेकालादिबलैःयुक्तेतथाभूतेतनुयुक्तेलग्नस्थेशुभेशुभयाते शुभेशुभग्रहेगुरुसितयोरन्यतमेयथासंभवंवीर्यादिधेन सबलेशुभयातेधर्मस्थानगतेनवमगतइत्यर्थः शुभेसुखयातइतिपठंति चतुर्थस्थानस्थइत्यर्थः अवशेषैःपरिशिष्टग्रहैः यथासंभवंधर्मार्थोपचयेषु नवमद्वितीयत्रिषडेकादशदशमानां अ

न्यतमस्थानस्थितैः एवंविधे योगेजातोनृपजोराजपुत्रोराजाभवति धर्मात्मा च अन्यकुलोधनवान् १६ अथान्यद्राजयोगद्वयवंशस्थेनाह वृषोदयमूर्ति
वृषोदयेप्रथमे तथाशशाङ्कजीवार्कसुतापरैः चन्द्रगुरुसौरैरपरैश्चरविकुजबुधसितैः यथासंख्यमूर्तिधनारिलाभगैः लग्नद्वितीयषष्ठैकादशस्थैः जातो
नृपोराजाभवति तत्रैतज्जात वृषलग्नेसचन्द्रे मिथुनस्थेजीवे तुलास्थेसौरेपान्यस्थैः रविकुजबुधसितैः जातोराजपुत्रोराजाभवति अन्यकुलजोपिधनवान्
सुखमुत्प्रविति गुरौजीवस्वक्षेत्रेचतुर्थस्थानस्थे खदशमेशशितीक्ष्णदीधिती चन्द्रार्कौयमोदयेशनैश्चरेलग्नगते अपरैरन्यैर्भौमबुधशुक्रैः लाभगतैरेकादश
स्थैः जातोनृपोराजाभवति तत्रैतज्जात शनैश्चरेलग्ने चतुर्थेजीवः दशमेसूर्यचन्द्रौ भौमबुधशुक्रा एकादशे एवंविधेयोगेजातोराजपुत्रोराजाभव-

सौम्यवीर्ययुतेतनुयुक्तेवीर्याढ्येनशशेशमयाते धर्मार्थौपचयेष्ववशेषैर्धर्मात्मानृपज पृथिवीशः १६ वृषोदयेमूर्ति
धनारिलाभगैः शशाङ्कजीवार्कसुतापरैर्नृप सुखेगुरौखेशशितीक्ष्णदीधिती यमोदयेलाभगतैर्नृपोपरैः १७

ति अन्यकुलजोपिधनवान्भवति १७ अथान्यद्राजयोगद्वयंवसन्ततिलकेनाह मेषूरणायतनुगाइति शशिमंदजीवाः चन्द्रसौरगुरवः यथासंख्य
मेषूरणायतनुगाः दशमैकादशलग्नस्थाः ज्ञारौबुधभौमौ धनेद्वितीयस्थाने सितरवीशुक्रार्कौहिबुके ४ चतुर्थेएवंविधेयोगेजातोनरेन्द्रोनृपोभ
वति तत्रैतज्जात दशमेचन्द्रः एकादशेसौरः लग्नेजीवः द्वितीयेबुधभौमौ चतुर्थेशुक्रार्कौ एवंविधेयोगेजातोराजपुत्रोराजाभवत्यन्यकुलजोपि
नवान् वक्रासिताविति वृक्षसितौभौमसौरौशशिसुरेज्यसितार्कसौम्याः चन्द्रगुरुशुक्रसूर्यबुधाः यथासंख्य होराबुखास्तशुभखासिगताः
लग्नचतुर्थसप्तमनवमदशमैकादशस्थाःभवति तदाजातः प्रजेशोराजाभवति तत्रैतज्जात भौमसौरौलग्नगतौ चतुर्थेचन्द्रः सप्तमेजीवः

नवमेशुक्रः दशमेसूर्यः एकादशेबुधः एवंविधेयोगेजातोराजपुत्रोराजाभवत्यन्यकुलजोधनवान् १८ अथराजयोगजातस्यकस्मिन्कालेराज्यावाप्ति
र्भविष्यतीतितज्ज्ञानंस्वागतयाह कर्मलग्नयुतपाकदशायामिति राजयोगकर्तॄणांग्रहाणांमध्याद्योग्रहः कर्मणिलग्नाद्दशमेस्थितः यश्चराजयोगक
र्तॄणांग्रहाणांमध्याद्योग्रहः लग्नयुतोजन्मलग्नस्थः तत्पाकदशायांतस्यसंबंधिनीयापाकदशांतर्दशाभवति तत्रतस्यराज्यलब्धिर्भवति अथल-
ग्नदशमयोः द्वयोरपिग्रहोभवतः तदातयोर्योबलवान्तस्यदशायामंतर्दशाकालेराज्यलब्धिः अथतत्रबहवोयदाभवंति तदाप्रबलस्यसर्वोत्तमब-
लस्यांतर्दशाकाले अथवाप्रबलस्येति अथलग्नदशमौयदाशून्यौभवतस्तदाजन्मनियः प्रबलः सर्वोत्तमबलस्तस्यांतर्दशाकालएवराज्यदः स्या

मेषूरणायतनुगाःशशिमंदजीवाज्ञारौधनेसितरवीहिबुकेनरेंद्रं वक्रासितौशशिसुरेज्यसितार्कसौम्याहोरासुखास्तशुभखास्तिग
ताःप्रजेशा१८ कर्मलग्नयुतपाकदशायांराज्यलब्धिरथवाप्रबलस्य शत्रुनीचगृहयातदशायांछिद्रसंश्रयदशापरिकल्प्या १९

त् बहुष्वंतर्दशासुयस्मिन्नंतर्दशाकालेचारवशादतिबलवत्त्वंसंभवति तस्यामेवांतर्दशायांराज्यप्रदोभवति शत्रुनीचगृहेति लब्धराज्यस्यापिजन्मकाले
शत्रुक्षेत्रस्थेननीचक्षेत्रस्थेनचग्रहेणयांतर्दशातस्यातस्मिन्बलवतिराज्यहरणंवाच्यं यतःसाछिद्रदशाविबलेऽपितस्मिन्नापद्भवति साचसंश्रयदशाप
रिकल्प्या तस्यामंतर्दशायांसंश्रयंकार्यं दैवयुक्तनृपसंश्रयगुणात्तन्मासोपि वक्ष्यतिचयात्रायां अरिकोपहतदशायांजन्मोदयनाथशत्रुपाकेच
स्वदशेशकारकदशाः संश्रयणीयोनरेंद्रइति अत्रचभगवान्गार्गिः लग्नगः कर्मगोवास्यादथवाप्रबलोपियः सःस्यात्स्वांतर्दशाकालेराज्यदः प्रब
लोयदा १ नीचारिगृहसंस्थस्यदशायांप्रबलस्यच च्युतिर्बलविहीनस्यतन्मोक्षःपरसंश्रयादिति १९ ६२ ६१

अथभोगिनांशवरदस्युस्वामिनांचजन्मज्ञानमालिन्याह गुरुसितबुधलग्नेति गुरुसितबुधाः जीवशुक्रसौम्या एषामन्यतमे लग्नगते अर्कपुत्रे सौरे
सप्तमस्थे दिवसनाथे सूर्ये वियति दशमस्थानगते एवंविधेयोगे भोगिनां भोगवतां जन्म विद्यात् जानीयात् एवंविधे योगे जातो सदैव भोगवान् भ
वति तस्यार्थे विहीनस्यापि यतः कुतश्चिद्भोगावाप्तिर्भवति रविबुधसितलग्नेइत्यन्ये केचित् रविबुधसितानां संबंधि लग्नं इति व्याख्यात सिद्धरूपतु
ज्ञामियुक्तं न्यालभेथिति यतो दशमस्थे र्के लग्ने बुधसितयो रवस्थानं न संभवति आचार्येण वराहमिहिरेण पूर्वशास्त्रानुसारेणायं योगः कृतः जी
वनु भार्गवे डमे सप्तमस्थे र्कनंदने दशमस्थे रवौ जातो भोगवान् पुरुषो भवेत् शुभबलयुतकेंद्रैरिति शुभग्रहसंबंधिनो राशयः तेचसब

गुरुसितबुधलग्ने सप्तमस्थेर्कपुत्रे वियति दिवसनाथे भोगिनां जन्म विद्यात् शुभबलयुतकेंद्रैः
क्रूरभस्थैश्च पापैर्व्रजति शबरदस्युस्वामितामर्थभाक्च २० इतिराजयोगाध्यायएकादश ११

लायस्य केंद्रगता भवति तौ तथाभूते तथा पापे क्रूर
द्वैः क्रूरभस्थैः पापराश्याश्रितैः यस्य जन्म भवति स शबराणां पुलिंदानां दस्यूनां चोराणां स्वामित्वं व्रजति गच्छति अर्थभाग्भाग्यवान् धनवांश्च भवति शुभब-
लयुतकेंद्रैरिति अन्ये शुभग्रहैः बलयुतैः केंद्रगतैरिति केचिद्व्याख्यात तच्चायुक्तं यस्माद्भगवान् गार्गिः पापसेत्रगतैः पापैः केंद्रस्थैः सौम्यराशिभिः सच
नेयस्य जन्म स्यात् स्यात् दस्युनायक इति २० इतिश्रीमद्भोत्पलविरचितायां बृहज्जातकविवृतौ राजयोगाध्याय एकादशः ११ ७

अथातोनाभसयोगाध्यायोव्याख्यायते नाभसयोगानांचत्वारोविकल्पाः तत्राकृतियोगाएकोविकल्पः आकृतियोगाः संख्यायोगाश्चविकल्पद्वयम् आकृतियोगा. संख्यायोगाआश्रययोगाश्चविकल्पत्रयं आकृतियोगाःसंख्यायोगाआश्रययोगादलयोगोश्चेतिविकल्पचतुष्टयं तत्रविंशतिराकृतियोगाःसप्तसंख्यायोगाःत्रयआश्रययोगाः द्वौदलयोगौ तत्रद्वित्रिचतुर्विकल्पजानांयोगानांसंख्याज्ञानमौपच्छंदसिकेनाह नवदिगिति नवप्रसिद्धादिक्शब्देनदशउच्यंते वसवोष्टौ एतेयथासंख्यंत्रिकाग्निवेदैःगुणिता त्रिकशब्देनत्रयएवउच्यंते अग्निशब्देनत्रयः वेदाश्चत्वारः ४ एतैःगुणिताः तद्यथा नवदिग्वसवः ९।१०।८ एतेयथासंख्यंत्रिकाग्निवेदैः ३।३।४ एतैर्गुणिताजाताः २७।३०।३२ एतेयथासंख्यंद्वित्रिचतुर्विकल्पजाभ

अथनाभसयोगाध्यायप्रारंभः नवदिग्वसवस्त्रिकाग्निवेदैर्गुणिताद्वित्रिचतुर्विकल्प-
जाःस्युः यवनैस्त्रिगुणाहिषट्शतीसाकथिताविस्तरतोत्रतत्समाःस्युः १

वंति एतदुक्तंभवति आकृतियोगाविंशतिः संख्यायोगाःसप्त एवमाकृतिसंख्याविकल्पद्वयेनसप्तविंशतियोगाःभवंति आश्रययोगास्त्रयः आकृतिसंख्याआश्रयकृतेनविकल्पत्रयेणात्रिंशत् ३० दलयोगौद्वौ आकृतिसंख्याआश्रयदलयोगकृतेनविकल्पचतुष्टेन द्वात्रिंशत् ३२ एवं-द्वित्रिचतुर्विकल्पजायोगाःस्युः भवेयुरिति यवनैस्त्रिगुणाहीति पुराणयवनैः त्रिगुणाहिषट्शती कथिता षण्णांशतानांसमाहारः षट्शतीसाचत्रिगुणा अष्टादशयोगशतान्यभिहितानीत्यर्थः १८०० ननुस्फुजिध्वजेनकिमुक्तं उच्यते नाभसयोगानामानंत्य तथाचतद्वाक्यं संस्थानसादृश्यमनंतकस्याद्द्रव्याणिनानाप्रकृतीनिदृष्ट्वेति कथंपुराणयवनैरष्टादशशतान्यभिहितानि उच्यते आकृतियोगास्त्रयोविंशतिस्तैरभिहिताः सं

धनिनांपरिकीर्तितः एवमाश्रययोगत्रयंव्याख्यातंसत्यमतेन तथाचसत्यः चरराशिगैर्ग्रहैर्द्रैरज्जु स्थिरराशिगैस्तथामुशलं द्विशरीरगतैर्योगोनल संज्ञोमुनिभिरुद्दिष्टः अथदलयोगद्वयमुच्यते केंद्रैःसदसद्युतैरिति केंद्रैःयथासंख्यंसदसद्युतैः सद्ग्रहैःसौम्यैर्युतैः दलाख्योदलोयोगः स्रग्मालानाम भवति तथाकेंद्रैरसद्ग्रहैः पापग्रहयुक्तैः दलयोगः सर्पोनामयोगोभवति एतदुक्तंभवति येषुतेषुत्रिषुकेंद्रेषुसौम्यग्रहाः बुधगुरुशुक्राःयदाभवंति नक स्मिन्कश्चित्केंद्रेपापोभवतितदास्रङ्नामयोगोभवति अथयेषुतेषुत्रिषुकेंद्रेषुपापाः सूर्यभौमसौराःभवंति नकस्मिंश्चित्केंद्रेभवति सौम्यग्रहा तदासर्पो नामयोगोभवति नन्वत्रयोगद्वयेकेंद्रैः सदसद्युतैर्दलाख्यावित्युक्तात्रिषुकिमितिव्याख्यातं यस्माच्छुक्लपक्षकृष्णपक्षयोश्चंद्रस्यसौम्यत्वंपापत्वंचसंभवति

रज्जुर्मुशलंनलश्चराद्यैः सत्यश्चाश्रयजानजगादयोगान्
केंद्रैःसदसद्युतैर्दलाख्यैःस्रक्सर्पौकथितौपराशरेण २

एवंस्थितेयदासौम्याक्रांतेषुत्रिषुकेंद्रेषुक्षीणश्चंद्रमायदाचतुर्थोभवति अथवापापाक्रांतेषुकेंद्रेषुक्षीणश्चंद्रमायदाचतुर्थोभवति तदापिस्रक्सर्पौयो गोभवतः तच्चतुर्षुकेंद्रेषुकिमितिनव्याख्यातंउच्यतेनैवम् यस्मादनेनैवस्वल्पजातकेउक्तं केंद्रत्रयगैःपापतरैर्दलाख्यावहिश्चमालाच अत्रसौम्या- स्त्रयः पापास्त्रयइतिकथंज्ञायते यथानयोर्द्वयोर्मध्येचंद्रमास्तृतीययोनिभवति उच्यते भगवतागार्गिणोक्तं त्रिकेंद्रगैर्यमारार्कैः सर्पोदुःखितज न्मदः भोगिजन्मप्रदामालातद्वज्जीवसितेंदुजैः स्रग्योगःपापवर्जितकेंद्रेषुसर्पः सौम्यवर्जितेष्वितिकथंज्ञायते उच्यते बादरायणोक्तं केंद्रेष्वपापेषु सितज्ञजीवे केंद्रेत्रिसंस्थैः कथयंतिमालाम् सर्पस्तुसौम्येश्चयमारसूर्यैर्योगाविमौद्वौकथितौदलाख्यौ एतौदलयोगौद्वौस्रक्सर्पौकथितौ

पराशरेणोक्तौ नत्वन्यैरप्युक्तौ उच्यते अन्यैरुक्तौ अन्यैर्नोक्तौ पराशरेणोक्ताविति स्वशास्त्रे वराहमिहिरेणोक्तौ तथात्वमणित्थः केंद्रत्रयगैः पापैः सौम्यैर्वा दलसंज्ञितौ द्वौ योगौ सर्पमालाख्यौ विनष्टेष्टफलप्रदौ एवमाश्रययोगत्रयमपि योगद्वयमाह अन्यैरुक्तमन्यैर्नोक्त अन्यैरुक्तत्वाद्वराहमिहिरेण शास्त्रे संगृहीत एवं दलयोगद्वयमव्याख्यात २ अथान्यैराचार्यैर्येन कारणेनाश्रययोगत्रयं दलयोगद्वयं च नाख्यातं तत्कारणमुपजातिकया ह योगाव्रजंतीति आश्रयजा योगा रज्जुमुसलनलाख्या आकृतियोगैः यवाब्जवज्राण्डकगोलकाद्यैः यवपद्मवज्रविहगगोलकैः आदिग्रहणाद् दामकदाम्यादिनतथा संख्यायोगैः गोलकाद्यैः गोलकयुगमूलकेदारैः सयोगैः आश्रयजा योगाः तुल्यतां समत्वं व्रजंतीत्यतोऽन्यैर्नोक्ताः तथाति

योगाव्रजंत्याश्रयजाः समत्वं यवाब्जवज्राण्डजगोलकाद्यैः
केंद्रोपगैः प्रोक्तफलौ दलाख्यावित्याहुरन्ये न पृथक्फलौ तौ ३

केणाप्याश्रययोगानामवकाशो नास्तीति वराहमिहिरेणोक्ताः यैश्च योगैः समतायास्यति यत्र चैतेषामनवकाशस्तदध्यायातेऽत्राख्यास्याम केंद्रोपगैः प्रोक्तफलमविति दलाख्यौ दलयोगौ द्वौ केंद्रोपगैः प्रोक्तफलौ कथितफलौ केंद्रोपगतैः ग्रहैः प्रोक्तफलेयथा केंद्रत्रयगैः केंद्रस्थानास्थसमग्रहा शुभफलमुक्तं अशुभानामशुभमिति अतएवेमौ प्रोक्तफलौ कथितफलौ उक्तं च वराहमिहिरेण केंद्रत्रिकोणेषु शुभाः प्रशस्तास्तेष्वेव पापान्स्तुभेम दाम्यः केंद्रत्रिकोणगैः शुभैः शुभफलमभवतीति मालानोक्ता एवं केंद्रत्रयगैः पापैः पापफलमभवतीति सर्पनिरुक्तः एवमन्ये अपरे आहुः कथयंति तथा तौ न पृथक्फलावुक्तार्थत्वात् यद्येवं तर्हि किमर्थं वराहमिहिरेणोक्तावित्यत्रोच्यते नाभसयोगात भूतत्वात्समस्तदशास्वपि फलदौ

भवतः यदाकेंद्रोपगानायोगंविनाफलमंगीक्रियते तदास्वदशास्वेवफलंप्रयच्छंति एतच्चपराशरादीनांमतं तेषांमतंयथानाभसयोगावेतो समस्तदशास्वपिफलप्रदौतेनवराहमिहिरेणोक्तो ३ अथाकृतियोगान्पंचगदाशकटविहंगशृंगाटकहलाख्यान्वसंततिलकेनाह आसन्नेति आसन्नेनिकटवर्तिनिकेंद्रभवनद्वयेकटकराशियुग्मेयदासर्वेग्रहाः भवंति तदागदाख्योयोगोभवति सचचतुःप्रकारः लग्नचतुर्थस्थैःसर्वग्रहैरेकः चतुर्थसप्तमस्थैर्द्वितीयः सप्तमदशमस्थैस्तृतीयः दशमलग्नस्थैश्चतुर्थः तन्वस्तगेष्विति तन्वस्तगेषु लग्नसप्तमगेषुसर्वग्रहेषुशकटंभवति खबंध्वोः दशमचतुर्थयोः स्थितेषुसर्वग्रहेषुविहगाख्योयोगः नवमपंचमलग्नस्थैः सर्वग्रहैः शृंगाटकाख्योयोगोभवति लग्नान्यगैर्हलमिति

आसन्नकेंद्रभवनद्वयगैर्गदाख्यस्तन्वस्तगेषुशकटंविहगःखबंध्वोः
शृंगाटकंनवमपंचमलग्नसंस्थैर्लग्नान्यगैर्हलमितिप्रवदंतितज्ज्ञाः ४

लग्नंवर्जयित्वायथासंभवमन्येसर्वेग्रहाः परस्परंत्रिकोणगताभवंति तदाहलमितियोगः तज्ज्ञाः होराशास्त्रपंडिता प्रवदंतिकथयंति सचत्रिप्रकारः द्वितीयषष्ठदशमस्थैः सर्वग्रहैरेकः तृतीयसप्तमैकादशस्थैर्द्वितीयःप्रकारः चतुर्थाष्टमद्वादशस्थैस्तृतीयःप्रकारइति ४ अथवज्रयवकमलवापीसंज्ञंयोगचतुष्टयंवैतालीयेनाह शकटांडमिति शकटवच्छुभैः व्यवस्थितैरंडजवदशुभैश्चवज्रंभवति एतदुक्तंभवति लग्नसप्तमयोः सौम्याश्चतुर्थदशमयोश्चपापाभवंति नान्यत्रकेचित्तदावज्राख्योयोगोभवति तद्विपरीतगैर्यवः तएवग्रहायदिविपरीतगताभवंति तदायवाख्यो योगोभवति शकटवदशुभाः अंडजवच्छुभाः एतदुक्तंभवति लग्नसप्तमयोः पापाःस्थिताः चतुर्थदशयोश्चशुभाःस्थितास्तदायवाख्योयोगो

भवति कमलमिति एतैरेवसौम्यपापै विमिश्रसंस्थितैश्चतुर्ष्वपिकेंद्रेषुसमवस्थितैः कमलाख्योयोगोभवति तदेवकमलंयदिकेंद्राद्बाह्यतोभवति त
दावापीसंज्ञोयोगः एतदुक्तंभवति सर्वैरेवकेंद्राद्बाह्यतःस्थितैः केंद्राणिवर्जयित्वान्यत्रपणफरापोक्लिमेषुस्थितैस्तदेवकमलंवापीसंज्ञोभवतियोग प
णफरेषुचतुर्ष्वापोक्लिमेषुचतुर्ष्वेति ५ अथयवयवयोः सभवोनभवति तौनमयापूर्वशास्त्रानुसारेणकृताविस्येतदनुष्टुभाह पूर्वशास्त्रा
नुसारेणेति पूर्वशास्त्रानुसारेण पूर्वाचार्यैः मययवनादिभिः वज्राख्योयोगः कृतःयवाख्यश्च तस्मान्मयापिकृतः वज्रादयइतिबहुवचननिर्दे
शः न्येषामेवप्रकाराणामदर्शनार्थं वज्रादयोयोगायद्यपिनसंभवति तथापिपूर्वशास्त्रानुसारेणमयाकृताः तान्यनुसृत्यदर्शेत्यर्थः यतः

शकटाण्डजवच्छुभाशुभैर्वज्रंतद्विपरीतगैर्यवः कमलंतुविमिश्रसं
स्थितैर्वापीतद्यदिकेंद्रबाह्यतः ५ पूर्वशास्त्रानुसारेणमयाव
ज्रादयःकृता चतुर्थेभवनेसूर्याज्ज्ञसितौभवतःकथम् ६

सूर्यादादित्याच्चतुर्थेभवने चतुर्थराशौपूर्वेणपश्चिमेनवाज्ञसितौबुधशुक्रौकथंभवतः नकदाचिदर्कोदयेस्तसमयेवामध्याह्नार्द्धरात्रयोः बु
धशुक्रौभवतः आदित्येमध्याह्नस्थेऽर्द्धरात्रस्थेवातयोरुदयेस्तसमयेवानभवत्येव ६ अथयूपेषुशक्तिदंडाख्ययोगचतुष्टयमनुष्टु-
भाह कंटकादीति होरालग्नंतदाद्यैः केंद्रैः क्रमात्परिपाट्या लग्नकेंद्रमादितःकृत्वाचतुर्षुगृहेषुयथासंभवसर्वग्रहाणामवस्थानंभवति
तदायूपेषुशक्तिदंडाख्याश्चत्वारोयोगाभवति तद्यथा लग्नद्वितीयतृतीयचतुर्थेषुचतुर्ष्वपियदासर्वेग्रहाःभवति तदायूपाख्योयोगोभवति

अथचतुर्थपंचमषष्ठसप्तमेषु चतुर्षुसर्वएवग्रहाभवंति तदेषुःशराख्योयोग. अथसप्तमाष्टमनवमदशमेषु चतुर्षुसर्वएवग्रहाभवंति तदाशक्तियोगः अथदशमैकादशद्वादशलग्नेषुचतुर्षुसर्वएवग्रहाभवंति तदादंडयोगइति ७ अथनौकूटछत्रचापार्द्धचंद्राख्ययोगपंचकमनुष्टुभाह. नौकूटछत्रेति तद्वत्तेनैवप्रागुक्तेनप्रकारेणलग्नकेंद्रादारभ्यैकैकस्मात्केंद्रात्सप्तभिर्ग्रहैः सप्तर्क्षसंस्थितैः नौकूटछत्रचापसंज्ञंयोगचतुष्टयंभवति तद्यथा लग्नद्वितीयतृतीयचतुर्थपंचमषष्ठसप्तमेषुयदासर्वेग्रहाःभवंति तदानौर्नामयोगोभवति एवंचतुर्थपंचमषष्ठसप्तमाष्टमनवमदशमेषुयदासर्वेग्रहाःभवंति तदाकूटाख्योयोगोभवति अथसप्तमाष्टमनवमदशमैकादशद्वादशलग्नेषुसर्वेग्रहाभवंति तदाछत्रंछत्राख्यो

कंटकादिप्रवृत्तैस्तुचतुर्गृहगतैर्ग्रहैः यूपेषुशक्तिदंडाख्याहाराद्यैःकंटकैःक्रमात् ७
नौकूटछत्रचापानितद्वत्सप्तर्क्षसंस्थितैः अर्द्धचंद्रस्तुनावाद्यैःप्रोक्तस्त्वन्यर्क्षसंस्थितैः ८

योगः अथदशमैकादशद्वादशलग्नद्वितीयतृतीयचतुर्थेषुयदासर्वेग्रहाभवंति तदाचापंचापाख्योयोगः अर्द्धचंद्रइति नावाद्यैरेवयोगेरन्यर्क्षसंस्थितैः अपरराशिव्यवस्थितैरर्द्धचंद्राख्योयोगोभवति नावाद्याः कंटकेषूक्ताःतेभ्योन्यर्क्षसंस्थितैः अपरराशिगतैःतेनपणफरेभ्यः आरभ्य निरंतरंसप्तसुगृहेषुयदासर्वेग्रहाभवंत्यापोक्लिमेभ्योवातदर्द्धचंद्राख्यः सचाष्टप्रकारः तद्यथा द्वितीयतृतीयचतुर्थपंचमषष्ठसप्तमाष्टमेषुसप्तसुसर्वेग्रहायदाभवंतितदेकः एवंतृतीयादिनवमांतेषुद्वितीयः पंचमादिष्वेकादशांतेषुतृतीयः षष्ठादिषुद्वादशांतेषुचतुर्थः अष्टमादिषुद्वितीयांतेषुपंचमः नवमादिषुतृतीयांतेषुषष्ठः एकादशादिषुपंचमांतेषुसप्तमः द्वादशादिषुषष्ठांतेषुयदासर्वेग्रहाभवंतितदाऽष्टमइति ८ छ

अथसमुद्रचक्राख्यौद्वौयोगावनुष्टुभाह अर्थाद्द्वितीयस्थानादारभ्यैकांतरगतैर्ग्रहैः षड्गृहाश्रितैः षड्राशिषुव्यवस्थितैः सप्तभिर्ग्रहैः समुद्राख्योयोगोभवति तद्यथा द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशेषुषट्सुयदासप्तग्रहाभवंतितदासमुद्राख्योयोगः विलग्नादिस्थितैरिति अनेनैवप्रकारेण वैठमाल्लग्नात्प्रभृत्येकांतरस्थैः षड्गृहेषुसप्तभिर्ग्रहैःस्थितैः चक्राख्योयोगोभवति तद्यथा लग्नतृतीयपंचमसप्तमनवमैकादशेषुषड्गृहेषुयदासर्वेग्रहाःभवंति तदाचक्राख्योयोगोभवति इत्येवंप्रकारेण आकृतिजानांयाकारवशादुत्पन्नानांसंग्रहोव्याख्यातः ९ अथसंख्यायोगसप्तकंशालिन्याह संख्यायोगइति सप्तभिर्ग्रहैः सप्तर्क्षसंस्थैः सप्तसुराशिषुगतैरेकापायादेकापगमात्क्रमात्सप्तसंख्यायोगाःस्युः भवेयुः तेचवल्लक्यादयो

एकांतरगतैरर्थात्समुद्रं षड्गृहाश्रितैः विलग्नादिस्थितैश्चक्रमित्याकृतिजसंग्रहः ९

संख्यायोगाः स्युःसप्तसप्तर्क्षसंस्थैरेकापायाद्वल्लकीदामिनीच पाशःकेदारः

शूलयोगोयुगंचगोलश्चान्यान्पूर्वमुक्तान्विहाय १०

गोलांताः तद्यथा येषुतेषुसप्तसुगृहेषुयदासर्वग्रहाभवंति तदावल्लकीनामयोगोभवति यदाषट्सुगृहेषुसप्तग्रहाभवंति तदादामिनीनामयोगोभवति एवंपंचसुसप्तग्रहाः पाशःपाशोयोगः चतुर्षुकेदारः केदारोयोगः त्रिषुशूलः शूलोयोगः द्वयोर्युगंयुगनामयोगः एकस्मिन्राशौसप्तग्रहायदाभवंति तदागोलः गोलनामायोगः अन्यान्पूर्वमुक्तान्विहाय पूर्वोक्तानन्यान्योगान्विहायवर्जयित्वाएतेयोगा भवंति एतदुक्तंभवति यथोक्तानांयोगानामप्यभावेसंख्यायोगस्यसंभवोभवति तदासंख्यायोगेनायोगःकार्यः सएवयोगोभवतीति १० ७ ७ ५

अथाश्रययोगत्रयजातानांदलयोगद्वयजातानांच फलंवसंततिलकेनाह ईर्ष्युरिति ईर्ष्युः समत्सरः परर्द्धिमत्सरी विदेशनिरतः परदेशाध्यासनशीलः अध्वरुचिः सततमटनः ननुविदेशनिरत एवाध्वरुचिः तत्किमत्रद्वयोर्ग्रहणं उच्यते विदेशेप्यनेकप्रदेशाध्यासनशीलोभवति सततमटनोनभवति एवंविधोरज्ज्वांरज्ज्वाख्ययोगेजातोभवति मानीगर्वितः धनीवित्तवान् बहुषुकृत्येषुकार्येष्वासक्तः बहुकर्मारंभशीलः एवंविधोमुशलाख्ययोगेजातोभवति व्यंगोऽगहीनः विगतमंगयस्य स्थिरोदृढनिश्चयः आढ्योधनवान् निपुणःकार्येषु सूक्ष्मदृष्टिः एवंविधोनलजोनलाख्ययोगेजातोभवति एवमाश्रययोगत्रयजातानांफलंव्याख्यातं स्रगुत्थोभोगान्वितइति स्रगुत्थः स्रग्योगेजातोभोगान्वितोभवति भुजगजोभुजगाख्येसर्पयो

ईर्ष्युर्विदेशनिरतोध्वरुचिश्चरज्ज्वांमानीधनीचमुशलेबहुकृत्यसक्तः व्यंगास्थि
राढ्यनिपुणोनलजःस्रगुत्थोभोगान्वितोभुजगजोबहुदुःखभाक्स्यात् ११

गेजातोबहुदुःखभाक्स्यात् नानाप्रकाराणांदुःखानांभोगीभवति केचिदत्रबहुवचनंपठंति व्यंगाःस्थिराढ्यानिपुणानलजाःस्रगुत्थाः भोगान्विताभुजगजाबहुदुःखभाजइतिनकश्चिद्दोषः एवंदलयोगद्वयजातानांफलंव्याख्यातं ११ अथान्योयोगाश्रययोगश्चयदासमकालंयत्रदृश्यतेतत्राश्रययोगस्यनिराकरणार्थमनुष्टुभाह आश्रयोक्तास्त्विति यत्रान्यायोगआश्रययोगश्चभवति तत्राश्रययोगोन्येनयवादिनामिश्रोभवति मिश्रितत्वाच्चाफलोभवति स्वफलंनप्रयच्छति एवमन्यैरपरैः विमिश्रितानिःफलाभवंति येस्त्वमिश्राःसादृश्यंगतास्तेतत्रफलंदद्युः केचिन्मिश्रायेस्तेफलंतेषामितिपठंति अमिश्रास्त्वन्यैः यदाभवंति तदास्वफलप्रदाआत्मीयंफलंददति तत्रचरराशौलग्नगतेस्थिरद्विस्वभावस्थैरमिश्राः स्थिरलग्नेचरद्विःस्व

भावगतीरपिन्याः हि स्वभावेलभेन्वरस्थिरगतीरपिन्याइति १२ अथगदाशाकटविहगशृगाटकहलाख्येषुयोगेषुजातानांस्वरूपवसंततिलकेनाह
न्नार्थभागिति यज्वायजनशीलः अर्थभाग्धनानांभाजनसततसर्वकालमर्थरुचिः अर्थार्जनोद्यमशीलः एवंविधोगदाख्येयोगेजातोभवति न
वृत्तिभुगिति तदितिशकटपरामर्शः तद्वृत्तिभुक्शकटवृत्तिभुक्ते शकटाजीवीभवतीत्यर्थः सरुजोव्याध्यर्दितः कुदारः कुत्सितभार्यः एवंविधः शा
कटजः शकटयोगेजातोभवति दूतोटनइति दूतः परसंदेशप्रापणार्थपरसकाशगामी अटनः परिभ्रमणशीलः ननुदूते नाप्यवश्यमटनेनभ
वितव्य उच्यते परेच्छयागमनशीलोदूतः अथपुनः स्वेच्छयाटनः तदुभयभाग्भवति कलहकृत्कलहशीलः एवंविधोविहगाख्येयो

आश्रयोक्तास्तुविफलाभवत्यन्यैर्विमिश्रिताः मिश्रायैस्तेफलदद्युरमिश्रास्त्वफलप्रदाः १२ यज्वार्थभाक्सततमर्थरुचिर्गदा
यातद्वृत्तिभुक्शाकटजःसरुजःकुदारः दूतोटनःकलहकृद्विहगेप्रदिष्टःशृगाटकेचिरसुखःकृषिकृद्धलाख्ये १२

गेजातोभवति प्रदिष्टः उक्तः चिरेणसुखीचिरसुखोवयसोन्तेसुखीत्यर्थः एवंविधःशृगाटकाख्येयोगेजातोभवति अन्यैश्चिरसुखीचिरसुखी
शृगाटकेप्याख्यातः तथाचायुक्तं यस्माद्भगवान्गार्गिः लग्नपञ्चमधर्मस्थैर्योगः शृंगाटकोमतः वयोन्तेसुखिनाजन्मतत्रस्यात्स्वादुभाषिणा कृ
षिकृद्धलाख्ये हलाख्येयोगेजातः कृषिकृद्भवति कृषिकरोतीत्यर्थः १२ अथवज्रयवपुष्पवापीजातानांस्वरूपवसंततिलकेनाह वज्रेत्यपूर्वसु
खिनइति अन्त्येवयोन्त्येसुखिनः पूर्वेसुखिनश्चबाल्येसुखी यौवनेदुःखितोवृद्धत्वेपुनरेवसुखीभवतीत्यर्थः सुभगः सर्वजनवल्लभः अतिशू
रोतीवसग्रामधीरः एवंविधोवज्राख्येयोगेजातोभवति शौर्यान्वितः पराक्रमयुक्तःअथशब्दः पादपूरणेवयोन्तः वयोमध्येसुखी अतःशब्दो

त्रमध्यपर्यायः एवंविधोयवाख्येयोगेजातोभवति विख्यातकीर्तिः सर्वजनप्रसिद्धकीर्तिः सानतु किमत्रविख्यातकीर्तिरस्ति उच्यते अस्तिकश्चित्स्वसा यथाकीर्तिप्रापककर्मभिः शतैरपिपरंप्रख्यातकीर्तिंनप्राप्नोति अमितसौख्यगुणः अपरिमितसौख्योऽपरिमितगुणश्च गुणाः विद्याशौर्यादयः एवंविधःपद्माख्येयोगेजातोभवति तनुस्थिरसुखं तनुस्वल्पंस्थिरंचिरकालस्थायिसुखं यस्यस्वल्पसुखंबहुकालंभवतीत्यर्थः निधिकृत् भूमावर्थस्थापनशीलः नदाताकदर्यः एवंविधोवापीसंज्ञेयोगेजातोभवति १४ अथयूपशरशक्तिदंडाख्येयोगचतुष्टयेजातानांस्वरूपंवसंततिलकेनाह त्यागात्मवानिति त्यागीदाता आत्मवानप्रमादी क्रतुवरैर्यज्ञश्रेष्ठैर्यज्ञैःयजते एवंविधोयूपाख्येयोगेजातोभवति हिंस्रेति हिंस्रोवधरुचिः गुप्त्य

वज्रेत्यपूर्वसुखिनःसुभगोतिशूरोवीर्यान्वितोप्यथयवेसुखितोवयोऽन्तः विख्यातकीर्त्यमितसौख्यगुणश्चपद्मेवाप्यांतनुस्थिरसुखोनिधिकृन्नदाता १४ त्यागात्मवान्क्रतुवरैर्यजतेचयूपेहिंस्रोथगुप्त्यधिकृतःशरकृच्छराख्ये नीचोलसःसुखधनैर्वियुतश्चशक्तौदंडेप्रियैर्विरहितःपुरुषोन्त्यवृत्तिः १५

धिकृत बंधनपाल शरकृत्शरकारः एवंविधश्चशराख्येयोगेजातोभवति नीचः अधमानामकुलोचितानांकर्मणांकर्ता अलसःक्रियास्वपटुःसुखधनैर्वियुतोभोगवित्तविवर्जितः निःसुखोनिर्धनश्च एवंविधः शक्तौयोगेजातोभवति प्रियैःपुत्रादिभिःविरहितः वर्जितः अंत्यवृत्तिःदासवृत्तिःशूद्रवृत्तिरित्यर्थः एवंविधोदंडाख्येयोगेजातःपुरुषोभवति १५ अथनौकूटछत्रकार्मुकजातानांस्वरूपंवसंततिलकेनाह कीर्त्यायुतश्चलसुखइति कीर्त्यायुतः ख्यातयशाः चलसुखः कदाचित्सुखीकदाचिद्दुःखी कृपणःअदाता चशब्दोत्रसमुच्चयार्थे एवंविधोनौजाः नावाख्येयोगेजातः प्रा-

णीभवति कूटेनृतइति अनृतेपूवनामतिर्यस्यासावनृतपूवना असत्याभिधायीअसत्याभिधायीच वधनप वधनपातीतिवधनपा केचित्कूटेः रूपपधनपश्चजातइतिपठंति एवंविधः कूटाख्येयोगेजातोभवति इतिकूटयोगः छत्रोद्भवइति स्वजनसौख्यकरः स्वजनेषुसुखकरोतीति स्यकरः अत्यसौख्योदूरेसुखित एवंविधः छत्राख्येयोगेजातोभवति इतिछत्रयोगः कार्मुक भूस्थ सग्रामप्रियः प्रथमात्यसौख्य प्रथमेवा न्येकृती अत्येस्थलेस्वकुलीन एवंविधः कार्मुकभवः चापाख्येयोगेजातोभवति इतिचापयोग १६ अथार्द्धचंद्रसमुद्रचक्रपक्षकीजातानास्वरूप वसततिलकेनाह अर्द्धेंदुजइति सुभगः सर्वजनप्रियः कांतवपुः सदर्शनीयः प्रधानः सर्वजनपूज्यः एवंविधोर्द्धेंदुजोर्द्धचंद्राख्येयोगेजातोभवति

कीर्त्यायुतस्थलस्वरवः क्षपणाश्चनीज कूटेनृतपूयनुपधनपश्चजातः छत्रोद्भव स्वजनसौख्यकरोत्यसौख्यः
भूस्थकार्मुकभवः प्रथमात्यसौख्यः १६ अर्द्धेंदुजः सुभगकांतवपुःप्रधानस्तोयालयेनरपतिप्रतिम
स्तुभोगी चक्रेनरेंद्रमुकुटद्युतिराजितांघ्रीवीणोद्भवश्चनिपुणःप्रियगीतनृत्यः १७

समुद्रयोगः नरपतिप्रतिमः राज्ञातुल्यः भोगीभोगवान् एवंविधस्तोयालयेसमुद्राख्येयोगेजातोभवति चक्रेति नरेंद्राराजानः तेषांमुकुटाः किरीटाः भूषणमणिरत्नानितेषांद्युतिःकांतिः तयाराजितोछुरितांघ्रीपादोयस्यराजानः तस्यपादयोःपतति महाराजाधिराजोभवतीत्यर्थः तपोज्ञानादियोगाद् ज्ञापूजनीयोवा एवंविधश्चक्राख्येयोगेजातोभवति आकृतियोगविंशतिजातानांफलंव्याख्यातं अथैषभूपालसंख्यायोगानांफलंव्याख्यायते वीणो द्भवश्चेति निपुणःसुस्पष्टधीः प्रियगीतनृत्यः गीतप्रियोनृत्यप्रियश्चएवंविधोवीणोद्भवोवीणाख्येयोगेजातोभवति १७ ५ ५

अथदामिनीपाशकेदारशूलजातानांस्वरूपंवसंततिलकेनाह दातान्यकार्येति दाताउदारः अन्यकार्यनिरतः परोपकारासक्तः पशुपः पशुरक्षिता बहुप-
शुभागभवति अथवापशुपपाठेपशूनांपालयितारक्षयिता ग्रामाधिपतिरित्यर्थः एवंविधोदाम्नियोगेजातोभवति पाशइति धनार्जनेविशीलः धनार्जन
विशील: धनार्जनेविशीलश्चासौसभृत्यबंधुश्च धनार्जनविशीलसभृत्यबंधुः स्वयमेवधनार्जनेविशीलः सन्मार्गेणधनार्जनंकरोति तथाभूतास्यभृत्याः
कर्मकरावांधवाश्चभवंति एवंविधः पाशाख्येयोगेजातोभवति केदारजइति कृषिकरः कृषिंकरोति सुबहूपयोज्यः सुष्ठुशोभनंकृत्वाबहूनामुपयुज्यते
उपकरोति एवंविधःकेदारजः केदाराख्येयोगेजातोभवति शूरःसमरधीरः क्षतःप्रहारितः धनरुचिः अर्थप्रियः केचिद्धरुचिरितिपठंति विधनश्च

दातान्यकार्यनिरतःपशुपश्चदाम्निपाशेधनार्जनविशीलसभृत्यबंधुः
केदारजःकृषिकरःसुबहूपयोज्यःशूरःक्षतोधनरुचिर्विधनश्चशूले १८

दरिद्रः एवंविधःशूलाख्येयोगेजातोभवति १८ अथयुगगोलयोर्जातस्यस्वरूपंसर्वेषांचनाभसयोगानांसमस्तदशास्वपिफलप्रदर्शनंहरिण्याह ध-
नविरहितइति धनविरहितः अर्थहीनःपाखंडी त्रयीमार्गव्यपेतः एवंविधोयुगाख्येयोगेजातोभवति केचिद्धनविरहितः पाखंडीचेतिपठंति चाशब्दो
न्वार्थे अर्थहीनःपाखंडीच अथशब्दआनंतर्ये विधनोऽर्थहीनः मलिनोमलोपेतशरीरः मलिनवासावा अज्ञानोपेतः मूर्खः कुशिल्पोलोकेनिंद्यशि-
ल्पकर्ता अलसःक्रियास्वसमर्थः अटनोभ्रमणाशीलः नन्वत्रालसोऽटनश्चेति विरुद्धंउच्यते यद्यपिस्वरूपेणालसः तथाप्यतिदारिद्र्याद्भोजनक्रिया

नन्वाश्रययोगसंख्यायोगानांतुल्ये अपवादे आश्रययोगेनसंख्यायोगः कथमभिभूयते उच्यते यदिसंख्यायोगेनाश्रययोगापशमनंभवति तदाआश्र
ययोगोनभवति संख्यायोगोभवति यत्रयदाआश्रययोगेनसंख्यायोगोभिभूयते तदागोलस्यावकाशएवनस्यात् परिभाषाचेयं निरवकाशाहिवि
धयः सावकाशान्विधीन्बाधंतेइति अथैकैकराशिलग्नगतमधिकृत्यपुराणयवनमतेनयत्सार्द्धयोगशतमुक्तं तदधुनाप्रदर्श्यते तेषांतावत्त्रयोविंश
तिराकृतियोगाः विंशतिरेववराहमिहिरेणाभिहिताः किंतु तेषांमध्याद्गदायोगेनचत्वारोयोगाअभिहिताः लग्नचतुर्थयोः यदासर्वेग्रहाभवंति त
दागदायोगः चतुर्थसप्तमयोः शंखः सप्तमदशमयोः बन्धुकः दशमलग्नयोः ध्वजः तत्रपूर्वोक्ताविंशतिः शंखबन्धुध्वजैः सहत्रयोविंशतिः भवंति

धनविरहितःपाखंडीवायुगेत्वथगोलकेविधनमलिनोऽज्ञानोपेतःकुशल्यलसोटनः इतिनिगदिता
योगाःसार्द्धफलैरिहनाभसानियतफलदाश्चिंत्याह्येतेसमस्तदशास्वपि १९ इतिनाभसयोगाध्यायः१२

संख्यायोगानांसप्तविंशत्यधिकंशतं एवंसार्द्धशतं १५० राशिद्वादशकेनाष्टादशशतानिभवंति १८०० तत्रसप्तविंशत्यधिकस्यसंख्यायोगशतस्योत्प-
त्तिः प्रदर्श्यते तद्यथैषांविकल्पाःसप्त द्विविकल्पाएकविंशतिः त्रिविकल्पाः पंचत्रिंशत् ३५ चतुर्विकल्पाः पंचाग्निः ३५ पंचविकल्पाएकविंशतिः २१ ष-
ड्विकल्पाःसप्त सप्तविकल्पाएकः एतदेकीकृतंसप्तविंशत्यधिकशतंभवति १२७ एतदेववराहमिहिरेणविवाहपटलेउक्तम् द्वित्र्यादियोगान्परिगृह्यकस्मा-
न्नोक्तंशतंसत्रिधनंविलग्नइति अथविकल्पगणितंप्रदर्श्यते तत्राचार्येणविकल्पगणितंसंहितायामुक्तं पूर्वेणपूर्वेणगतेनयुक्तंस्थानंविनांत्येप्रवदंतिसं-
ख्यां इच्छाविकल्पैः क्रमशोभिनीयनीतेनिवृत्तिःपुनरन्यनीतिरिति अत्रयावत्संख्यानांविकल्पाःक्रियंते तदंतानेकाद्यानुपर्युपरिस्थापयेत् तद्यथात्रस-

समद्रे एकाधनासमातानान्यासः ७ । ६ । ५ । ४ । ३ । २ । १ अत्रपूर्वेणगतेनयुक्तस्थानविनात्यामिति पूर्वमासीगतस्मपूर्वगतः तेनपूर्वेणगतेनयुक्तमत्य
मुपरिस्थानविनातद्वर्जयित्वेत्यर्थः प्रथममेकमधःस्थिततयोर्द्वयोरुपरिस्थपो क्षिपेत् एवंतत्रत्रीणिरूपाणिजातानि तानिचस्वोपरिस्थितुक्षिपेत् एव
तत्रषड्जातानितानिस्वोपरिचतुर्षुक्षिपेत् एवंतत्रदशरूपाणिजातानितानिस्वोपरिपंचसुक्षिपेत् तत्रपञ्चदशजातानितानिस्वोपरिषट्सुक्षिपेत् तत्रै
कविंशतिर्जातानि अतःपरंचकर्मणोऽभावात्तदुपरिसप्तसैवस्थिताः यदुक्तं स्थानविनात्यपुनरप्यधः प्रवृत्यैवंकृत्वापञ्चमेस्थाने पञ्चत्रिंशज्जाताः
पुनरपिचतुर्थेपञ्चत्रिंशत् पुनस्तृतीयेएकविंशतिः पुनर्द्वितीयेसप्तप्रथमेएकैव १ । ७ । २१ । ३५ । ३५ । २१ । ७ । १ अथपान्ये-
नप्रकारेणसंख्यानयनमतिलोमविनिक्षिप्यचानुलोममधःक्षिपेत् अनुलोमंसमाहृत्यादधःस्थेनविभाजयेत् न्यासः अथसप्तानामधो

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| रूपछेदः | ७ | ६ | ५ | ४ | ३ | २ | १ | |
| स्थानभागम | १ | १ | २ | ४ | ५ | ६ | ७ | ० |

अनेनभागमपहृत्यलब्धंसप्त ७ एतैः द्वितीयस्थानेषड्सगुणपाधःस्थिताभ्यां द्वा
पहरेत् लब्धमेकविंशतिः २१ एतैस्तृतीयस्थाःपंचसगुणयत्रिभिः भजेल्लब्धपञ्च
त्रिंशत् ३५ एतैश्चतुर्थस्थानस्थाश्चत्वारिसगुणयचतुर्भिः भजेल्लब्धंपंचत्रिंशत् ३५ एभिःत्रीणिसगुणयपञ्चभिः विभाज्यावाप्तमेकविंशतिः
२१ एभिः द्वेसगुण्यषड्भिः विभज्यावाप्तंसप्त एभिरेकंसगुणयसप्तभिः विभज्यावाप्तमेकएव एषमेकद्वित्रिचतुःपञ्चषट्सप्तविकल्पा १ ७
विकल्पगणितफलापरेष्टसंख्यानांव्याख्येयं अथैतेषांविकल्पानांलोष्टकप्रस्तारेणोद्धारः कर्तव्यः इच्छाविकल्पैः क्रमशोऽभिनीयनीतो
ऽपि पुनरन्यनीतिमिति यथेष्टसंख्यानांविकल्पानामाधारसराशिंलिखेत् तत्रैकविकल्पेष्वेकंलोष्टनिक्षिप्यसकलान्विकल्पानुत्पादयेत् द्विविकल्पेष्वा
द्यस्थिरलोष्टनिक्षिप्यद्वितीयेनलोष्टनिक्षिप्तेनसहविकल्पानुत्पादयेत् एवन्त्र्यादिष्वपिविकल्पेष्वाद्यस्थिरलोष्टनिक्षिप्तांकृतान्यैः चरलोष्टनिक्षि

तेः सहान्यस्त्वाविकल्पादुत्पादयेत् एवंकृत्वाप्रथमस्यापासनंकार्यं नीतेनिवृत्तिरितिवचनात् ततोन्यस्थिरचिन्हंकृत्वान्यसेत् पुनरन्यनीतिरितिव
चनात् उक्तंच भट्टश्रीशंकरेण वर्णसंख्यांककोष्ठाख्यांसेपर्क्षोज्ञेयसंख्यकः ज्ञेयोक्त्यान्यत्रतत्पूर्वहान्पूर्वश्चाप्यनुक्रमात् नयेद्वामाद्यमंत्यस्थाद्येपू
र्वेतांनिरंतरं ज्ञेयोतःपुनराद्याश्चकोष्ठनिष्ठावधिर्विधिरिति तद्यथैकविकल्पाः रविः चंद्रः भौमः बुधः गुरुः शुक्रः शनिः एवमेकविकल्पाः सप्त ७ अ
थद्विविकल्पना रविचंद्रौरविभौमौ रविबुधौ रविजीवौ रविशुक्रौ रविसौरौ एवमादित्येनसहषट् अथतृतीयविकल्पः शशिभौमौ शशिबु
धौ शशिजीवौ शशिशुक्रौ शशिसौरौ एवंचंद्रेणसहपंच भौमबुधौ भौमजीवौ भौमशुक्रौ भौमसौरौ एवंभौमेनसहचत्वारः बुधजी-
वौ बुधशुक्रौ बुधसौरौ एवंबुधेनसहत्रयः जीवशुक्रौ जीवसौरौ एवंजीवेनसहद्वौ शुक्रसौरौ एवंशुक्रेणसहएकः एवंद्विविकल्पः एकविंशतिः
अथत्रिविकल्पाः रविचंद्रभौमाः रविचंद्रबुधाः रविचंद्रजीवाः रविचंद्रशुक्राः रविचंद्रसौराः एवमादित्यचंद्रयोःपंच रविभौमबुधाः रविभौ
मजीवाः रविभौमशुक्राः रविभौमसौराः एवमादित्यांगारकयोश्चत्वारः रविबुधजीवाः रविबुधशुक्राः रविबुधसौराः एवमादित्यबुधयोस्त्र
यः रविजीवशुक्राः रविजीवसौराः एवंद्वौरविशुक्रसौराः एवमेकः एवमादित्येनसहात्रिविकल्पाः पंचदश चंद्रभौमबुधाः चंद्रभौमजीवाः चं
द्रभौमशुक्राः चंद्रभौमसौराः एवंचंद्रभौमयोश्चत्वारः चंद्रबुधजीवाः चंद्रबुधशुक्राः चंद्रबुधसौराः एवंत्रयः चंद्रजीवशुक्राः चंद्रजी
वसौराः एवंद्वौ चंद्रजीवसौराः एकः एवंचंद्रेणसहदश १० भौमबुधजीवाः भौमबुधशुक्राः भौमबुधसौराः एवंत्रयः भौमजीव
शुक्राः भौमजीवसौराः एवंद्वौ भौमशुक्रसौराः एवंभौमेनसहषट् बुधजीवशुक्राः बुधजीवसौराः एवंद्वौ जीवशुक्रसौराः एकः
एवंत्रिविकल्पाः पंचत्रिंशत् ३५ अथचतुर्विकल्पाः रविचंद्रभौमबुधाः रविचंद्रभौमजीवाः रविचंद्रभौमशुक्राः रविचंद्रभौमसौराः ए-

चत्वारः रविचन्द्रबुधजीवाः रविचन्द्रबुधशुक्राः रविचन्द्रबुधसौराः एवंत्रयः रविचन्द्रजीवशुक्राः रविचन्द्रजीवसौराः एवंद्वौ रविचन्द्रशुक्रसौराः एवमेकः रविभौमबुधजीवाः रविभौमबुधशुक्राः रविभौमबुधसौराः एवंत्रयः रविभौमजीवशुक्राः रविभौमजीवसौराः एवंद्वौ रविभौमशुक्रसौराः एवमेकः रविबुधजीवशुक्राः रविबुधजीवसौराः द्वौ रविबुधशुक्रसौराः रविजीवशुक्रसौराः एवमादित्येनसहविंशतिः चंद्रभौमबुधजीवाः चंद्रभौमबुधशुक्राः चंद्रभौमबुधसौराः एवंत्रयः चंद्रभौमजीवशुक्राः चंद्रभौमजीवसौराः एवंद्वौ चंद्रभौमशुक्रसौराः चंद्रबुधजीवशुक्राः चंद्रबुधजीवसौराः चंद्रबुधशुक्रसौराः चंद्रजीवशुक्रसौराः एवंचंद्रेणसहदश भौमबुधजीवशुक्राः भौमबुधजीवसौराः भौमबुधशुक्रसौराः भौमजीवशुक्रसौराः एवंभौमेनसहचत्वारः बुधजीवशुक्रसौराः बुधेनसहएकः एवंचतुर्विकल्पाः पंचत्रिंशत् ३५ अथपंचविकल्पाः रविचन्द्रभौमबुधजीवाः रविचंद्रभौमबुधशुक्राः रविचंद्रभौमबुधसौराः रविचन्द्रभौमजीवशुक्राः रविचन्द्रभौमजीवसौराः रविचन्द्रभौमशुक्रसौराः रविचन्द्रबुधजीवशुक्राः रविचन्द्रबुधजीवसौराः रविचन्द्रबुधशुक्रसौराः रविचन्द्रजीवशुक्रसौराः रविभौमबुधजीवशुक्राः रविभौमबुधजीवसौराः रविभौमबुधशुक्रसौराः रविभौमजीवशुक्रसौराः रविबुधजीवशुक्रसौराः रविबुधजीवशुक्रसौराः एवमादित्येनसहपंचदश १५ चंद्रभौमबुधजीवशुक्राः चंद्रभौमबुधजीवसौराः चंद्रभौमबुधशुक्रसौराः चंद्रभौमजीवशुक्रसौराः चंद्रबुधजीवशुक्रसौराः एवंचंद्रमसासहषट् ६ भौमबुधजीवशुक्रसौराः एवंपंचविकल्पाः एकविंशति २१ अथषड्विकल्पाः आदित्यचन्द्रभौमबुधजीवशुक्राः रविचन्द्रभौमबुधजीवसौराः रविभौमबुधजीवशुक्रसौराः चंद्रभौमबुधजीवशुक्रसौराः एवंषड्विकल्पाः अथसप्तविकल्पाः रविचंद्रभौमबुधजीवशुक्रसौराः सप्तविकल्पएकएव एवंसप्तविंशत्यधिकविकल्पशतं १२७ व्याख्यातं इतिसंकल्पो नामसयोगाध्यायः समाप्तः १२

अथातश्चंद्रयोगाध्यायोव्याख्यायते तत्रादावेवार्कात्केंद्रपणफरापोक्लिमस्थेचंद्रेजातस्यस्वरूपंज्ञानंमालिन्याह अधमसमवरिष्ठानीति विनयोनी
तिःसुशीलता वित्तंधनंज्ञानंविज्ञानंशास्त्रावबोधः धीःबुद्धिःनैपुण्यंकार्येषुसूक्ष्मदर्शित्वं अर्कादादित्यात्केंद्रादिसंस्थेकेंद्रपणफरापोक्लिमसंस्थेशशिनि
चंद्रेजातस्यविनयवित्तज्ञानधीनैपुणान्यधमसमवरिष्ठानिनिकृष्टमध्यमोत्तमानिभवंति एतदुक्तंभवति यस्यादित्याज्जन्मनिकेंद्रस्थश्चंद्रमाभवति त
स्यैतानिविनयादीन्यधमानिभवंति अधमत्वमेतेषामभावः यस्माद्यवनेश्वरः मूर्खान्दरिद्रांश्चपलान्विशीलांश्चंद्रः प्रसूतेर्कचतुष्टयस्थः यस्यजन्म
समयेपणफरस्थश्चंद्रः सूर्याद्भवति तस्यैतानिमध्यमानिभवंति नचातिभवतीत्यर्थः यस्यजन्मनि आपोक्लिमस्थ श्चंद्रोभवति तस्यवि-

अथचंद्रयोगाध्यायप्रारंभः अधमसमवरिष्ठान्यर्ककेंद्रादिसंस्थेशशिनिविनयवित्तज्ञानधी
नैपुणानि अहनिनिशिचचंद्रेस्वेधिमित्रांशकेवासुरगुरुसितदृष्टेवित्तवान्स्यात्सुखीच १

नयादीनिवरिष्ठानिभवंति तथाचयवनेश्वरः कुर्याद्द्वितीयेधनिनांप्रसूतिमापोक्लिमस्थेकुलजाग्रजानामिति अहनीत्यादि चंद्रेशशिनिस्वेधिमित्रांशक
स्थे अहनिनिशिचयथासंख्यंसुरगुरुसितदृष्टेजीवशुक्राभ्यामवलोकितेजातोवित्तवान् धनीसुखीचभोगवांश्चस्याद्भवेत् एतदुक्तंभवति यस्या
हनिदिवाजन्मभवति चंद्रश्चयस्मिंस्तस्मिन्राशौस्वनवांशकस्थोभवति स्वस्याधिमित्रांशकेस्थितोवासुरगुरुणाजीवेनदृष्टः तदासपुरुषोवित्त-
वान्सुखीचभवति अथयस्यनिशिरात्रौजन्मभवतिचंद्रमास्वनवांशकस्थोऽधिमित्रनवांशकस्थोवाभवति शुक्रेणदृश्यतेतदाजातोवित्तवा
न्सुखीचभवति अत्राहनिनिशिचचंद्रेस्वाधिमित्रांशकेवास्थितेयथासंख्यंसुरगुरुसितदृष्टेकेचिद्व्याचक्षते अयुक्तमेतत् यस्माद्भगवान्

गार्गिः स्वांशोधिमित्रस्यांशेशसस्थितोदिवसेशशी गुरुणादृश्यतेतत्रजातोवित्तसुखान्वितः निस्वेनभृगुणादृष्टः शशीजन्मनिदृश्यते विपर्ययस्थे
शीतांशोर्जायतेल्पधनानरा इति तथाचयवनेश्वरः स्वांशेशशीभार्गवदृष्टमूर्तिर्निशीश्वरोस्पतिकरः प्रदिष्ट तद्वत्तमोर्भूतिकरःसतुस्याद्दृष्टोदिवा
देवपुरोहितेन १ अथाधियोगास्ययोगस्यफलवसंततिलकेनाह सौम्यैरिति इर्वोश्चन्द्रात्सौम्यैः बुधगुरुसितैः स्मरारिनिधनेषु सप्तमषष्ठा
ष्टमेषुत्रिषुस्थानेषुद्वयोर्वास्थानद्वयोरेकस्मिन्वास्थानेसर्वएवभवति तदाधियोगाख्योयोगोव्याख्यातोभवति अत्रकेचित्षष्ठसप्तमाष्टमानास्था
नानासौम्यग्रहनयस्यावस्थानादशुभतायामभियोगोव्याख्यातः तच्चायुक्तं यस्माच्छ्रुतकीर्तिः निधनद्यूनषष्ठचन्द्रस्थानाधयाशुभैर्युक्तं अधियो

सौम्यैःस्मरारिनिधनेष्वधियोगइन्दोस्तस्मिंश्चमूपसचिवक्षितिपालजन्म
सम्पन्नसौख्यविभवाहतशत्रवश्चदीर्घायुषोविगतरोगभयाश्चजाता २

ग॰सभोक्तोव्यासकृतौसप्तधापूर्वैः व्यासकृतोविस्तरकृतौपूर्वैराचार्यैर्विस्तरैः सत्वसप्तधासप्तप्रकार प्रोक्तः कथितः तद्यथा षष्ठेशशीयदासर्वसौ
म्यग्रहा भवतितदैकः सप्तमेद्वितीयः अष्टमेतृतीयः षष्ठसप्तमयोश्चतुर्थः षष्ठाष्टमयोःपंचमः सप्तमाष्टमयो षष्ठः षष्ठसप्तमाष्टमेषुसप्तमइति ए
वमेवस्थितेषुसौम्येष्वधियोगः अथयदिवेवमस्थितेषुपापैः पापः मिश्रैर्मिश्रः तथाचश्रुतकीर्तिःषट्सप्तमाष्टमसंस्थे श्चन्द्रात्सौम्यैःशुभोधियोगःस्यात्
पापःपापैरेवमिश्रैर्मिश्रस्तथैवोक्तः अधियोगजातानांफलमाह तस्मिंश्चमूपतिसचिवक्षितिपालजन्मेति तस्मिन्नधियोगेजातश्चमूपःसेनापतिर्भ
वति सचिवोमन्त्रीभवति क्षितिपालोभूपालोराजाभवति तेषामुणपदसम्पत...
बादरायणः शशिनःसौम्याःषष्ठद्यूनेषुनिध

नसंस्थिताबास्युः जातोनृपतिर्ज्ञेयोमंत्रीवासैन्यनायकोवापि तेनैतदुक्तंभवति बुधगुरुसितैरुत्कृष्टवीर्यैः नृपोमध्यमवीर्यैः सचिवःहीनवीर्यैःसेनाप
तिः एषामन्यतमाअपि संपन्नसौख्यविभवाः अतिसौख्यैश्वर्यसंपन्नाः हतशत्रवः नष्टरिपवः दीर्घायुषःचिरजीविनः विगतरोगभयाः स्वस्थदेहा
निर्भयाश्च एवंविधेयोगेजाताभवंति केषांचिन्मतेराजयोगएव तथाचसारावल्यां द्यूनंषष्ठमथाष्टमंशिशिरगोः प्राप्ताःसमस्ताःशुभाः क्रूराणांयदिगोचरे
नपतिताःसूर्यालयाद्दूरतः भूपालःप्रभवेत्सयस्यजलधेर्वेलावनांतोद्भवैः सेनामत्तकरींद्रदानसलिलंभृंगैर्मुहुःपीयते १ तथाचमांडव्यः अमित्रं
यामित्रनिधनमथवाशीतरुचितोगताः सर्वेसौम्यास्तमिहजनयेयुर्नरं पतिं धृतेनैवासेकंगतवतिविषादेतुपयसाप्रतापाग्निर्यस्यज्वलतिविषयेश

हित्वार्कंसुनफानफादुरुधुराःस्वांत्योभयस्थैर्ग्रहैः शीतांशोःकथितोन्यथातुबहुभिःकेमद्रुमोन्यैस्त्वसौ
केंद्रेशीतकरेथवाग्रहयुतेकेमद्रुमोनेष्यतेकेचित्केंद्रनवांशकेषुचवदंत्युक्तिःप्रसिद्धानते ३

कुसुमृशम् २१२ अथसुनफानफादुरुधुराकेमद्रुमाख्यंयोगचतुष्टयंशार्दूलविक्रीडितेनाह हित्वार्कमिति अथार्कमादित्यंहित्वात्यक्त्वायदान्यः कश्चिद्ग्र
होभौमादिकः शीतांशोश्चंद्रात्स्वांत्योभयस्थोभवति द्वितीयस्थोद्वादशस्थोवाद्वितीयद्वादशस्थोवाहोभवतस्तदासुनफाअनफादुरुधुराख्ययोगत्र
यंभवति एतदुक्तंभवति अर्कंहित्वा यदान्योग्रहः कश्चिच्चंद्राद्द्वितीयस्थानेभवति तदासुनफानामयोगोभवति अथार्कंवर्जयित्वाचंद्रात्द्वादशेकश्चिद्ग्र
होभवति तदाअनफानामयोगोभवति एवंचंद्रात्द्वितीयद्वादशगोग्रहोभवतस्तदादुरुधुरानामयोगोभवति अत्रयोगत्रयेप्यादित्योद्वितीयेद्वादशेवास्थाने
भवति तदानयोगभंगःस्याद्भवति किंतुयोगकर्तृणांमध्येनगण्यते एतदुक्तंभवति आदित्योद्वितीयेद्वादशेवास्थानेभवतुमाभवतुवाभौमादिस्तत्रस्थोयथादर्शि-

तुयोगकर्ताभवति एतेयोगावराहमिराचार्यैः पठिताः अन्यथा केमद्रुमउक्तः असायोगमथायद्येकोपियोगोनभवतितदाकेमद्रुमाख्योयोगोभवति एतदुक्तंभवति
भौमादीनांकेंद्रे शीतकरेयवाग्रहयुतेकेमद्रुमोनेष्यते अन्येषागर्गादीनामेवमते केंद्रेजन्मलग्नेकेंद्रे शीतकरेचंद्रेवाभौमादिग्रहयुतेभौमादिग्रहविरहितयोर
पिचद्वादितीयद्वादशस्थानयोः केमद्रुमोनभवति केंद्रेग्रहयुतइत्यनेकेभिच्चंद्रकेंद्रमेवकेवलव्याख्यातं तच्चायुक्तं चंद्रकेंद्रेग्रहयुतेचंद्रमसोपियोगोतमेवेति
शीतकरेग्रहयुतेइत्येतदपार्थकंस्यात् अथचभगवान्गार्गिः यथार्थकेंद्रगश्चंद्राद्विनामानुन्ने ग्रहः कश्चित्स्याद्याविनाचंद्रलग्नात्केंद्रगतोयवा योगःके
मद्रुमोनामतदास्यात्सुगर्हिताः भवतिनिंदितास्वासदारिद्र्यापत्तिसंयुताः तथाचसारावल्याम् सुनफानफादुरुधुराःक्रमेणयोगाभवति रविरहितैः
शेतात्योभयसंस्थैःकेरयवनवाधवाद्विग्रैः एतेनयदायोमाः केंद्रेग्रहवर्जितः शशांकश्चकेमद्रुमोतिकष्टः शशिनिचसर्वग्रहादृष्टे एवकेंद्रेशीतकरे
यवाग्रहयुतेकेमद्रुमोनेष्यते अन्येआचार्यानिच्छंति वराहमिहिरस्तुपुनरिच्छत्येव यस्मिन्नर्थेतस्यैवतद्वाक्यं अन्ययाकेमद्रुमइत्येवमुक्तंपरम
तमुक्तं अन्येरसौपत्रकेंद्रेशीतकरेयवाग्रहयुतेकेमद्रुमोनेष्यते स्वल्पजातकेपि तेनसुनफानफादुरुधुराभावेकेमद्रुमउक्तः तथाच रविवर्ज्यद्वा
दशगैरनफाचंद्राद्वितीयगैः सुनफा उभयस्थितैर्दुरुधुराकेमद्रुमसंज्ञकोतोन्यः सत्यस्यापि सुनफानफादुरुधुराभावेकेमद्रुमः तथाच सुनफा
नफायोगौदुरुधुरश्चंद्रसंस्थितः सेयात् भाकूपृष्ठवोग्रहैरुभयगतैस्तेषुरविवर्ज्यं केमद्रुमोत्रयोगोन्यथाभवेयत्रगर्हितजन्म केचित्केंद्रनवा
किंचिति केचिदाचार्याः केंद्रयुकेचित्सनफाशकेप्येतद्योगत्रयमदति यथात्वद्वादितीयद्वादशोभयस्थैर्ग्रहैः सुनफाद्यायोगाव्याख्याताः तथाकें
द्रस्थितैर्जीवशर्मप्रभृतिभिः केंद्रवशान्नवाशाकपरान्याख्याता एतदुक्तंभवति ताराग्रहैर्भवाच्चतुर्थस्थानस्थे सुनफादशमस्थानस्थैरन
[illegible] नफाविभूमिकैः उभयस्थितैर्दुरुधुराकेमद्रुमस

ज्ञितोन्यथायोगः केचित्कंद्रनवांशकेषुतुवदंति यत्रतत्रराशौयद्राशिसंबंधिनवांशकेचंद्रमाभवति तस्माद्राशेर्योद्वितीयोराशिः तत्रयदितारग्रहोभवति तदासुनफा अथचंद्रनवांशकराशेःद्वादशेतारग्रहोभवति तदानफा अथचंद्रनवांशकराशेःद्वितीयेद्वादशेचयदाग्रहोभवतस्तदादुरुधुरा अतोन्यथा केमद्रुमः तथाचचंद्रनवांशकराशितोद्विर्द्वादशराशीयदिग्रहरहितोभवतः तदाकेमद्रुमः तथाचजीवशर्मा यद्राशिसंज्ञेशीतांशुर्नवांशेजन्मनिस्थितः त द्वितीयस्थितैर्योगः सुनफाख्यः प्रकीर्तितः द्वादशेनफाज्ञेयोग्रहैर्द्विर्द्वादशास्थितैः प्रोक्तोदुरुधुरायोगोन्यथाकेमद्रुमःस्मृतःउक्तिःप्रसिद्धानंते येषा मेवंविधंमतं तेषामुक्तिर्लोकेनप्रसिद्धा तन्मतंवृद्धज्योतिषिकैर्नांगीकृतमित्यर्थः ३ अथसुनफानफादुरुधुराख्यप्रकारज्ञानमिंद्रवज्रयाह

त्रिंशत्सरूपाःसुनफानफाख्याःषष्टित्रयंदौरुधुरेप्रभेदाः
इच्छाविकल्पैःक्रमशोभिनीयनीतेनिवृत्तिःपुनरन्यनीतिः ४

त्रिंशत्सरूपाइति सरूपाः त्रिंशदेकत्रिंशत् एकत्रिंशत्सुनफाख्यायोगाः तावंतएवानफाख्याः षष्टित्रयमशीत्यधिकं शतंदुरुधुराप्रभेदानांएषांपूर्ववद्वि कल्पगणितं इच्छाविकल्पैरित्यादि एतत्श्लोकेलोष्टकप्रस्तारंपूर्वमेवनाभसयोगाध्यायेव्याख्यातं इच्छाविकल्पैःक्रमशःपरिपाद्यान्यत्रलोष्टकमभि नीयनीतेनिवृत्तिःकार्या पुनःभूयोन्यनीतिरित्यत्रस्थानांतरेचालनं अथसुनफादयोभौमबुधगुरुसितासितैः पंचभिर्निष्पाद्यंते तस्मादिच्छाविक- ल्पाःपंच तेषांन्यासः अत्रप्राग्वत्सूर्वेणगणितेनयुक्तस्थानंविनांत्यंप्रवदंतिसंख्यामितिकृत्वाजातं ५।४।३।२।१ अथवाप्राग्वत्संख्येःस्वसंख्याजाता एकमे

| | | | | |
|---|---|---|---|---|
| ५ | ४ | ३ | २ | १ |
| १ | २ | ३ | ४ | ५ |

कविकल्पाः पंच द्विविकल्पादश त्रिविकल्पादश चतुर्विकल्पाःपंच पंचविकल्पाएकः एवमेकत्रिंशत् ५ । १० । १० । ५ । १

सौरी २९ भौमः सौरजीवौ ३० जीव: बुधशुक्रौ ३१ बुध शुक्रजीवौ ३२ जीवः बुधसौरी ३३ बुधः सौरजीवौ ३४ जीवः शुक्रसौरी ३५ शुक्रः सौर
जीवौ ३६ शुक्र भौमबुधौ ३७ भौमः बुधशुक्रौ ३८ शुक्रः भौमजीवौ ३९ भौमः जीवशुक्रौ ४० शुक्र भौमसौरी ४१ भौमः सौरशुक्रौ ४२ शुक्रः
बुधजीवौ ४३ बुध जीवशुक्रौ ४४ शुक्रः बुधसौरी ४५ बुधः सौरशुक्रौ ४६ शुक्रः जीवसौरी ४७ जीवः सौरशुक्रौ ४८ सौरः भौमबुधौ ४९
भौमः बुधसौरी ५० सौर भौमजीवौ ५१ भौमः जीवसौरी ५२ सौर भौमशुक्रौ ५३ भौमः शुक्रसौरी ५४ सौरः बुधजीवौ ५५ बुधः जीवसौरी
५६ सौरः बुधशुक्रौ ५७ बुधः शुक्रसौरी ५८ सौरः जीवशुक्रौ ५९ जीवः शुक्रसौरी ६० एवमेकत्र जाताः ८० अथैकोद्वितीये द्वादशेत्रय तद्य
था भौमः बुधजीवशुक्राः १ बुधजीवशुक्राः भौमः २ भौमः बुधजीवसौराः ३ बुधजीवसौराः भौमः ४ भौमः बुधशुक्रसौराः ५ बुधशुक्रसौराः
भौम ६ भौमः जीवशुक्रसौराः ७ जीवशुक्रसौराः भौमः ८ बुध भौमजीवशुक्राः ९ भौमजीवशुक्राः बुधः १० बुधः भौमजीवसौराः ११ भौम
जीवसौराः बुधः १२ बुधः भौमशुक्रसौराः १३ भौमशुक्रसौराः बुधः १४ बुधः जीवशुक्रसौराः १५ जीवशुक्रसौराः बुधः १६ जीवः भौमबुधशुक्राः १७
भौमबुधशुक्राः जीवः १८ जीव भौमबुधसौराः १९ भौमबुधसौराः जीवः २० एवमेकत्र १०० जीवः भौमबुधसौराः १ भौमशुक्रसौराः जीव २
जीव बुधशुक्रसौराः ३ बुधशुक्रसौराः जीवः ४ शुक्र भौमबुधजीवाः ५ भौमबुधजीवाः शुक्रः ६ शुक्रः भौमबुधसौराः ७ भौमबुधसौराः शुक्र
८ शुक्रः भौमजीवसौराः ९ भौमजीवसौराः शुक्रः १० शुक्रः बुधजीवसौराः ११ बुधजीवशुक्राः सौरः १२ सौरः भौमबुधजीवाः १३ भौमबुधजी-
वाः सौरः १४ सौरः भौमबुधशुक्राः १५ भौमबुधशुक्राः सौरः १६ सौरः भौमजीवशुक्राः १७ भौमजीवशुक्राः सौरः १८ सौरः बुधजीवशुक्राः १९
बुधजीवशुक्राः सौरः २० एवमेकत्र १२० अथद्वितीयेएकोद्वादशेचत्वारः चत्वारोद्वितीयेद्वादशेनैकः तद्यथा भौमः बुधजीवशुक्रसौराः १

तथया द्वितीयेनचन्द्रेभौम: बुध: वृहस्पति: शक्र: सौर: एवमेकविकल्पा: पन्च अथद्विविकल्पा: भौमबुधौ भौमजीवौ भौमशक्रौ भौमसौरौ बुधजीवौ बु
धशक्रौ बुधसौरौ जीवशक्रौ जीवसौरौ शक्रसौरौ एवद्विविकल्पा: दश अथत्रिविकल्पा: भौमबुधजीवा: भौमबुधशक्रा: भौमबुधसौरा: भौ
मजीवशक्रा: भौमजीवसौरा: भौमशुक्रसौरा: बुधजीवशक्रा बुधजीवसौरा: बुधशुक्रसौरा: जीवशुक्रसौरा एवंत्रिविकल्पादश १० अथ
चतुर्विकल्पा: भौमबुधजीवशुक्रा: भौमबुधजीवसौरा: भौमजीवशुक्रसौरा: भौमबुधशक्रसौरा: बुधजीवशुक्रसौरा: एवचतुर्विकल्पा: पन्च ५
अथपंचविकल्पा: भौमबुधजीवशक्रसौरा: एवंपंचविकल्पएक: १ एवमेकत्रिंशत् ३१ सन्नपायोगा: उत्पादिता: अनेनैवप्रकारेणद्वादशस्थेअ
नफाभेदा: एकत्रिंशत् अथदुरुधराविकल्पा एषामेकप्रस्ताराभावात्स्वबुध्येच्छाविकल्पै: क्रमशोभिनीयेतिन्यायेनव्युत्पत्ति: एकोद्वितीये द्वि
तीयोद्वादशे एकोद्वादशेद्वितीयोद्वितीये तथया भौमबुधौ १ बुधभौमौ २ भौमजीवौ ३ जीवभौमौ ४ भौमशुक्रौ ५ शक्रभौमौ ६ भौम
सौरौ ७ सौरभौमौ ८ बुधजीवौ ९ जीवबुधौ १० बुधशुक्रौ ११ शक्रबुधौ १२ बुधसौरौ १३ सौरबुधौ १४ जीवशुक्रौ १५ शक्रजीवौ १६ जी
वसौरौ १७ सौरजीवौ १८ शक्रसौरौ १९ सौरशुक्रौ २० अथैकोद्वितीये द्वादशेद्वौ द्वितीयेद्वौ द्वादशेत्वेक: तथया भौम: बुधजीवौ १ बुध: जी
वभौमौ २ जीव: शुक्रबुधौ ३ बुध: शुक्रभौमौ ४ भौम: बुधसौरौ ५ बुध: सौरभौमौ ६ भौम: जीवशुक्रौ ७ जीव: शुक्रभौमौ ८ भौम: जी
वसौरौ ९ जीव: सौरभौमौ १० भौम: शक्रसौरौ ११ शुक्र: सौरभौमौ १२ बुध: भौमजीवौ १३ जीव: भौमबुधौ १४ बुध भौमशक्रौ १५
भौम: शक्रबुधौ १६ बुध भौमसौरौ १७ भौम: सौरबुधौ १८ बुध: जीवशुक्रौ १९ जीव: शुक्रबुधौ २० बुध: जीवसौरौ २१ जीव: सौरबुधौ
२२ बुध: शक्रसौरौ २३ शक्र: सौरबुधौ २४ जीव: भौमबुधौ २५ भौम: बुधजीवौ २६ जीव: भौमशक्रौ २७ भौम: शक्रजीवौ २८ जीव: भौम

अथसुनफानफयोर्योगजातस्यस्वरूपविज्ञानंमालिन्याह स्वयमिति स्वयमात्मनाधिगतमर्जितंवित्तंयेनस्वबाहूर्जितधनः पार्थिवोराजाभवति तत्समोवा यदिराजानभवतितदाराजतुल्यः धीधनख्यातिमान् बुद्धिवित्तकीर्तिभिः युक्तः एवंविधः सुनफायांयोगेजातोभवति प्रभुरिति प्रभुरप्रतिहताज्ञः अगदशरीरोनिरुजदेहः अविद्यमानागदारोगायस्य शीलवान् दमविनयादिभिर्गुणैः युक्तः ख्यातकीर्तिः प्रथितयशाः जनविदितसद्गुणः विषयसुखः शब्दस्पर्शरसरूपगंधाविषयाः तत्सुखैर्युक्तः ननुकिंविषयव्यतिरिक्तसुखमस्ति उच्यते अस्ति यद्योगिनांमनः सुखंसुवेषः अनुलेपनालंकारमाल्यसद्वस्त्रधारणशीलः निर्वृतः मनोदुःखविनिर्मुक्तः एवंविधोनफायांयोगेजातोभवति ५ अथदुरुधुराकेमद्रुमयोगेजा-

स्वयमधिगतवित्तःपार्थिवस्तत्समोवाभवतिहिसुनफायांधीधनख्यातिमांश्च प्रभुरगदशरीरःशीलवान्ख्या
तकीर्तिर्विषयसुखसुवेषोनिर्वृतश्चानफायां ५ उत्पन्नभोगसुखभुग्धनवाहनाढ्यस्त्यागान्वितोदुरुधु
राप्रभवःसुभृत्यः केमद्रुमेमलिनदुःखितनीचनिःस्वाःप्रेष्याःखलाश्चनृपतेरपिवंशजाताः ६

तयोःस्वरूपंवसंततिलकेनाह उत्पन्नभोगसुखभुगिति यत्रतत्रयथातथोत्पन्नैर्भोगैःसुखानिभुंक्ते धनेनवित्तेनवाहनैरश्वादिभिराढ्यो त्यागान्वितोदातासुभृत्यः भोजनभृत्यः एवंविधोदुरुधुराप्रभवोदुरुधुरायोगेजातोभवति केमद्रुमइति मलिनः मलवासाःस्नानालसश्चदुःखितः शरीराद्यैः मानसाद्यैःदुःखैरन्वितः नीचः स्वकुलानुचिताधमकर्मकरः निःस्वःदरिद्रः प्रेष्यः दासकर्मकरः खलः दुर्जनस्वभावः एषामुक्तार्थानामन्यतमेनयुक्तोयदिनृपतेः राज्ञोपिवंशेकुलेजातः तथाप्येवंविधः केमद्रुमजातोभवति केचिदत्रबहुवचनंपठंति केमद्रुमेमलिनदुःखितनीचनिःस्वाःप्रेष्याखला-

वृधजीवशुक्रसौराः भौमः २ बुधः भौमजीवशुक्रसौराः ३ भौमजीवशुक्रसौराः बुध ४ जीवः भौमबुधशुक्रसौराः ५ भौमबुधशुक्रसौराः जीव
६ शुक्र भौमबुधजीवसौराः ७ भौमबुधजीवसौराः शुक्र ८ सौरः भौमबुधजीवशुक्राः ९ भौमबुधजीवशुक्राः सौरः १० एवमेकत्र १३०
अथ द्वौ द्वादशद्वादशवद्वितीये तथया भौमबुधौ जीवशुक्रौ १ जीवशुक्रौ भौमबुधौ २ भौमबुधौ जीवसौरौ ३ जीवसौरौ भौमबुधौ ४ भौम
बुधौ शुक्रसौरौ ५ शुक्रसौरौ भौमबुधौ ६ भौमजीवौ शुक्रबुधौ ७ शुक्रबुधौ भौमजीवौ ८ भौमजीवौ बुधसौरौ ९ बुधसौरौ भौमजीवौ १०
भौमजीवौ शुक्रसौरौ ११ शुक्रसौरौ भौमजीवौ १२ भौमशुक्रौ बुधजीवौ १३ बुधजीवौ भौमशुक्रौ १४ भौमशुक्रौ बुधसौरौ १५ बुधसौरौ भौमशु
क्रौ १६ भौमशुक्रौ जीवसौरौ १७ जीवसौरौ भौमशुक्रौ १८ बुधजीवौ भौमसौरौ १९ भौमसौरौ बुधजीवौ २० एवमेकत्र १५० भौमसौरौ बुधशुक्रौ १
बुधशुक्रौ भौमसौरौ २ भौमसौरौ जीवशुक्रौ ३ जीवशुक्रौ भौमसौरौ ४ बुधजीवौ शुक्रसौरौ ५ शुक्रसौरौ बुधजीवौ ६ बुधशुक्रौ जीवसौरौ
भौमसौरौ बुधशुक्रौ ८ जीवशुक्रौ बुधसौरौ ९ बुधसौरौ जीवशुक्रौ १० एवमेकत्र १६० द्वौ द्वितीये त्रयो द्वादशे द्वादशे द्वौ त्रयो द्वितीये तथ
या भौमबुधौ जीवशुक्रसौराः १ जीवशुक्रसौराः भौमबुधौ २ भौमजीवौ बुधशुक्रसौराः ३ बुधशुक्रसौराः भौमजीवौ ४ भौमशुक्रौ बुध
जीवसौराः ५ बुधजीवसौराः भौमशुक्रौ ६ भौमसौरौ बुधजीवशुक्राः ७ बुधजीवशुक्राः भौमसौरौ ८ बुधजीवौ भौमशुक्रसौराः ९ भौमशु-
क्रसौराः बुधजीवौ १० एवमेकत्र १७० बुधशुक्रौ भौमजीवसौराः १ भौमजीवसौराः बुधशुक्रौ २ बुधसौरौ भौमजीवशुक्राः ३ भौमजीवशु
क्राः बुधसौरौ ४ जीवशुक्रौ भौमबुधसौराः ५ भौमबुधसौराः जीवशुक्रौ ६ जीवसौरौ भौमबुधशुक्राः ७ भौमबुधशुक्राः जीवसौरौ ८ शुक्र
सौरौ भौमबुधजीवाः ९ भौमबुधजीवाः शुक्रसौरौ १० एवमेकत्र १८० एवं द्रुधुरायोगभेदाः शतमशीत्यधिकं प्रदर्शितं ४ ७ ९

अथसुनफानफयोर्योगजातस्यस्वरूपविज्ञानंमालिन्याह स्वयमिति स्वयमात्मनाधिगतमर्जितंवित्तंयेनस्वबाहूर्जितधनः पार्थिवोराजाभवति तत्समोवा यदिराजानभवतितदाराजतुल्यः धीधनख्यातिमान् बुद्धिवित्तकीर्तिभिः युक्तःएवंविधः सुनफायांयोगेजातोभवति प्रभुरिति प्रभुरप्रतिहताज्ञः अगदशरीरोनिरुजदेहः अविद्यमानागदारोगायस्य शीलवान् दमविनयादिभिर्गुणैः युक्तःख्यातकीर्तिः प्रथितयशाःजनविदितसद्गुणः विषयसुख. शब्दस्पर्शरसरूपगंधाविषयाः तत्सुखैर्युक्तः ननुकिंविषयव्यतिरिक्तसुखमस्ति उच्यते अस्ति यद्योगिनामनःसुखंसुवेषः अनुलेपनालंकारमाल्यसद्वस्त्रधारणशीलः निर्वृतः मनोदुःखविनिर्मुक्तः एवंविधोनफायांयोगेजातोभवति ५ अथदुरुधुराकेमद्रुमयोगेजा-

स्वयमधिगतवित्तःपार्थिवस्तत्समोवाभवतिहिसुनफायांधीधनाख्यातिमांश्च प्रभुरगदशरीरःशीलवान्ख्यातकीर्तिर्विषयसुखसुवेषोनिर्वृतश्चानफायां ५ उत्पन्नभोगसुखभुग्धनवाहनाढ्यस्त्यागान्वितोदुरुधुराप्रभवःसुभृत्यः केमद्रुमेमलिनदुःखितनीचनिःस्वाःप्रेष्याःखलाश्चनृपतेरपिवंशजाताः ६

तयोःस्वरूपंवसंततिलकेनाह उत्पन्नभोगसुखभुगिति यत्रतत्रयथातथोत्पन्नैर्भोगैःसुखानिभुंक्ते धनेनवित्तेनवाहनैरश्वादिभिराढ्यो त्यागान्वितोदातासुभृत्यः भोजनभृत्यः एवंविधोदुरुधुराप्रभवोदुरुधुरायोगेजातोभवति केमद्रुमइति मलिनःमलवासाःस्नानालसश्चदुःखितः शरीरजैः मानसाद्यैःदुःखैरन्वितः नीचःस्वकुलानुचिताधमकर्मकरः निःस्वःदरिद्रः प्रेष्यःदासकर्मकरः खलःदुर्जनस्वभावः एषामुक्तार्थानामन्यतमेनयुक्तोयदि नृपतेः राज्ञोपिवंशेकुलेजातः तथाप्येवंविधः केमद्रुमजातोभवति केचिदत्रबहुवचनंपठंति केमद्रुमेमलिनदुःखितनीचनिःस्वाःप्रेष्याखला-

भृगुपतेरपिवशजाताः तथापिनकश्चिद्दोषः ६ एवंतावत्स्तनपानपानादिषुसामान्येनफलमभिधायेदानींग्रहवशाद्विशेषफलंवसंततिलकेनाह उ
त्साहवान्बलीनित्योद्यमशीलः शौर्यवान्रणप्रियः धनसान्वितान्वितस्साहसवानसमीक्षितकार्यकरः यद्यत्कार्यंयदाकालेतत्त्वविचार्यकरोतियः ससा
सिकः एवंविधोमहीसुतोगारकोयदियोगकर्ताभवति तदाजातोभवति पटुः दक्षः सुवचनः शोभनवाक् कलासुनिपुणः गीतवाद्यनृत्यचित्रपुस्तकर्मादिषुसूक्ष्मदृष्टिः यदिसौम्योबुधोयोगकरः तदैवंविधोजातोभवति अर्थभाक् धनानांभाजनः धर्मभाक् धर्मक्रियास्वनुरतः सुखभाक् निस्स
ङ्गिता नृपपूजितः राज्ञामान्यः यदिजीवोबृहस्पतिः योगकरः तदैवंविधोजातोभवति कामी कामुकः स्त्रीलोलः बहुधनः प्रभूतार्थः विषयोपभोक्ता

उत्साहशौर्यधनसाहसवान्महीजःसौम्यःपटुःसुवचनोनिपुणःकलासु जीवोर्थधर्मसुखभाग्नृप
पूजितश्चकामीभृगुर्बहुधनोविषयोपभोक्ता ७ परविभवपरिच्छदोपभोक्तारवितनयोबहुका
र्यकृद्गणेशः अशकुनमथवाद्रिकेस्यमूर्तिगलिततनुश्चशशांतयान्यदूह्यम् ८

विषयाणामिन्द्रियार्थानामुपभोक्ताउपभोगशीलः तत्सुखान्वितः यदिभृगुः शुक्रोयोगकरस्तदैवंविधोजातोभवति ७ अथशनैश्चरेयोग
कर्तरिपुरुषस्यस्वरूपंचन्द्रमसिचदृश्यादृश्यजातस्यस्वरूपज्ञानपुष्पिताग्रयाह पराजितानांविभवानामैश्वर्याणांपरिच्छदानांगृहवस्त्रवाहन-
परिवाराणांउपभोक्ताभवति बहुकार्यकृत्नानाविधानांकार्याणांकर्ता गणेशः बहुगणस्वामी गणाःसंघाः तेषांप्रभुः एवंविधोरवितनयः शनैश्च
रोयोगकर्तायदिभवति तदाजातोभवति अथयोगत्रयेस्तनपानपानादुरुधुराख्येएकैकस्यग्रहस्यफलमुक्तंद्व्यादिसंभविफलंदृष्ट्वादिकवाच्य अशु

मकृदिति उडुपश्चंद्रोन्हिदिने दृश्यमूर्तिः दृश्यमानशरीरः अशुभकृदनिष्टफलकर्ता एतदुक्तंभवति दिवाजन्मनिचंद्रमादृश्येचक्रार्द्धेस्थितः अशुभंफलं करोति सपुरुषोदारिद्र्यादियुक्तोभवतीत्यर्थः गलिततनुरदृश्यमूर्तिः शुभः एतदुक्तंभवत्यदृश्येचक्रार्द्धेस्थितः शुभकृज्जातऐश्वर्यादियुक्तोभवति अन्यथान्यदूह्यम् उक्तप्रकारादन्यथास्थेचंद्रमसिफलमन्यदूह्यम् सबुध्याविकल्पनीयं एतदुक्तंभवति रात्रौजन्मन्यदृश्येचक्रार्द्धे यस्य चंद्रोभवति तस्याशुभंजन्म यस्यदृश्येचक्रार्द्धेचंद्रोभवतितस्यशुभंजन्म यस्यदृश्येभवतितस्यशुभंजन्मभवतीत्यर्थः ८ अथलग्नाच्चंद्राद्वायस्योपचयेसौम्यग्रहाभवंतितस्यफलंवसंततिलकेनाह लग्नादिति यस्यजन्मनिलग्नात्सौम्यग्रहाः बुधजीवसिताउपचयगताभवंति स

लग्नादतीववसुमान्वसुमांश्चशशांकात्सौम्यग्रहैरुपचयोपगतैःसमस्तैः द्वाभ्यांसमोल्प
वसुमांश्चतदूनतायामन्येष्वसत्स्वपिफलेष्विदमुत्कटेन ९ इतिचंद्रयोगाध्यायः १३

र्वएवसपुरुषोतीववसुमानत्यर्थंधनवान्भवति यस्यशशांकाच्चंद्रात्सर्वउपचयेसर्वएवसौम्यग्रहाःभवंति सोपिधनवान्भवति एवंसमस्तैःत्रिभिरेतफल द्वाभ्यांसमः यस्यलग्नाच्चंद्राद्वाद्वौग्रहौसौम्यौउपचयगतौभवतः समोमध्यमधनोभवति नातिबहुधनोभवतीत्यर्थःतदूनतायामिति तदूनतायांलग्नाच्चंद्राद्वायस्यैकःसौम्यग्रहः उपचयगतोभवति सोल्पवसुमान्किंचिद्धनान्वितोभवति अर्थादेवलग्नाच्चंद्राद्वायस्योपचयेनकश्चित्सौम्यग्रहोभवति सदरिद्रोभवति यस्यलग्नचंद्रयोर्द्वयोरपिसौम्यग्रहाउपचयस्थाः कयापियुक्त्याभवंति सोप्यतीववसुमान्भवति अन्येष्वसत्स्वपिफलेष्विति अन्येष्वपरेष्वसत्स्वशोभनेष्वपिफलेषुसत्स्विदंफलमुत्कटेनबाहुल्येनभवति एतदुक्तंभवति यस्यलग्नाच्चंद्राद्वाउपचयस्थाःसौम्यग्रहाः भवंति तस्यान्ययोगमशुभमपिकेमद्रुमादिफलमन

भिन्नेदराशमेवफलभुक्तत्वेनप्राबल्येनभवतीति ९ इतिश्रीमहेशसूनुविरचितायांबृहज्जातकविवृतौचन्द्रयोगाध्यायस्त्रयोदशः समाप्तः १३
अथद्विग्रहयोगाध्यायोव्याख्यायते तत्रादित्येनचन्द्रादिभिःकेनजातस्यस्वरूपशार्दूलविक्रीडितेनाह तिग्मांशुरिति तिग्मांशुरादित्यःउपेशेनचन्द्रमसासहितोयुक्तः
उपायज्ञैः उपायपटुः उपेशः रात्रिनाथः नरंमनुष्ययन्त्राश्मकारंजनयति यन्त्राणिसहस्रघातिप्रभृतीन्यश्मनः पाषाणाः तत्क्रियासुतत्कर्मसुनिरतं सक्त-
करोति एवंभौमेनसहैकराशिगतोरविः घरतपापासक्तंजनयति बुधेनक्रियासुनिपुणंसूक्ष्मदृष्टिंधीकीर्तिसौख्यान्वितं धीर्बुद्धिः कीर्तिः यशः सौ
ख्यंसुखंतस्यभावः एतैरन्वितंसंयुक्तंवाक्पतिनागुरुणाक्रूरंविषमस्वभावमन्यकार्यनिरतंपरकर्मतत्परं जनयति शुक्रेणरंगायुधैः रंगावतरण

अथाद्विग्रहयोगाध्यायप्रारम्भः तिग्मांशुर्जनयत्युपेशसहितोयन्त्राश्मकारंनरं भौमेनाघरतंबुधेननिपुणंधीः
कीर्तिसौख्यान्वितं क्रूरंवाक्पतिनान्यकार्यनिरतंशुक्रेणरंगायुधैर्लब्धस्वंरविजेनधातुकुशलंभाण्डप्रकारंतथा १

क्रियया मल्लादिकया आयुधैः खड्गादिभिःलब्धस्वंप्रात्तार्थंजनयति रविजेनशनैश्चरेणधातुप्रतापनाद्युत्पत्तिभूतिकसुवर्णगैरिकादयस्तुधातवःतेषुकुशलंदक्षं
उपकारेषुसाधुप्रकारेषुकुशलं १ अथभौमादियुक्तेन्दुजातस्यस्वरूपंशार्दूलविक्रीडितेनाह कूटेति कूटपण्यद्रव्याणांप्रतिरूपक्रियारः ॥ ४ ॥
पण्यनारीविक्रयक आसवपण्यपालविक्रयक कुंभपण्यपरविक्रयक अशिवं अश्रेयस्करं मातुर्जनन्याःएवंविधंशशीचन्द्रमासपत्नोपत्नेणारकेणकु
जेनजनयति सन्नृपति प्रसृतवाक्यं प्रियपदं अर्थनिपुणमर्थेषुसूक्ष्मदृष्टिंसौम्येनसर्वजनवल्लभेनकीर्त्यायशसान्वितंसंयुक्तं सन्नोबुधसहितःश
शीनरंजनयति विक्रांतराजजेतारं कुलप्रख्यंवंशप्रधानं अस्थिरमतिंचपलचित्तंपरधनस्वामिनं सागिरा अंगिरसागुरुणासंयुक्तः शशीनरं

नयति वस्त्राणांक्रियादिकुशलंतंतुवायः आदिग्रहणात्सोवनरंजनक्रयविक्रयेष्वपिकुशलंससितः शुक्रेणसंयुक्तः शशीनरंजनयति द्विः संस्कृतापुनर्भूः तस्याः सुतपुत्रंसार्किः अर्किणाशनैश्चरेणयुक्तः शशीनरंजनयति पुनर्भूलक्षणं परिणीतापतिंहित्वासवर्णंकामतःश्रयेत् अक्षतावक्षतावैवपुनर्भूःसंस्कृतापुनः २ अथांगारकेबुधादियुक्तेजातस्यस्वरूपंस्रग्धरयाह मूलादीति ससोम्येभूमिजेबुधयुक्तेंगारकेजातोवणिग्भवति सचवणिङ्मूलादिभिः व्यवहरतिमूलादीनिमूलपुष्पवल्कलसारफलानि स्नेहास्तैलादयः एतैर्व्यवहरति कूटैश्चद्रव्यप्रतिरूपैः कृत्रिमैर्व्यवहरति बाहुयोद्धानियु-

कूटस्थ्यासवकुंभपण्यमशिवंमातुःसवक्रःशशीसज्ञःप्रसूतवाक्यमर्थनिपुणंसोभाग्यकीर्त्यान्वितं विक्रांतंकुलमुख्यम स्थिरमतिंवित्तेश्वरंसांगिरावस्त्राणांससितःक्रियादिकुशलंसार्किःपुनर्भूसुतं २ मूलादिस्नेहकूटैर्व्यवहरतिवणिग्बाहुयोद्धासस़ोम्यःपुर्यध्यक्षःसजीवेभवतिनरपतिःप्रासविद्याद्विजोवा गोपोमल्लोथदक्षःपरयुवतिरतोद्यूतकृत्सासुरेज्येदुःखार्तोसत्यसंधःससवितृतनयेभूमिजेनिंदितश्च ३

द्धकुशलश्चभवति एवंविधःससोम्येसोम्येनबुधेनयुक्तेभूमिजेजातोभवति पुर्यध्यक्षः नगराधिकृतः पुरिअध्यक्षःपुर्यध्यक्षः स्वामीअथवानरपतिः राजाभवति अथवाद्विजोब्राह्मणः प्रासवित्तोलब्धधनः केचित्प्रासविद्यइति पठंति सजीवेगुरुसंयुक्तेभौमेजातोभवति गोपःगोपालकः मल्लः बाहुयोद्धा अथशब्दःपादपूरणे दक्षःचतुरः परयुवतिरतः परस्त्रीसक्तः द्यूतकृत्कितवः सासुरेज्ये असुरैरीज्यः असुरेज्यः तेनअसुरेज्येनशुक्रेणयुक्तेभूमिजेजातएवंविधोभवति दुःखार्तः दुःखपीडितः असत्यसंधः असत्येनसंधाप्रतिज्ञायस्य अनृतभाषीनिंदितः कुत्सितोसूययायुक्तः ससवितृतनये सवितृतनयेनसौरेणयुक्तेभूमिजेजातोभवति ३ ७ ७

अथबुधे जीवादियुक्ते जीवेन गुरुणादियुक्ते जातस्यस्वरूपं शार्दूलविक्रीडितेनाह सौम्येरंगचरइति रंगचरोमल्लादिकः गीतप्रियः गीतवल्लभः नृत्तविन्नृत्तज्ञः एवंविधः सौम्येबुधे बृहस्पतिनायुक्ते जातो भवति प्रशस्तावाग्यस्य सवाग्मी स्वनक्रियया परमत्यायनसमर्थः भूगणपः भुवश्चगणानांसंघानामधिपति एवंविधो बुधे सितेन शुक्रेण सहित जातो भवति मायापटुः परवञ्चनदक्षः लघकः कुत्सनातिकामी एवंविधो मृदुना शनैश्चरेण सहिते बुधे जातो भवति सद्विद्यइति सद्विद्यः शोभनविद्यः धनदारवान् वित्तकलत्रसंयुक्तः बहुगुणः प्रभूतगुणैः शौर्यादिभिर्युक्तः एवंविधो गुरौ जीवे शुक्रेण युक्तो जातो भवति श्मश्रुकरो नापितः अथवा घटकृत्कुम्भकारः अथवान्नकारः सूपकारः एवंविधोऽसितेन सौरेण युक्ते गुरौ जातो ज्ञेयो विज्ञातव्यः ४ अथशुक्रशनैश्चर

सौम्येरंगचरो बृहस्पतियुते गीतप्रियो नृत्यविद्वाग्मी भूगणपः सितेन मृदुना मायापटुर्लंघकः सद्विद्यो धनदा
रधान्यबहुगुणः शुक्रेण युक्ते गुरौ ज्ञेयः श्मश्रुकरोऽसितेन घटकृज्जातोऽन्नकारोऽपिवा ४

युक्ते जातस्य स्वरूपं निग्रहयोगफलं पुष्पिताग्रयाह असितइति अल्पचक्षुरल्पदृष्टिः युवतिसमाश्रयेण स्त्रीसंश्रयणेन सम्यक्प्रवृद्धवित्त धनयस्य सयुवतिसमाश्रयसंप्रवृद्धवित्तः लिपिरक्षरविन्यासः पुस्तकलेखकर्म चित्रमालेख्यं एषांवेत्ता तज्ज्ञ एवंविधः असितासितसमागमे शनैश्चरस्यशुक्रेण संयोगे जातः पुरुष एवंविधो भवति यदिराशिद्वये द्वौ ग्रहयोगौ भवतः तच्च द्विग्रहयोगद्वयस्यापि फलंवक्तव्यं अथराशित्रये द्विग्रहयोगं भवति तदा द्विग्रहयोगत्रयस्यापि फलंवाच्यं कथितफलैरिति द्वाभ्यां परतोऽपरैः त्र्यन्यैर्यदा यदैकगता भवति तदा कथितफलैरु ह्यैरेव विकल्पनीयाः तदा द्विग्रहयोगत्रयस्य फलं वाच्यम् यथर्कचंद्रभौमा एकराशिस्था भवति तदार्कचंद्रयोगे यस्तंठमुक्तः यन्मारित्यागारक्रय

फलंयच्च चंद्रांगारकयोगेफलंतत्फलत्रयमपिवाच्यम् एवंयथासंभवमन्यत्रापिग्रहत्रयस्यैकराशिगतस्यफलंवक्तव्यं यद्येकराशौद्विग्रहयोगोऽन्यत्रत्रिग्रह योगोवाभवतस्तदासर्वाणिफलानिवाच्यानीति ५ इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौद्विग्रहयोगाऽध्यायश्चतुर्दशःसमाप्तः १४ अथा-तोप्रव्रज्यायोगाऽध्यायोव्याख्यायते तत्रादावेवचतुरादिभिरेकस्थैः ग्रहैःजातस्यप्रव्रज्यायोगंशार्दूलविक्रीडितेनाह एकस्थैरिति एकस्मिन्यत्र तत्रराशौचतुरादयोग्रहाभवंति चत्वारःपंचषट्सप्तवाभवंति तैरेकस्थैश्चतुरादिभिः बलयुतैःवीर्यवद्भिः माहेयादिभिःजाताःसंभूताःशाक्यादि

असितसितसमागमेल्पचक्षुर्युवतिसमाश्रयसंप्रवृद्धवित्तः भवतिचलिपिपुस्तचित्रवेत्ताकथितफलैःप
रतोविकल्पनीयाः ५ इतिद्विग्रहयोगाऽध्यायःसमाप्तः १४ अथप्रव्रज्यायोगाऽध्यायप्रारंभः
एकस्थैश्चतुरादिभिर्बलयुतैर्जाताःपृथग्वीर्यगैःशाक्याजीविकभिक्षुवृद्धचरकानिर्ग्रंथवान्याशनाः माहे
यज्ञगुरुक्षपाकरसितप्राभाकरीनैःक्रमात्प्रव्रज्याबलिभिःसमाःपरजितैस्तत्स्वामिभिः प्रच्युतिः १

काःप्रव्राजकाःभवंति किंतुचतुरादिभिः बलयुतैरेकाप्रव्रज्याभवति तदर्थमाह पृथग्वीर्यगैः तैश्चबलिभिः वीर्यगैःसबलैःपृथक्पृथक्प्रव्रज्याभवंति एतदुक्तंभवति चतुरादीनामेकस्थानामध्याद्यद्येकोबलवान्भवति तदाजातस्यैकेवप्रव्रज्याभवति अथचतुरादीनामेकस्थानांमध्यान्नकश्चिद्बलीभवति तदाजातस्यप्रव्रज्यानभवति अथद्वौबलिनौभवतस्तदाजातस्यप्रव्रज्याद्वयमेवभवति यदाबहवोबलिनस्तदाबह्व्यःप्रव्रज्याभवंति एवमेकस्थैश्चतुरादिभिर्बलयुतैःजाताःप्रव्रज्याभाजोभवंति यस्मादुक्तं प्रव्रज्याबलिभिःसमाःताश्चपृथग्वीर्यगैःमाहेयादिभिःभौमाद्यैःशाक्याद्याःभवंति

मोतिपरिपालयति ऊनबलस्यमनाङ्नामोतिपालयति पराजितैस्तत्स्वामिभिः प्रच्युतिरिति शाक्यादिप्रव्रज्यास्वामिभिर्ग्रहैः पराजितैरन्यैर्ग्रहैः युद्धे
विजितैः प्रच्युतिः प्रव्रज्यात्यागः तत्प्रव्रज्यांगृहीत्वापुनस्त्यजति एतदुक्तंभवति चतुरादीनांमध्याद्यद्येकोबलवान्भवति सचग्रहयुद्धेजातककालेन
पराजितस्तदाप्रव्रज्यागृहीत्वापुनस्त्यजति त्यक्त्वाचप्रव्रज्यामनाश्रित्यैवतिष्ठति अथचतुरादीनांमध्याद्द्वौबहवोवाबलिनोभवंति तेचपराजिता
स्तदाअन्यस्यसर्वाभ्यः प्रव्रज्याभ्यः च्युतिःभवति यस्माद्बलवद्ग्रहसंख्यास्तेनप्रव्रज्याः कर्तव्याः अंत्यप्रव्रज्याधिपतिर्यदन्येनग्रहेणजितोनभ
वति तदातामेवप्रव्रज्यामाश्रितोम्रियते अथप्रव्रज्यादायकोग्रहएकएवजितोनभवति तदायावज्जीवंतामेवप्रव्रज्यामाश्रयति अथद्वौग्रहौप्रव्र
ज्यादायकौतौचापराजितौ तदाप्रथमप्रव्रज्यादायकांतर्दशायांप्रथमांप्रव्रज्यांगृहीत्वातामेवाश्रित्यतावत्तिष्ठति यावद्द्वितीयप्रव्रज्यादायकग्रहांत
र्दशाप्रवेशः तत्रप्रथमांत्यक्त्वाद्वितीयामाश्रयति एवंबहुषुप्रव्रज्यासुसंभवेयोज्यं अत्रचसत्याचार्यः तेष्वधिकबलीजीवस्त्रिदंडिनंभार्गवश्चरक्तमु
ख्यं नग्नश्रमणंसौरोबुधस्तदाजीविकाचार्यम् इंदुश्रावकमिंदुर्दिवाकरस्तापसंतपोयुक्तं वृक्षः शाक्यःश्रवणंक्षत्राश्रयजगुणाश्चैतान् वीर्येपि
तेल्पबलानावदीक्षिताभक्तिवादिनस्तेषां अन्यैःपराजितश्चेत्प्रव्रज्याप्रच्युतिंकुर्यात् यावंतोवीर्ययुताःप्रव्रज्याभवंतितावत्यः एकर्क्षगेषुनि-
र्गमात्तेषामाद्याबलोपेतात् १ अथास्तमितान्यजितान्यदृष्टानांग्रहाणामपवादंवैतालीयेनाह रविलुप्तकरैरिति चतुरादीनामेकस्थानांम-
ध्याद्यावंतोग्रहाबलिनस्तावंतः स्वप्रव्रज्यादायकास्तत्रापिबलिनांमध्येयावंतोरविलुप्तकराः सूर्यमंडलगाअस्तमिताभवंति तेऽदीक्षिताजा
ताभवंति तावंतःस्वकीयाः प्रव्रज्यानप्रयच्छंतीत्यर्थः किंतुजातानराः तद्भक्तभक्तयः तद्गतानांतत्प्रव्रज्याप्रविष्टानांमध्येभक्ताभवंति अत्र
विलुप्तकरत्वमुदयास्तमयंगणयित्वाऽन्वेष्यम् शुक्रगुरुज्ञार्किकुजाः कलांशैर्दशत्तरोत्तरैः नवभिर्दृश्यादृश्याद्यकर्मणारवेः द्वादशभिरिंदुरि-

त्येवमादिकर्मणिहन्ते कदाचिदादित्येनसहैकराशिगतो गतैरपि नास्तमितोभवति कदाचित्द्वितीयराशिस्थोप्यस्तमितोभवति एवमुदयास्तम भ-
न्वेष्यास्तमितफलवाच्य अभियाचितमात्रदीक्षिताइति बलिभिरित्यनुवर्तते बलिभिर्निहतै ग्रहयुद्धेन्यग्रहविजितैरन्यैश्चग्रहैर्निरीक्षितैः ये
अभियाचितमात्रदीक्षिताः दीक्षाप्रार्थनपराभवंति नचताप्राप्नुवंति पूर्वमुक्तपराजितैस्तत्स्वामिभिः प्रच्युतिरित्यस्यायमपवादः तेनैतदु
क्तं बलीयद्यो ग्रहयुद्धेन्येनविजितोभवति नकेनचिद्दृश्यते तदा तत्प्रव्रज्यागृहीत्वापुनस्त्यजति अथबलीभवः सम्भोगश्चेनग्रहेणविजित
स्त्वन्येनचदृश्यते तदाप्रव्रज्याप्रार्थ्यमानोपिनप्राप्नोति यस्यचप्रव्रज्याप्रच्युतिः जातातस्यतदवसानेबहुम्यतदसास्कवारवशाद्यस्मिन्न

रविलुप्तकरैरदीक्षिताबलिभिस्तद्गतभक्तयोनरा
अभियाचितमात्रदीक्षितानिहतैरन्यनिरीक्षितैरपि २

दशाकालबलवान्भविष्यतितस्मिन्कालेप्रव्रज्यादास्यति तयान्वेक्त दीक्षादानसमर्थोयोभवतितदाबलेनसंयुक्तः तस्यैवदशाकालेदीक्षाल
भतेनरोधस्य यस्यचदीक्षाच्यवनतस्यैवदशावसानेस्यात् एवजातककालेसर्वनित्यफलाफलंवाच्यं २ अथचतुरादिभिरेकस्थैर्विना-
प्रव्रज्यायोगमालिन्याह जन्मेशइति जन्मनियस्मिन्राशौचन्द्रः स्थितस्तस्ययोधिपतिर्ग्रह सजन्मेशः सचयद्यन्यैर्ग्रहैरदृष्टोनावलो
कितः नकेनचिद्ग्रहेणदृश्यते तथाभूतोसावर्कपुत्रशनैश्चरंपश्यति तदाजातस्यप्रव्रज्याभवति साचशनैश्चरकृताशनैश्चरजन्मेशयोः यो
बलवांस्तदीयातद्दशाकाले उक्तंच यस्येशातर्कपुत्रजन्मभनाथोग्रहैर्नेक्षितः तस्यहिदीक्षालाभातबलयोगाद्दशाकालेप्रव्रज्यार्किरिति प्र

थवार्कि. सौरः सबलोजन्मराश्यधिपंबलोनंवीर्यरहितपश्यति तथापिशनैश्चरोक्तप्रव्रज्यांवदति उक्तंच शनिदृष्टेबलिहीनेजन्मनिनाथेवदेच्चनिर्ग्रंथंदी-
क्षांप्राप्नोतीति यत्रतत्रराशौचंद्रेशशिन्यार्किद्रेष्काणसंस्थेसौरद्रेष्काणव्यवस्थितेन केवलंयावद्भौमार्क्यंशेकुजसौरयोरन्यतमनवांशकस्थेतस्मिंश्च
सर्वग्रहादृष्टेशनैश्चरेणेक्षमाणेदीक्षांप्राप्नोति शनैश्चरोक्तेप्रव्रज्यांव्रजति तथाच सौरद्रेष्काणसंस्थोयदिभवतिशशीतदंशसंस्थश्चचक्राशेवादृष्टः
सौरेणतुसर्वदर्शनविमुक्तः निर्ग्रंथसंज्ञोयोर्कपुत्रवीर्यानुसारेणजन्माधिपतिः पापैरपिनिरीक्षितस्त्वेकईक्षितेसौरः यस्यपुरुषस्यमूर्तौनियतादीक्षिता
भवति यस्यजन्माधिपतिविबलंनिरीक्षितयस्यसूर्यजोबलः सोपिखलुभाग्यहीनःप्रव्रज्यांप्राप्नुयाज्जातःमांदेकोजेवाशेशशीस्थितःकृष्णजेद्रेष्काणे

जन्मेशोन्यैर्यद्यदृष्टोर्कपुत्रंपश्यत्यार्किर्जन्मपंवाबलोनम्
दीक्षांप्राप्नोत्यार्किदृक्काणसंस्थेभौमार्क्यंशेसौरदृष्टेचचंद्रे ३

वा अंशाधिपानुरूपेकालेदीक्षाप्रदोभवति अत्रयोगत्रयेपिपूर्वपदादनुवर्तनीयः ३ अथयेनयोगेनजातःशास्त्रकरोभवति येनचराजापिदीक्षितोभव
ति तद्योगद्वयंमालिन्याह सुरगुरुरिति सुरगुरुःजीवः शशीचंद्रः होरालग्नं एतासुस्फुरगुरुशशिहोरासु आर्किणाशनैश्चरेणदृष्टासुअवलोकितासु
धर्मेनवमेस्थानेगुरुःजीवोयदिभवति अथशब्द.पादपूरणे नृपतीनायोगजःकश्चिद्राजयोगोजातस्यभवति तदासपुरुषःतीर्थकृच्छास्त्रकृत्स्यात्कुर्वन् कृ
णादबुद्धपांचशिखवराहमिहिरब्रह्मगुप्तप्रतिमइति सुरगुरुशशिहोरास्विति धन्विमीनकर्कटलग्नेकेश्चिद्व्याख्यातं तच्चायुक्तं यस्मान्मांडव्यःगतेमंदालो
कंगुरुशशिविलग्नेनवमगेगुरौनिष्पद्यतेनइहनृपयोगेनृपतयःविजृंभंतेयेषांलरहरचनारंभसुभगाजगत्यांयेविहगुणकथनपाषाणसदृशाः तथाचोक्तं

अथऋक्षशीलाध्यायोव्याख्यायते ऋक्षंनक्षत्रंराशिश्च तत्रादावेवचंद्रभुज्यमाननक्षत्रशीलंभवति तत्राश्विनीभरण्योःजातयोःशीलविज्ञानमा र्ययाह प्रियभूषणइति प्रियभूषणः अलंकरणवल्लभः सुरूपः शोभनरूपः वपुष्मान्सुभगःसर्वजनप्रिय दक्षःसर्वकार्यकरणपटुः मतिमान् बुद्धियुक्तः एवंविधोश्विनीषुजातोभवति तारकापेक्षयात्रसर्वत्रबहुवचननिर्देशः कृतः कृतनिश्चयइति कृतनिश्चयः प्रारब्धानांकर्मणामंतगःसत्यःसत्यवाक् अरुक् निरुजः दक्षः चतुरः सुखितःदुःखनिर्मुक्तः एवंविधोभरणीषुजातोभवति १ अथकृत्तिकारोहिण्योर्जातस्यस्वरूपमार्ययाह बहुभुक् प्रभूताहारः परदाररतः परस्त्रीष्वासक्तः तेजस्वीअसहिष्णुःविख्यातःसर्वत्रप्रसिद्धकीर्तिः एवंविधः कृत्तिकासुजातोभवति सत्यः अवितथभाषी

अथऋक्षशीलाध्यायः प्रियभूषणःसुरूपःसुभगोदक्षोश्विनीषुमतिमांश्च कृतनिश्चय
सत्यारुग्दक्षःसुखितश्चभरणीषु १ बहुभुक्परदाररतस्तेजस्वीकृत्तिकासुविख्यातः
रोहिण्यांसत्यशुचिःप्रियंवदःस्थिरमतिःसुरूपश्च २

शुचिःपरस्वाद्यलुब्धः शास्त्रोक्तशौचानुष्ठाता प्रियंवदःमधुरवाक् स्थिरमतिः एकमतिः सुरूपश्चवपुष्मान् एवंविधःरोहिण्यांजातोभवतीति २ अथमृगशीर्षार्द्रयोःजातस्यस्वरूपमार्ययाह चपलइति चपलः क्रियास्वनवस्थितः चतुरःदक्षःभीरुःभयानकःपटुःप्रवक्ता उत्साहीसोद्यमः धनीवित्तवान् भोगीचसंभोगशीलः एवंविधोमृगेमृगशिरसिजातोभवति शठःपरकार्यविमुखःउक्तंचग्रंथांतरेशठलक्षणं मनसा वचसायश्चदृश्यतेकार्यतत्परः कर्मणाविपरीतश्चसशठःसद्भिरीर्यते गर्वितः मानीकृतघ्नःखलः कृतमुपकृतंहंतियः सकृतघ्नः हिंस्रः वध

क्रः पापः पापकर्मकर्ता एवंविधोरौद्रर्क्षेआर्द्रायांजातोभवतीति ३ अथपुनर्वसौजातस्यस्वरूपमार्ययाह दांतःशमपर तपः क्लेशसहः सुखीसु
खित सुशीलः शोभनशीलःविनयवान् दुर्मेधाजडप्रायः रोगभाक् पीडितदेहःपिपासुः तृषार्तः अल्पेनस्तोकेनैवार्थेनसंतुष्टः एवंविधोमनुजो
मनुष्यः पुनर्वसौजायतेउत्पद्यते ४ अथपुष्याश्लेषयोःजातस्यस्वरूपमार्ययाह शांतात्माइति शांतात्माशमदमपरोजितेंद्रियःसुभगःसर्वज
नप्रिय पंडितःशास्त्रार्थवित् धनीवित्तवान् धर्मसंसक्त धर्मनिरतःएवंविधःपुष्यजोभवति शठःपरकार्यविमुखः सर्वभक्ष संचयनशीलः पा

चपलश्चतुरोभीरुःपटुरुत्साहीधनीमृगेभोगी शठगर्वितःकृतघ्नोहिंस्रःपापश्चरौद्रर्क्षे ३
दांतःसुखीसुशीलोदुर्मेधारोगभाक्पिपासुश्च अल्पेनचसंतुष्टःपुनर्वसौजायतेमनुजः ४
शांतात्मासुभगःपंडितोधनीधर्मसंसृतःपुष्ये शठःसर्वभक्षपापःकृतघ्नधूर्तश्चभौजंगे ५
बहुभृत्यधनोभोगीसुरपितृभक्तोमहोद्यमःपित्र्ये प्रियवाग्दाताद्युतिमानटनोनृपसेवकोभाग्ये ६

पः पापकर्मरतः कृतघ्नः कृतमुपकृतंहंतिसकृतघ्नः धूर्तःपरवंचनदक्ष एवंविधोभौजंगे आश्लेषायांजातोभवति ५ अथमघापूर्वाफाल्गुन्योः
जातस्यस्वरूपमार्ययाह बहुभृत्यइति बहुभृत्यधनः प्रभूतपरिवारवित्तान्वितः भोगीभोगान्वितः सुरपितृभक्तःदेवानांपितॄणांचभक्तः महो
द्यमः महोत्साही एवंविधः पित्र्येमघायांजातोभवति प्रियवाक् अभिमतवक्ता दातादानशीलः द्युतिमान्स्फूर्तिः अटनःपरिभ्रमणशीलःनृ
पसेवकः राजसेवानुरतः एवंविधोभाग्येपूर्वाफाल्गुन्यांजातोभवति ६ ५ ५ ५ ५

अथोत्तराफाल्गुनीहस्तयोर्जातस्यस्वरूपमार्ययाह सुभगइति सुभगः सर्वजनप्रियः विद्यासधनः विद्ययाआसंधनंयेन भोगीभोगान्वितः सुखभाक् दुःखरहितः एवंविधोद्वितीयफाल्गुन्यांउत्तराफाल्गुन्यांजातोभवति उत्साहीसोद्यमः धृष्टः प्रतिभायुक्तः निर्लज्जोवापानपः पानप्रियः आसवानुरक्तः आघृणीनिर्दयः तस्करः चोरः एवंविधोहस्तेजातोभवति ७ अथचित्रास्वात्योर्जातस्यस्वरूपमार्ययाह चित्रांबरमाल्यधरः चित्राणिनानाप्रकाराणि अंबराणिवस्त्राणिमाल्यानिचधारयति सुलोचनांगः शोभनानेत्रावयवायस्य एवंविधः चित्रायांजातोभवति दांतोविनयान्वितः जितेंद्रियः

सुभगोविद्यासधनोभोगीसुखभाक्द्वितीयफाल्गुन्यां उत्साहीधृष्टःपानपोघृणीतस्करोहस्ते ७
चित्रांबरमाल्यधरःसुलोचनांगश्चभवतिचित्रायां दांतोवणिक्कृपालुःप्रियवाग्धर्माश्रितःस्वातौ ८
ईर्ष्युर्लुब्धोद्युतिमान्वचनपटुःकलहकृद्विशाखासु आढ्योविदेशवासीक्षुधालुरटनोऽनुराधासु ९

वणिक्क्रयविक्रयज्ञः कृपालुः दयालुः केचित्तृषालुरितिपठंति तृषालुः तृषांनसहते प्रियवाक् अभिमतवक्ता धर्माश्रितः धर्मरतः एवंविधः स्वातौजातोभवति ८ अथविशाखानुराधयोर्जातस्यस्वरूपमार्ययाह ईर्ष्युरिति ईर्ष्युः परर्द्धिमत्सरी लुब्धः लोभाभिभूतः द्युतिमान्सुकांतिः वचनपटुः संभाषणदक्षः केचिदर्थपटुरितिपठंति अर्थार्जनेपटुः प्रवीणः कलहकृद्विरोधशीलः एवंविधोविशाखासुजातोभवति आढ्यः ईश्वरः विदेशवासी परदेशनिवसनशीलः क्षुधालुः क्षुधांनसहते अटनः परिभ्रमणशीलः एवंविधोऽनुराधासुजातोभवति ९ ७ ७

अथज्येष्ठामूलयोर्जातस्यस्वरूपमार्ययाह नवहुमित्र स्वल्पसुहृत् सतुष्टः संतोषशीलः धर्मकृत्धर्मानुरतः प्रचुरकोप अतिक्रोधी एवंविधोज्येष्ठासु
तोभवति मानीगर्वितः धनवान्प्रभूतवित्तः सुखीसुखितः नोहिंस्रः सौम्यप्रकृति परविघातनकरोति स्थिरःएकमति भोगीभोगान्वितः एवंविधो
जाताभवति १० अथपूर्वोत्तराषाढयोर्जातस्यस्वरूपमार्ययाह इष्टानदकलत्रः इष्टोभिमतः सुलभः आनंदकरः तुष्टिकरः कलत्रभार्यायस्य मानी
र्विता हृदसौहृदः स्थिरसुहृत् एवंविधोजलदेवेपूर्वाषाढायांजातोभवति विनीतःविनयसंयुक्तः धार्मिकः धर्मज्ञः बहुमित्र प्रभूतसुहृत् कृतज्ञःभ

ज्येष्ठासुनबहुमित्रःसंतुष्टोधर्मकृत्प्रचुरकोपः मूलेमानीधनवान्सुखीनहिंस्रःस्थिरोभोगी १०
इष्टानंदकलत्रोमानीदृढसौहृदश्चजलदेवे वैश्वेविनीतधार्मिकबहुमित्रकृतज्ञसुभगश्च ११
श्रीमान्श्रवणेश्रुतवानुदारदारोधनान्वितःख्यातः दाताआढ्यःशूरोगीतप्रियोधनिष्ठासुधनलुब्धः १२

सुपकारशीलः सुभगश्चसर्वजनप्रियः एवंविधोवैश्वदेवे उत्तराषाढायांजातोभवति ११ अथश्रवणधनिष्ठयोर्जातस्यस्वरूपमार्ययाह
श्रीमान्श्रियासुक्तः श्रुतवान्पंडितः उदारदारः शोभनस्त्रीकः धनान्वितःवित्तवान् ख्यातःजनविदितकीर्तिः एवंविधः श्रवणेजातोभवति दाता
दानशीलः आढ्यःईश्वरः शूरः रणप्रियः गीतप्रियः गीतवल्लभः धनलुब्धः अर्थरुचिः एवंविधोधनिष्ठासुजातोभवति १२ अथश
भिषक्पूर्वाभाद्रपदयोर्जातस्यस्वरूपमार्ययाह स्फुटवाक्निपुणभाषी सत्यवादी व्यसनीस्त्र्यादि[illegible]हृतः रिपुहाशत्रुघातकः साह

सिकः असमीक्षितकार्यकृत् दुर्ग्राह्यः दुराध्यः एवंविधः शतभिषजिजातोभवति उद्विग्नः दुःखितमनाः स्त्रीजितः स्त्रीभिरभिभूतः धनीधनवा
न् अथवास्त्रियाजितधनंयस्यपटुः प्रवक्ता अथवा धनपटुः धनार्जनेचतुरः अदाताकदर्यः एवंविधः पूर्वाभाद्रपदासुजातोभवति १३ अथोत्त
राभाद्रपदारेवत्योर्जातस्यस्वरूपमार्ययाह वक्तावचनपटुः संभाषणेदक्षः सुखीविद्यमानसुखः प्रजावान्बहुपुत्रपौत्रः जितशत्रुःजितारिःधार्मि
कः धर्मशीलः एवंविधोद्वितीयासूत्तराभाद्रपदासुजातोभवति संपूर्णांगः परिपूर्णावयवः सुभगः सर्वजनप्रियः शूरः संग्रामधीरः शुचिः पर

स्फुटवाग्व्यसनीरिपुहासाहसिकःशतभिषजिदुर्ग्राह्यः भाद्रपदासूद्विग्नःस्त्रीजितधनीपटुरदाताच १३
वक्तासुखीप्रजावान्जितशत्रुर्धार्मिकोद्वितीयासु संपूर्णांगःसुभगःशूरःशुचिरर्थवान्पौष्णे १४
इतिश्रीभट्टोत्पलविरचितायां बृ० नक्षत्रशीलाऽध्यायः समाप्तः १६ ❀ ❀

धनादिष्वलुब्धः अर्थवान् धनान्वितः एवंविधःपौष्णेरेवत्यांजातोभवति एतेयथोक्तानक्षत्रस्वभावाश्चंद्रस्य सबलत्वात्परिपूर्णाभवंति १४ इ
तिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौनक्षत्रशीलाऽध्यायः १६ अथातोराशिशीलाध्यायोव्याख्यायते अथमेषस्थचंद्रमसिजातस्य
स्वरूपंशार्दूलविक्रीडितेनाह वृत्तेति वृत्तेपरिवर्तुले आताम्रे लोहितवर्णेदृशौचक्षुषीयस्यसवृत्तताम्रदृक् परिवर्तुललोहितनेत्रः उष्णांशाक
लघुचस्वल्पंभुंक्ते सउष्णशाकलघुभुक् उष्णभोजीशाकभोजीलघुभोजी क्षिप्रप्रसादः आश्वेवप्रसीदति अटनः परिभ्रमणशीलः कामीसुरतमि

या दुर्बलगात्रः निर्मलजयासधि अस्थिरधनः अतिरक्तमूरू रणप्रियः अगनावल्लभः स्त्रीप्रियः अगनानावल्लभोअगनावल्लभायस्येतिवा सेवाप्ताः परराधनकुशलाः कुनखःकुत्सितनखः व्रणांकितशिराः सच्छिद्रमूर्द्धामानीगर्वितः सहोत्थाग्रजः सहोत्थानासहजातानामग्रणीर्गणप्रधान पाणितले- हस्ततलेशस्त्यान्निन्हविशेषेणांकितः निष्ठुरः अतिचपलः क्रियास्तनवस्थितः तोयेनजलेभीरु सभयः एवंविधः क्रियेमेषस्थितेचन्द्रमसिजातोभवति १ अथवृषस्थेचन्द्रमसिजातस्यस्वरूपंशार्दूलविक्रीडितेनाह कांतइति कांतः दर्शनीयः खेलगति सविलासगामी पृथूरुवदनः पृथूविस्तीर्णा-

अथराशिशीलाध्यायारंभः वृत्तात्ताम्रदृग्ध्रुणाशाकलघुभुक्क्षिप्रप्रसादोटनः कामीदुर्बलजानुरस्थिरधनः शूरोगना वल्लभः सेवाप्तः कुनखीव्रणांकितशिरामानीसहोत्थाग्रजः शस्त्यापाणितलेंकितोऽतिचपलस्तोयेचभीरुः क्रियं १ कांताखेलगतिः पृथूरुवदनः पृष्ठास्यपार्श्वांकितस्त्यागीक्लेशसहः प्रभुःककुद्वान्कन्याप्रजः श्लेष्मलः पूर्वैर्बंधुधनात्म- जैर्विरहितः सौभाग्ययुक्तः क्षमीदीप्ताग्निः प्रमदाप्रियः स्थिरसुहृन्मध्यांतसौख्योगवि २

रूरूवदनमुखयस्य पृष्ठपश्चिमभागः आस्यवक्त्रपार्श्वेप्रसिद्धे एषामन्यतमस्थानेचिन्हांकितः त्यागीदाताक्लेशसहः कदर्थनासमर्थः प्रभुरप्र- तिहताज्ञः ककुद्वान् ककुदसंयुक्तः कन्याप्रजायस्यस्त्रीजनकः श्लेष्मलः कफाधिकः पूर्वैःप्रथमैः बंधुभिः कुटुंबैः धनैःवित्तैः आत्मजैःपुत्रैश्चविरहि- तः वियुक्तः सौभाग्ययुक्तः सर्वजनवल्लभः क्षमीक्षमावान् सहिष्णुरित्यर्थः दीप्ताग्निः बहुभोजी प्रमदाप्रियः स्त्रीवल्लभः स्थिरसुहृत् दृढमित्रः मध्यांत सौख्याः मध्येयौवनेत्वंतेस्वत्वेनसुखिताः अर्थादेववाल्येदुःखितः एवंविधोगविवृषस्थेचन्द्रेजातोभवति २

अथमिथुनस्थेचंद्रमसिजातस्यस्वरूपंशार्दूलविक्रीडितेनाह स्त्रीलोलइति स्त्रीलोलः स्त्रीष्वभिलाषकरः सुरतोपचारकुशलः सुरतोपचारेसुरतक मणिकामशास्त्रेषुकुशल शिक्षितः ताम्रेक्षणः लोहितनेत्रः शास्त्रविच्छास्त्रज्ञः पंडितः दूतः परेच्छयागमनागमनशीलः कुंचितमूर्द्धजः कुटिलशिरो रुहः पटुमतिश्चतुरधीः अतीवप्राज्ञः हास्यमुपहासं इंगितंपरचित्तज्ञानं द्यूतएतानिवेत्तिजानाति चार्वंगः शोभनावयवः प्रियवागभिमतवक्ता प्रभ क्षणारुचिः बहुभुक् गीतप्रियः गीतरतिः नृत्यविन्नृत्तज्ञः क्लीबैःषंढैः सहरतियातिगच्छति समुन्नतनसउच्चनसः एवंविधश्चंद्रेतृतीयक्षेत्रेतृतीयराशौन

स्त्रीलोलःसुरतोपचारकुशलस्ताम्रेक्षणःशास्त्रविद्दूतःकुंचितमूर्द्धजःपटुमतिर्हास्येंगितद्यूतवित् चार्वंगःप्रियवाक्प्रभक्षण रुचिर्गीतप्रियोनृत्यविक्लीबैर्यातिरतिसमुन्नतनसश्चंद्रेतृतीयक्षेत्रे ३ आवक्रद्रुतगःसमुन्नतकटिःस्त्रीनिर्जितःसत्सुहृद्दैवज्ञः प्रचुरालयःक्षयधनैःसंयुज्यतेचंद्रवत् ह्रस्वःपीनगलःसमेतिचवशंसाम्नासुहृद्वत्सलस्तोयोद्यानरतःस्ववेश्मसहितेजातःशशांकेनरः ४

स्थितेमिथुनगेजातोभवतीत्यर्थः ३ अथकर्कटस्थेचंद्रमसिजातस्यस्वरूपंशार्दूलविक्रीडितेनाह आवक्रेति आवक्रंकुटिलंद्रुतंसत्वरंगच्छतीतिआ वक्रद्रुतगः कुटिलसत्वरगामीसमुन्नतकटिः उच्चजघनःस्त्रीनिर्जितःप्रमदाजितः सत्सुहृच्छोभनमित्रः दैवज्ञःज्योतिःशास्त्रार्थवेत्ता प्रचुरालयः प्रभूत गृहकर्ताक्षयधनैरपचयोपचयैश्चंद्रवच्छशीवत्संयुज्यते कदाचिद्धिधनइत्यर्थः चंद्रक्षयवृद्धिवत् ह्रस्वःअदीर्घःपीनगलःमांसलकंठः साम्नाप्रीत्यावशं वश्यतांसमेतियाति सुहृद्वत्सलः मित्रवल्लभः तोयोद्यानरतःजलोपवनसक्तःतोयेनजलेनउपवनेनचरतः एवंविधःस्ववेश्मसहितेकर्कटस्थेशशांकेचंद्रे

अथतुलास्थेचंद्रमसिजातस्यस्वरूपंशार्दूलविक्रीडितेनाह देवेति देवब्राह्मणसाधुपूजनरतः देवानांसुराणांब्राह्मणानांद्विजानांसाधूनांसज्जनानांच पूजनेरतः सक्तः प्राज्ञः मेधावी अत्रमेधाबुद्धिः प्रज्ञालक्षणं अतीतानुस्मृतिर्मेधाबुद्धिस्तत्कालग्राहिणी शुभाशुभविचारज्ञाप्रज्ञाधीरिरुदाहृता शुचिः परधनाद्यलुब्धः श्रोत्रियोवा स्त्रीजितः योषितांवशगः प्रांशुरत्युच्चः उन्नतनासिकः अत्युन्नतनासः कृशश्चपलगात्रः दुर्बलशिथिलावयवः कृशंदु र्बलंचपलंबनहीनंगात्रंशरीरंयस्य अटनः परिभ्रमणशीलः अर्थान्वितः सधनः हीनांगः अपरिपूर्णावयवः क्रयेषुविक्रयेषुचकुशलः शक्तः देवद्विनामा

क्रीडामंथरचारुवीक्षणगतिःस्त्रस्तांसबाहुःसुखीश्लक्ष्णःसत्यरतःकलासुनिपुणःशास्त्रार्थविद्धार्मिकः
मेधावीसुरतप्रियःपरगृहेवित्तैश्चसंयुज्यतेकन्याप्रायापरदेशगःप्रियवचाःकन्याप्रजोल्पात्मजः ६
देवब्राह्मणसाधुपूजनरतःप्राज्ञःशुचिःस्त्रीजितःप्रांशुश्चोन्नतनासिकःकृशचलद्गात्रोटनोर्थान्वितः
हीनांगःक्रयविक्रयेषुकुशलोदेवद्विनामासरुग्बंधूनामुपकारकृद्विरुषितस्त्यक्तस्तुलेःससमे ७

सप्रथ्यपर्यायद्वितीयाभिधानः द्वितीयनामदेवाख्यंचास्यभवति सरुक्पीडितदेहः बंधूनांस्वकुटुंबानामुपकारकृद्धितकारीतैश्चबंधुभिः विरुषितः भर्त्सितः पराभूतःत्यक्तःत्याजितश्चएवंविधः ससमेतुलास्थेचंद्रमसिजातोभवति ७ अथवृश्चिकस्थेचंद्रमसिजातस्यस्वरूपंमालिन्याह पृथुलेति पृथुलनयनवक्षाःपृथुलेविस्तीर्णेनयनेनेत्रेवक्षउरोयस्य वृत्तेपरिवर्तुलेजंघेऊरूजानुनीचयस्य जनकैः मातृपितृभिः गुरुभिश्चोपदेशकारिभिः गौरवयुक्तैश्चवियुक्तोरहितः शैशवेबाल्येव्याधितः पीडितः नरपतिकुलेराज्ञांवंशेपूज्यः आराध्यः पिंगलः क्रूरचेष्टः विषमस्वभावः झषकु-

लिशरवगाकः प्रपोपीनः कुलिशवज्रखगः पक्षी एतैर्मत्स्यवज्रपक्षिसमानैरंकैश्चिह्नैरंकितश्चिन्हित छन्नपापः गुप्तापक्रमकृत् एवंविधो लि-
निरश्मिकस्थेन्दुर्जातो भवति ८ अथ धनुर्धरस्थे चन्द्रे जातस्य स्वरूपं शार्दूलविक्रीडितेनाह व्यादीर्घास्येति व्यादीर्घास्यशिरोधरः व्यादीर्घम
तिदीर्घमास्यं मुखं शिरोधरा ग्रीवा च यस्य पितृधन जनकवित्तान्वितः त्यागी दाता कविः काव्यज्ञः वीर्यवान्बली वक्ता स्पष्टभाषणे दक्षः स्थूलरद
श्रवाधरनसः स्थूला महत्प्रमाणा रदा दंताः श्रवणौ कर्णौ अधर ओष्ठ नसः नासिका घ्राणः एते सर्वे एव स्थूला यस्य कर्मोद्यतः सर्वकार्याणां

पृथुलनयनवक्षाः सत्तजंघोरुजानुर्जनकगुरुवियुक्तः शैशवेव्याधितश्च नरपतिकुलपूज्यः पिंगलः
क्रूरचेष्टो झषकुलिशखगांकश्छन्नपापोब्जजातः ८ व्यादीर्घास्यशिरोधरः पितृधनस्त्यागी कविर्वी
र्यवान्वक्तास्थूलरदश्रवाधरनसः कर्मोद्यतः शिल्पवित् कुब्जांसः कुनखी समांसलभुज प्रागल्भ्य
वान्धर्मविद्बन्धुद्विट्न बलात्समेति च वशं सामैकसाध्योश्वजः ९

प्रयमशीलः शिल्पवित् शिल्पज्ञः लिपिपुस्तकचित्रज्ञः कुब्जांसः असपृष्टस्कंधः कुनखी कुत्सितनख समांसलभुजः पीनबाहुः प्रागल्भ्यवान् प्र
तिभाप्रतिभायुक्तः धर्मवित् धर्मज्ञ बंधुद्विट् बंधूनामप्रीतिभाक् हठात् बलात् हठादाक्रमणादसविधेयतां वशं वश्यतां न समेति नायाति सा
मामीत्या एकेनैव गुणेन साध्यः स्वीक्रियते एवंविधोश्वजो धनुषि स्थिते चन्द्रे जातो भवति ९ अथ मकरस्थे चन्द्रे जातस्य स्वरूपं शार्दूलविक्रीडिते
नाह निरपलालयतीति नित्यं लालयति स्वदारतनयान् स्वकलत्रतनयान्पुत्रान् लालयति आराधयति प्रीत्या भजते धर्मध्वजः दांभिकः

मिथ्याधार्मिकः अधःकृशः अधोभागादतिदुर्बलः स्वस्रः शोभननेत्रः क्षामकटिः कृशजघनः गृहीतवचनः उक्तग्रहकः यदुच्यतेतत्सकृदेवगृह्णाति सौभाग्ययुक्तः सर्वजनप्रियः अलसः क्रियास्वपटुः शीतालुः शीतंनसहते अटनः परिभ्रमणशीलः सत्वाधिकः उदारचेष्टः बलाधिकोवा काव्यकृत् विद्वान् लुब्धः लोभाभिभूतः अगम्यास्वगमनीयासुनिकृष्टजातिषुजरदंगनासु वृद्धस्त्रीषुनिरतः संसक्तः संत्यक्तलज्जः विमुक्तव्रीडः अघृणः निर्दयः एवंविधोमनुजोमनुष्योमकरस्थेचंद्रमसिजातोभवति १० अथकुंभस्थेचंद्रेजातस्यस्वरूपंश्लोकेनाह करभगलइति करभगलः उष्ट्रसमग्रीवः

नित्यंलालयतिस्वदारतनयान्धर्मध्वजोधःकृशःस्वस्रःक्षामकटिर्गृहीतवचनःसौभाग्ययुक्तोलसः
शीतालुर्मनुजोऽटनश्चमकरेसत्वाधिकःकाव्यकृल्लुब्धोगम्यजरांगनासुनिरतःसंत्यक्तलज्जोघृणः १०
करभगलःशिरालुःखरलोमशदीर्घतनुःपृथुचरणोरुपृष्ठजघनास्यकटिर्जठरः परवनितार्थपा
पनिरतःक्षयवृद्धियुतःप्रियकुसुमानुलेपनसुहृत् घटजोध्वसहः ११ छ छ

शिरालुः शिरासंततः खराकर्कशालोमानियस्यान्यथालोमशादीर्घाऽत्युच्चातनुः शरीरंयस्य पृथूविस्तीर्णौचरणौपादौतथाऊरूजानूपरिभागौपृष्ठंदेहपश्चिमभागोजघनं नितंबस्थानमास्यंमुखंकटिश्चबस्तिः यस्यसः पृथुचरणोरुपृष्ठजघनास्यकटिः तथाजठरः मूर्खः परवनितासुपरस्त्रीषुपरार्थेषुपापेचनिरतः सक्तः क्षयवृद्धियुतः उपचयापचयैर्युक्तः प्रियकुसुमानुलेपनसुहृत् कुसुमानिपुष्पाणिअनुलेपनंसमालंभनंसुहृदोमित्राणिप्रियाणियस्य अध्वसहः पथिक्षमः एवंविधोघटजः कुंभस्थेचंद्रमसिजातोभवति ११ छ छ छ

अथमीनस्थेचंद्रमसिजातस्यस्वरूपमालिन्याह जलपरधनभोक्तेति जलपरधनभोक्ता जलधनानामुदकोत्पन्नवित्तानामुक्ताफलानां क्रयविक्रयजा तानापरधनानांच भोक्ता स्वामी दारपासोनुरक्तः दारेषुकलत्रेषुविषयेषुवासस्यावस्त्राभरणाचानुरक्त समरुचिरशरीरः समतुल्यसर्वावयवपरिपूर्णारुचिरदीप्तिमच्छरीरयस्य तुंगनासा अत्युच्चनासिकः बृहत्कः विस्तीर्णपृष्ठो अभिभवतिसपत्नान् सपत्नान् शत्रून् अभिभवति पराभवति स्त्रीजितः प्रमदावशगः चारुदृष्टिः शोभनाक्षः द्युतिनिधिधनभोगी द्युतिः कीर्तिः निधिः भूमावधः स्थापितमर्थं निधिशब्देनोच्यते धनवित्त एषांभोगीभोक्ता पंडितश्चशास्त्रार्थवित् एवंविधात्यराशौमीनस्थेचंद्रमसिजातोभवति १२ अथोक्तराशिस्वरूपमपवादत्वममरविलसितेनाह बलवति

जलपरधनभोक्तादारपासोनुरक्तः समरुचिरशरीरस्तुंगनासोबृहत्कः अभिभवतिसपत्नान्स्त्रीजितश्चारुदृष्टिर्द्युतिनिधिधनभोगीपंडितश्चांत्यराशौ १२

राशाविति पुरुषस्यजन्मसमयेयस्मिन्राशौचंद्रमाव्यवस्थितस्तस्मिन्बलवतिसबलेतथातस्यचराशेर्योधिपतिस्तस्मिंस्तदधिपतौच बलवति तथातुहिनांशुश्चंद्रमास्तच यदिस्वबलेनात्मीयेनवीर्येणपूर्वोक्तेनसंयुतोन्वितःस्यात्भवेत् एवमेतेषुत्रिषुयदिसबलत्वंभवतेतदा यथोक्तराशिस्वरूपजाता पुरुषोभवति यतउक्त कथितफलानामविकलदातेति अनयासामग्र्याचंद्रः कथितफलानाउक्तस्वरूपाणामविकलानांपरिपूर्णानां दाताभवति एषामध्याद्द्वयोर्बलवतोर्मध्येयुक्तस्वरूपमाप्नोति एकस्मिन्बलवतिहीनंकिंचित् नकस्मिंश्चिदपिबलवतितदुक्तस्वरूपनकिंचिद्भवति शशिवदितरेन्ये अतोस्माच्चंद्रादन्येपरिशिष्टाग्रहाः रविभौमज्ञगुरुसितसौराः शशिवच्चंद्रवत् परिकल्प्याः यद्यद्राशौस्थितास्तद्भवंति तत्स्वरूपेण

वक्ष्यमाणंस्वरूपंदास्यंति तदपिचंद्रवत् एतदुक्तंभवति बलवतिराशौतदधिपतौच बलवतियस्यग्रहस्यराशिस्वरूपंपठ्यते तस्मिन्नपि बलवतितदधिपतौचसंपूर्णंतत्पठितंराशिस्वरूपंभवति यद्येकयोश्चबलवतोर्मध्यमोनमितिनकस्मिंश्चिद्बलवति नैतत्किंचिदिति चंद्रराशिस्वभावइति १३ इतिबृहज्जातकेराशिशीलश्चंद्रस्यससदशोऽध्यायः १७ अथमेषवृषगतेर्कजातस्यस्वरूपमौपच्छंदसिकेनाह प्रथितः प्रख्यातः चतुरः दक्षः अटनः परिभ्रमणशीलः अल्पवित्तः स्तोकार्थः आयुधभृत् शस्त्रधारणजीवी एवंविधः क्रियगेमेषस्थेभानावादित्येजातोभवति एतच्च

बलवतिराशौतदधिपतौचस्वबलयुतःस्याद्यदितुहिनांशुः कथितफलानामविकलदाताशशिवदतोन्येप्यनुपरिचिंत्याः १३ इतिबृहज्जा० राशिशीलाऽध्यायः १७ प्रथितश्चतुरोटनोल्पवित्तःक्रियगेत्वायुधभृद्वितुंगभागे गविवस्त्रस्रुगंधपण्यजीवीवनिताद्विट्कुशलश्चगेयवाद्ये १

फलंवितुंगभागेयदितत्रैवमेषस्थः आदित्यःपरमोच्चस्थोभवति तुंगभागंपरमोच्चंवर्जयित्वा अन्यत्रस्थितेर्केचैतत्फलंदोषभाग्जातोभवति तद्यथा अल्पवित्तोबहुवित्तोभवति अटनोनभवति आयुधभृन्नभवति तस्यान्येआयुधभृतोनुयायिनोभवति अन्येतुपुनः पूर्वोक्तागुणाः प्रथितश्चतुरोभवति गवीत्यादि वस्त्रैरंबरैः स्रुगंधद्रव्यैः पुण्यैश्चजीवति वनिताद्विट् स्त्रीषुद्वेष्टा गेयेगीतेवाद्येच वादनविधौकुशलः शिक्षितः एवंविधोगविवृषस्थेसूर्येजातोभवति १ अथमिथुनकर्कसिंहकन्यास्थेसूर्येजातस्यस्वरूपंशार्दूलविक्रीडितेनाह विद्याज्योतिषवित्तवान् वि

धनवान् स्तोकार्थः लुब्ध लोभाभिभूतः अन्यभाग्यैरतः परकीयैर्भाग्यैः वित्तादिभिःरतः परार्थोपकारभोक्ता एवंविधोमृगेमकरस्थेर्कैजातोभवति
३ अथकुंभमीनगतेर्केजातस्यस्वरूपंचंद्रार्कयोरेकराशिगतयोस्तुलक्ष्मज्ञानंवसंततिलकेनाह नीचइति नीचः कुलानुचिताधमकर्मकृत् तन
यैः पुत्रैः भाग्यैश्चपरिच्युतः त्यक्तः पुत्रैः जनवाल्लभ्येनचविरहितः अस्वःनिर्धनः एवंविधोघटेकुंभस्थेर्केजातोभवति तोयोत्थंजलोत्पन्नंमुक्ताफ
लादिनातत्पण्येनतद्विक्रयेणविभवमैश्वर्यंयस्य वनिताहृतःस्त्रीपूज्यः एवंविधोंत्येमीनस्थेर्केजातोभवति नक्षत्रमानवतनुरित्यादि नक्षत्रमान

जातस्तौलिनिशौंडिकोध्वनिरतोहैरण्यकोनीचकृत्क्रूरःसाहसिकोविषार्जितधनःशस्त्रांतगो
लिस्थिते सत्पूज्योधनवान्धनुर्धरगतेतीक्ष्णोभिषक्कारुकोनीचोऽज्ञःकुवणिग्मृगेल्पधनवां
लुब्धोन्यभाग्यैरतः ३ नीचोघटेतनयभाग्यपरिच्युतोस्वस्तोयोत्थपण्यविभवोवनिताहृतों
त्ये नक्षत्रमानवतनुःप्रतिमेविभागेलक्ष्मादिशेत्तुहिनरश्मिदिनेशयुक्ते ४

वकोराशिपुरुषः कालांगानीत्यादिनाप्रदर्शितः तुहिनरश्मिश्चंद्रः दिनेशआदित्यः एतौसमेतौयस्मिन्राशौस्थितौ सराशिनक्षत्रपुरुषस्ययस्मिन्नंगे
स्थितस्तत्रपुरुषस्यजातस्यलक्ष्मचिन्हमशकादिसमादिशेत् वदेत् यथामेषस्थयोःशिरसि वृषस्थयोः मुखइत्येवमूह्यम् आदित्यराशिस्वभावः
४ अथमेषवृश्चिकवृषतुलस्थेकुजेजातस्यस्वरूपंत्रोटकेनाह नरपतिसत्कृतः राजपूजितः अटनः परिभ्रमणशीलः चमूपः सेनापतिः वणिक्
क्रयविक्रयज्ञः सधनः वित्तान्वितः क्षततनुः विक्षतदेहः व्रणितशरीरः चौरस्तस्करः भूरिविषयः विप्रकीर्णेंद्रियः एवंविधान्स्वगृहेमेषवृश्चिकस्थः

कुजः भौमः जनयेत् युवतिजितः स्त्रीविधेयः सुहृत्सु मित्रेषु विषमः दुर्विधेयः सक्रूरस्वभावः परदाररतः परयोषितिप्रसक्तः कुहकज्ञः ऐन्द्रजालिकः सुरे
पः शोभनालंकारः भीरुःसभयः परुषः कर्कशः निःस्नेहः एवंविधान्गुणान् सितभे शुक्रक्षेत्रे वृषे तुले च स्थितो भौमो जनयेदुत्पादयेत् ५ अथमिथुन
कन्याकर्कस्थे भौमे जातस्य स्वरूपं वसन्ततिलकेनाह अथमिथुनकन्यागते भौमे जातस्य स्वरूपमाह बौधेति असहः तेजस्वी तनयवान् पुत्रयुक्तः
विसृजत् मित्ररहितः कृतज्ञः परोपकारशीलः गान्धर्वयुद्धकुशलः गान्धर्वगीतयुद्धेन सग्रामे प्रवेशनिर्गमव्यूहरचनादियुद्धकुशलः तज्ज्ञः कृपणः अभ-

नरपतिसत्कृतोटनश्च भूपपूणिकृसधनाः सततनुश्चौरभूरिविषयाश्च कुज स्वगृहे युवतिजितान् सुहृत्सु विष
मान् परदाररतान् कुहकान् सुवपुषो भीरुपरुषान् सितभे जनयेत् ५ बौधे सहस्तनुयवान्विसुहृत्कृतज्ञो गान्धर्वयु
द्धकुशलः कृपणोभयोयी चाद्र्यवान्सलिलयानसमर्जितस्वः आज्ञश्च भूमितनये विकलः स्खलश्च ६

ताभयः निर्भयः अर्थयाश्चापरः एवंविधो बौधे मिथुन कन्यास्थे कुजे भौमे जातो भवति अथकर्कटस्थे भौमे जातस्य स्वरूपमाह चाद्रेति
अर्थवान् सधनः सलिलयानसमर्जितस्वः सलिलयानेन प्रवाहिनासम्यगार्जितस्वधनं येन अथवा सलिलेन जलेन यानेन गमनेनाध्वना समर्जितस्वं
धनं येन प्राज्ञः मेधावी विकलोगहीनः खलः दुर्जनः एवंविधश्चाद्रे कर्कटगते भौमे जातो भवति ६ ५ ५ ५

अथसिंहधन्विमीनकुंभमकरस्थे भौमेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह निःस्वइति निःस्वःनिर्धनःक्लेशसहः आपद्धीरः कदर्थनाक्षमः वनांतरचरः अरण्यमध्यचारी केचिदभयोवनचरइतिपठंति अभयोभयरहितः वनांतरचरोऽरण्यचारी अल्पदारात्मजोल्पकलत्रः अल्पापत्यः एवंविधःसिंहस्थेभौमेजातोभवति अनेकरिपुःबह्वारिः नरेंद्रसचिवःमंत्रीख्यातःविदितकीर्तिः अभयःनिर्भयः अल्पात्मजःस्वल्पापत्यः एवंविधोधन्विमीनस्थेभौमेजातोभवति दुःखार्तःनित्यंदुःखसंतप्तः विधनःदरिद्रः अटनःपरिभ्रमणशीलः अनृतरतः असत्यभाषी तीक्ष्णःनिरपेक्षःक्रूरः एवंविधःकुंभस्थेभौमेजातोभवति भूरिधनात्मजःप्रभूतधनप्रभूतपुत्रः भूपःराजा अथवातत्समःराजतुल्यः एवंविधोमृगगतेमकरस्थेभौमेजातोभवति ७

निःस्वःक्लेशसहोवनांतरचरःसिंहेल्पदारात्मजोजेवेनेकरिपुर्नरेंद्रसचिवःख्यातोभयोल्पात्मजः दुःखार्तोविधनोऽटनोनृतरतस्तीक्ष्णश्चकुंभस्थितेभौमेभूरिधनात्मजोमृगगतेभूपोथवातत्समः ७ द्यूतर्णपानरतनास्तिकचौरनिःस्वाःकुस्त्रीककूटकृदसत्यरताःकुजर्क्षे आचार्यभूरिसुतदारधनार्जनेष्टाःशौक्रेवदान्यगुरुभक्तिरताश्चसौम्ये ८

अथमेषवृश्चिकतुलवृषगतेबुधेजातस्यस्वरूपंवसंततिलकेनाह द्यूतेति द्यूतेऽक्षज्ञानेऋणेपरस्वहरणेपानेचनिरतःसक्तःनास्तिकःशास्त्रार्थादपेतःतार्किकःनास्तिपरलोकेमतिर्यस्यसनास्तिकः चौरस्तस्करःनिःस्वोदरिद्रःकुस्त्रीकःकुत्सितभार्यःकूटकृत्कूटकर्तादांभिकःअसत्यनिरतःअनृतभाषी एवंविधाजाताःसौम्येबुधेभौमर्क्षेमेषवृश्चिकस्थेभवंति आचार्येत्यादि आचार्यःउपदेशकर्ताभूरिसुतःप्रभूतापत्यःभूरिदारोबहुकलत्रःधनार्जनेष्टःधनार्जनमिष्टंयस्य अर्थार्जनेनित्यमुद्यतःवदान्यःदाता गुरुभक्तिरताःमातृपितृगुरूणांभक्ताःएवंविधाः

पुरुषः शोकेयुपतुलस्येबुधेजाताभवति ८ अथमिथुनकर्कस्थेबुधेजातस्यस्वरूपमुपेद्रवज्रयाह विकत्थनइति विकत्थनः वाचालः असत्य
वादी शास्त्रकलाविदग्धः शास्त्रेकलासुचगीतवाद्यनृत्यलेपचित्रकर्मसुविदग्ध शिक्षितः प्रियवदोभिमतवक्ता सौख्यरतः सुखासक्त एवविध
शशांकजेबुधे तृतीयेमिथुनस्थेजातोभवति जलार्जितइति जलार्जितस्व जलेनोदकेनार्जितस्वंधनंयेनसः केचिद्बलार्जितस्वइति बलेनवीर्येणार्जित
स्वधनयेन स्वजनस्यात्मीयजनस्यचबंधुजनस्यशत्रुःरिपुः एवविधः शशाकजेबुधेशीतकरस्येन्दुराशौकर्कस्थे तेजातोभवति ९ अथसिंहकन्या

विकत्थन शास्त्रकलाविदग्ध प्रियवद सौख्यरतस्तृतीये जलार्जितस्व स्वजनस्यशत्रु शशाकजेशीतकर
संयुक्ते ९ स्त्रीद्वेष्याविधनसुखात्मजोटनोज्ञःस्त्रीलोल स्वपरिभवोर्कराशिगेज्ञे त्यागीज्ञ भृत्युरगुण
सुखीक्षमावान्युक्तिज्ञोविगतभयश्चषष्ठराशौ १०

गतेबुधेजातस्यस्वरूपमहर्षिण्याह स्त्रीद्वेष्यइति स्त्रीणाद्वेष्यः स्त्रीद्वेष्यः विधनसुखात्मज विधनोधनरहित विसुखः विगतसुखः वि
तात्मजः पुत्ररहित अटन परिभ्रमणशीला अज्ञः मूर्खः स्त्रीलोलः वनिताभिलाषी स्वपरिभवः स्वेषामात्मीयानासकाशात्सपरिभवोयस्य एवविधो
नेबुधे केराशिगेसिंहस्थे जातोभवति त्यागीदाता ज्ञ पंडितः भृत्युरगुणः प्रभूतगुणैर्युतः गुणाः विद्याशौर्यादयः सुखीसुखितः क्षमावान्सहि-
ष्णुः युक्तिज्ञः प्रयोगवेत्ता विगतभयः निर्भयः एवविधः षष्ठराशौकन्यास्थेबुधेजातोभवति १० ५ ६ ७

अथमकरधन्विमीनगतेबुधेजातस्यस्वरूपमौपच्छंदसिकेनाह परकर्मकृदिति परकर्मकृत् परप्रेष्यकरः अस्वः दरिद्रः शिल्पबुद्धिः शिल्पकर्मस्वनुरतमतिः ऋणवान् परस्वग्रहणशीलः विष्टिकरः आज्ञाकरः एवंविधोर्कजर्क्षेमकरकुंभस्थेबुधेजातोभवति नृपसत्कृतः राजपूजितः नृपसंमतोवा राजवल्लभः पंडितः विद्वान् आप्तवाक्यः व्यवहारार्थवेत्ता आप्तमनुकूलंवाक्यंयस्य एवंविधोनवमेधन्विस्थितेबुधेजातोभवति जितसेवकः जितासेवकायेन पराराधनदक्षः पराभिप्रायज्ञः अंत्यशिल्पः एवंविधोंत्येमीनस्थेबुधेजातोभवति इतिबुधराशिस्वभावः ११ अथमेषवृश्चिकवृषतुलमिथुनकन्या

परकर्मकृदस्वःशिल्पबुद्धिर्ऋणवान्विष्टिकरोबुधेर्कजर्क्षे नृपसत्कृतपंडितासवाक्योनवमेंत्येजितसे
वकांत्यशिल्पः ११ सेनानीबहुवित्तदारतनयोदाताऽसुभृत्यःक्षमीतेजोदारगुणान्वितःसुरगुरोख्यातः
पुमान्कौजभे कल्पांगःसधनार्थमित्रतनयस्त्यागीप्रियःशौक्रभेबौधेभूरिपरिच्छदात्मजसुहृत्साचि
व्ययुक्तःसुखी १२

गतेजीवेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह सेनानीति सेनानीसेनानायकः बहुवित्तः प्रभूतधनः बहुदारः प्रभूतकलत्रः बहुतनयः प्रभूतापत्यः दातादानशीलः सुभृत्यः शोभनभृत्यः क्षमीक्षमावान् तेजसाकांत्यादारगुणैः कलत्रसौख्यैरन्वितोयुक्तः ख्यातः प्रख्यातकीर्तिः एवंविधः सुरगुरोजीवेकौजेकुजभे भौमक्षेत्रेमेषवृश्चिकस्थेजातोभवति कल्पांगः स्वस्थदेहः सधनार्थः सधनः समित्रःसुहृत् सतनयः पुत्रान्वितः सुखधनमित्रपुत्रयुक्तः त्यागीदाता प्रियःसर्वजनवल्लभः एवंविधः शौक्रभे शुक्रक्षेत्रस्थे वृषतुलस्थेजीवेजातोभवति बौधेत्यादि भूरिपरिच्छदः बहुवस्त्रगृहपरिवारः भूर्यात्मजः बहुपुत्रः भूरिसुहृत् प्रभूतमित्रः साचिव्येमंत्रित्वेनियुक्तः सचिवस्यभावः

सान्निध्यस्त्रीसुरिता एवंविधोजीवेबुधसेमेमिथुनकन्यास्थेजीवेजातोभवति १२ अथकर्कटसिंहधन्विमीनकुंभमकरस्थेजीवेजातस्यस्वरूप
शार्दूलविक्रीडितेनाह चाद्रइति रत्नानिमणयः कृता पुत्राः स्वधनदाराः कलत्रविभवऐश्वर्यं प्रज्ञामेधासत्वसारस्वभावः एतैरन्वितः संयुक्त एवं
विधः चाद्रेनद्रसेवेकर्कटस्थेसुरगुरौजीवेजातोभवति बलनायकः सेनाप्रधानः अन्यच्चयच्चाद्रभेकर्कटस्येउक्तम् रत्नकृतस्वदारविभव प्रज्ञा
सत्वैरन्वितः एवंविधः सिंहस्थेजीवेस्याद्भवेत् मांडलिकः मंडलाधिपतिः सेनानायकोवा अथवाधनीवित्तवान् एवंविधः स्वर्क्षस्वराशौधन्विमीन
स्थेजीवेजातोभवति यानिकर्कटस्थेजीवेफलान्यभिहितानि रत्नकृतस्वदारविभवः प्रज्ञासत्वैरन्वितइत्येतानिकुंभस्थेगुरौभवति अथान्येन

चाद्रेरत्नकृतस्वदारविभव प्रज्ञासत्वैरन्वितः सिंहेस्याद्बलनायकः सुरगुरौप्रोक्तंचयच्चंद्रभे स्वर्क्षेमांडलिकोनरेंद्रसचिवः से
नापतिर्वाधनीकुंभेकर्कटवत्फलानिमकरेनीचोल्पवित्तोसुखी १२ परयुवतिरतस्तदर्थवादैर्हृतविभवःकुलपासनःकुजर्क्षे स्वब
लमतिधनोनरेंद्रपूज्यःस्वजनविभुःप्रथितोभयःसितर्क्षे १५ सहमतभेदः तेनानिष्टफलमभिहितं तथान्वनीचःकुंभेजनयति कर्मणितो
पाश्रयेसक्तनीचः कुलानुचिताधमकर्मसक्त् अल्पवित्ता स्तोकार्थः असुखीदुःखित एवंविधोमकरस्थेजीवेजातोभवति इतिबृहस्पतिराशिस्वभावः॥
अथशुक्रराशिः भयमपशुभिकरपतुलगतेशुक्रेजातस्यस्वरूपंपुष्पिताग्रयाह परयुवतिरतः परस्त्रीषुसक्तः तदर्थवादैस्तासां परस्त्रीणामर्थवादैरपराध
नेनहृतविभवोपहृतार्थः कुलपासनः कुलकलंकभूतः एवंविधः सितेशुक्रेकुजर्क्षेभौमक्षेत्रेमेषवृश्चिकस्थेजातोभवति स्वबलेत्यादि स्वबलेनात्मीयवी
र्येणमत्याआत्मीयबुध्याचधनंयस्यासौस्वबलमतिधनः नरेंद्रपूज्यः राजपरस्तुभः स्वजनविभुः बंधुप्रधानः प्रथितः विख्यातः अभयः निर्भयः एवंविध

स्वेस्वक्षेत्रेवृषतुलास्थेसितेशुक्रेजातोभवति १४ अथमिथुनकन्यामकरकुंभस्थेशुक्रेजातस्यस्वरूपमौपच्छंदसिकेनाह नृपकृत्यकरः राजकर्मकर्ता
अर्थवान्धनी कलावित् कलाज्ञः गीतवाद्यादिकवेत्ता एवंविधोमरारिपूज्येदैत्यगुरौशुक्रेमिथुनस्थेजातोभवति षष्ठगतेकन्यास्थेशुक्रेऽतिनीचकर्मा एक
कार्यकरोजातोभवति सुभगः सर्वजनप्रियः स्त्रीविजितः प्रमदावशगः कुनार्याकुत्सितस्त्रियारतः सक्तः एवंविधः शुक्रेरविजर्क्षगतेमकरकुंभस्थेजातो-
भवति १५ अथकर्कटसिंहधन्विमीनस्थेशुक्रेजातस्यस्वरूपंशिखरिण्याह द्विभार्यः द्विस्त्रीकः अर्थीयाञ्चापरः भीरुः सभयः प्रवरमदोतिहसः प्र-

नृपकृत्यकरोर्थवान्कलाविन्मिथुनेषष्ठगतेतिनीचकर्मा रविजर्क्षगतेमरारिपूज्येसुभगःस्त्रीविजितोरतःकुनार्यां १५ द्विभा
र्योर्थीभीरुःप्रबलमदशोकश्चशशिभेहरौयोषासार्थःप्रवरयुवतिर्मंदतनयः गुणैःपूज्यःसस्वस्तुरगसहितेदानवगुरौझषेवि
द्वानाढ्योनृपजनितपूजोतिसुभगः १६

वरशोकोतिदुःखितः एवंविधोदानवगुरौदैत्यपूज्येशुक्रेशशिभेकर्कटस्थेजातोभवति यो
षासार्थः स्त्रीप्राप्तधनः प्रवरयुवतिः प्रधानस्त्रीकः मंदतनयः अल्पापत्यः एवंविधोहरौसिंहस्थेशुक्रेजातोभवति गुणैःपूज्यः मान्यःसस्वःसध
नः एवंविधस्तुरगसहितेधन्विस्थेदानवगुरौशुक्रेजातोभवति विद्वान्पंडितः आढ्यः ईश्वरः नृपजनितपूजः नृपेणराज्ञाजनितोत्पादितापूजाऽर्हणंय
स्य अतिसुभगः सर्वजनानामतिवल्लभः एवंविधोझषेमीनस्थेशुक्रेजातोभवति इतिशुक्रराशिस्वभावः १६ अथशनिः अथमेषवृश्चि
कमिथुनकन्यागतेसौरेजातस्यस्वरूपंवसंततिलकेनाह मूर्खोऽज्ञानोपेतः अटनः परिभ्रमणशीलः कृपटवान् दांभिकः विसुहृत् मित्ररहितः

एवंविधोयमेसौरे अजेयेपस्थेजातोभवति यथयथभाक् यथोवधनवयस्ताडनवधवधीभजते चपलः क्रियासनवस्थितः अघृणः निर्दयः एवंविधः कौ
टेशृभिरुस्थजातोभवति निर्ह्रीसुखार्ततनयः निर्गताह्रीर्लज्जायस्यसनिर्लज्जः निःसुखोदुःखितः निरर्थोदरिद्रः निस्तनयः पुत्ररहितः लेख्ये आलेख्य
कर्मणिस्खलितः भक्तः रसापतिर्भवत्यारक्षिकः मुख्यपतिः प्रधाननाथः एवंविधोधीधनुधसेत्रेमिथुनकन्यास्थेसौरेजातोभवति १७ अथ
वृषतुलाकर्कटसिंहस्थेसौरेजातस्यस्वरूपंमदाभ्रातयाह वन्यास्वगम्यासुस्त्रीषुयोषित्सुदृष्टः वल्लभः नवहुविभवः नप्रभूतैश्वर्ययुक्त भ

मूर्खोदनःकपटवान्विसुहृद्यमेजेकीटेतुयधवधभाक्चपलोघृणश्च निर्ह्रीसुखार्थतनयस्स्वलितश्चलेख्येर
क्षापतिर्भवतिमुख्यपतिश्चधोधे १७ वर्ज्यस्त्रीष्टानवहुविभवोभूरिभार्योवृषस्थेख्यातस्त्वोच्चेगणपुरवलग्रा
मपूज्योर्थवांश्च कर्किण्यस्त्वोविकलदशनोमातृहीनोसुतोत्तःसिंहेनार्योविसुखतनयोविष्टिकृत्सूर्यपुत्रे १८

त्यैश्वर्ययुक्तः भूरिभार्यः प्रभूतदारः एवंविधोवृषस्थेसूर्यपुत्रेशनैश्चरेजातोभवति ख्यातःविदितकीर्तिः गणानांसमूहानां पुराणांनगराणां
वलानांसैन्यानांग्रामाणांनपूज्योमान्यः अर्थवान्सधनः एवंविधःस्वोच्चे आत्मीयस्त्वोच्चगोतुलास्थेसौरेजातोभवति अस्वःदरिद्रः वि
फलदशनः अल्पदतः मातृहीनः जननीवियुक्तः असुतःपुत्ररहितः अज्ञःमूर्खः एवंविधः कर्कटस्थेसौरेजातोभवति सिंहेनार्यइति अनार्यः
मूर्खः विसुखोदुःखितः वितनयः पुत्ररहितः विष्टिकृद्भारवाहकः एवंविधः सिंहस्थेसूर्यपुत्रेशनैश्चरेजातोभवति १८ ५ ५

अथधन्विमीनमकरकुंभगते सौरे जातस्य स्वरूपं शार्दूलविक्रीडितेनाह  स्वंतः शोभनोंतः पर्यंतो यस्य स स्वंतः शुभेन कर्मणा तस्य मृत्युर्भवति अथवांतेशो
भनं सत्वादिकं यस्य  नरेंद्रभवने राजगृहे प्रत्ययितः संजातप्रत्ययः ससुत्रः शोभनापत्यः सज्जायः शोभनभार्यः सधनः सहितः पुरबलग्रामाग्रनेता पुरा
णां नगराणां बलस्य सेनायाः ग्रामाणां च अग्रनेता प्रधानो नायकः एवंविधोर्कजे सौरे जीवक्षेत्रे धन्विमीनस्थे जातो भवति  अन्यस्त्रीधनसंवृतः परयो-
षिद्भिः परधनैश्च संवृतः संयुक्तः पुरबलग्रामाग्रणीः पुराणां बलानां ग्रामाणां च अग्रणीः प्रधाननायकः मंददृगल्पचक्षुः मलिनः मलोपेतः स्नानालसः स्थि
रार्थः स्थिरचित्तः स्थिरविभवः स्थिरैश्वर्यः भोक्ता असंचयशीलः एवंविधः पुमान् पुरुषः स्वक्षेत्रे मकरकुंभस्थे सौरे जातो भवति  इति शनैश्चरराशिस्व

स्वंतः प्रत्ययितो नरेंद्रभवने ससुत्रजायाधनो जीवक्षेत्रगतेर्कजे पुरबलग्रामाग्रनेताथवा  अन्यस्त्री
धनसंवृतः पुरबलग्रामाग्रणीर्मंददृक्स्वक्षेत्रे मलिनः स्थिरार्थविभवो भोक्ता च जातः पुमान् १९

भावः एतेषु सर्वेषु ग्रहराशिस्वभावेषु बलवति राशौ तदधिपतौ च तस्मिंश्च ग्रहे बलवति जातस्य यथोक्तं राशिस्वरूपं भवति  द्वयोकयोश्च बलवतोर्मध्ये समा
नमिति  न कस्मिंश्चिद्बलवति न किंचिदिति  १९  अथ मेषादिषु लग्नेषु चंद्राक्रांतराश्युक्तस्वरूपातिदेशं पुष्पिताग्रयाह  शिशिरकरश्चंद्रमास्तस्य रा
शिभिः  सह समागमे यत्स्वरूपमुक्तं वृत्तात्ताम्रदृगित्यादिकं तन्मेषलग्नजातस्यापि वक्तव्यं एवमन्येष्वपि राशिषु वृषादिषु स्थिते चंद्रमसि यदुक्तं तल्ल
ग्नजातस्यापि वक्तव्यं  यतो मुनयः सदृशफलं वदंति  कथयति स्वरूपभेदाभावात्  तथा च सत्यः मेषविलग्ने कुनखी क्रूरो षण्णाभेदकृत् स्वलितवाक्यः
पित्तानिलभूयिष्ठः कृपणोऽतिबहुव्ययश्चैव  रहितो बाल्ये गुरुभिर्मंदसुतः स्वजनसहजहितकर्ता  धर्मस्थितो विदेशोपगश्च कर्मारिभस्त्यफलं  नी

नावापिशुनापापविलग्नेमतेन्यपूर्विकाभार्या सुहृज्जनसमान्यपिमित्राणिचास्यमधुलमुपयाति शस्त्रेणवाविषैर्वामरणंपित्तोद्भवैर्विकारैर्वा स्यात्सद्गाज्ज्व-
लनाद्वावर्षाद्दुर्गतिमपतनाद्वा वृषभविलग्नेस्थूलोष्ठमहनासोमहाललाटश्च श्लेष्मानिलप्रपिबस्त्यागीबहुशोव्ययपरतश्च कन्याप्रजोल्पपुत्रःपितुर्जनन्या-
श्चदोषकृत्कुरूपः कर्मणिसततसक्तोऽपुधर्मयुक्तःधर्मभाकृत्येष नित्यकलत्रकासीशस्त्रविघातीसदास्वजनहर्ता मृत्युःशस्त्रैःपाशैर्मृगैश्चलग्नेन्यदेशेषु
देह.श्चमेजलेवामूलेवाप्यदनमिरसनेश्चैव पुरुषश्चतुष्पदेर्वाबलान्वितान्मृत्युमुपयाति पूर्वविलग्नेमिथुनेहीनाङ्गा सूयतेधिकाङ्गोवा प्रियवाग्विशिष्टकर्मा
मेघप्रकृतिर्हिजननीकः अल्पमतिरल्पकायःसतांचमहितोगुरूणांच अल्पसत्वोल्पचेष्टःपरापवादीगुणयुतश्च कर्मसुबहुष्वपिरतोधर्मसाधयतिननरा
धर्मेण मासान्सप्तमान्विविधान्दोषैस्तैस्तैश्चनाशयति वह्निप्रलीढलग्नेरोगाश्चदारुणान्जनयति व्यालाद्विपान्मृगाद्वाप्युरुरुजाहास्मृत्युमुपयाति कर्क
णिपूर्वविलग्नेनैकव्याधियुतरोगवान् भीरुः उरसिकृताभिज्ञानःकफानिलात्माहृदग्राही पापान्हितान्भजतेपरस्त्रमपिनिक्षिपद्भयेनसकृत् स्वजना-
हृतःस्वजनैर्विभत्सितात्स्थिरप्रसवः तीक्ष्णकर्मविदेशेनित्यस्तुर्दोदितःपरस्वामी असदृशदारोरिपुभिर्जितश्चपूज्यःसम्भ्रान्ता कण्ठपीडाद्रुजा
कफोदयादस्थिभञ्जनच्छेदात् देहच्छेदावयवाजलौघरान्मृत्युमाप्नोति सिंहविलग्नेकठिनःप्रियामिषःपैत्तिकोवितततनाशः बह्वारम्भकुद्वःकृपणः
स्तयसमतःस्यातःसहजविषादीस्वजनस्यघातकोविक्रमैस्त्वकैर्युक्तः अविषादीकर्मकरोविविधोपायैस्त्वधर्मिषुः भार्यांचमौलेमतेर्विद्याहिविधाः
कुलेरूपेताश्च कन्याकुजप्रवत्तुशोनान्योर्दशनेषुनाभोति मृत्युःशस्त्रैःपापैर्विषैश्चकाष्ठैरथाग्नयैश्चापि अनुजर्यासहर्तेर्दुःसुसुपयाक्कासमुपयाति पशवि
डमेधिपणाकृत्तनुरविर्दीर्घकरचरणः पित्र्यमहृतिश्चापीकृतिमेणीनार्थवान्कृपणः स्वजनस्येष्टःकन्याजननुपजोमातृभिर्विरुद्धश्च धर्मप्रियोल्पलाभः
कर्मणिनिपुणःसमाचरति विविधान्वतुष्पदगणान्स्त्रकाद्विपित्तोद्भवात्प्रोगात् शोकसंपाताद्वामृत्युमाप्नोतिपाशाद्वा ससमराशौलग्नेविषमाङ्गस्तूय

तेविषमशीलः कफवातिकःस्वचपलोह्रस्वग्रीवःकृतज्ञश्च अर्थान्विपुलान्लभतेव्ययेनसंपूज्यतेयशःप्रायः गुरुसेवायांनिरतःपितान्यजनसहजपूज्यः
अध्वरुचिर्धर्मिष्ठोविनाशमायातिपीडनैः स्वैःस्वैः मृतभार्यः कलहरुचिर्बहुशःशोकादिभिःक्लिष्टः मृत्युः ख्यातासुरुषात्स्वजनात्सौम्याच्चतुष्पदाद्वा-
पि खेदाच्चविप्रयोगादुपवासान्मार्गयोगाद्वा अष्टमराशौलग्नेविशालरज्वाननोदरःक्रूरः पित्तप्रकृतिःपिंगेक्षणोमृदुद्रुतगतिःपरस्वामी स्फीतकुटुंब-
स्वजनोंतकश्चबहुव्ययोबहुप्रसवः स्वरवर्जितोभ्रातृव्योनृपसेवीधर्महीनश्च भार्यानिमित्तविमुखीशत्रोरर्थान्नददातिबहुशश्च स्वकुलोद्भूतांश्छत्रूं-
ल्लभतेरोगांश्चनैकविधान् गात्रच्छेदैःशत्रोर्वशंगतोबंधनैःप्रहारैश्च रोगैर्वापापकृतेर्ज्वलनाद्वामृत्युमुपयाति स्थूलोष्ठदशननासानवमेलग्नेकफा-

शिशिरकरसमागमेक्षणानांसदृशफलंप्रवदंतिलग्नजातम् फलमधिकमिदंयदत्रभावाद्
वनभनाथगुणैर्विचिंतनीयाः २० इतिबृहज्जा० राशिशीला०ध्यायो० ष्टादशः समाप्तः

निलप्रकृतिः मांसलशुष्कोरुभुजः कुनखीकर्मोद्यतःशूरः क्षुद्रान्नीचान्भजतेचौर्यादनलान्नृपाच्चनष्टधनः विज्ञानानांप्रसवोबहुपूज्योभ्रातृघातरुचिः
कर्मविदेशेस्विष्टःकुरुतेवित्तानिचार्हतिनृपेभ्यः धर्मेतुमध्यमयतिदरिद्रश्चविरोधमुपयाति रोगान्वदनेलभतेच्चतुष्पदाच्चात्मनःसमाप्नोति मृत्यु-
बिलेशयाद्वानृपाच्चबंधाज्जनाद्वापि दशमविलग्नेतनुनासिकापुटोदीर्घवक्रकरचरणः वाग्म्यात्मकोमृगास्योभीरुश्चपलोथबंधनभाक् क्षुद्रकुटुं-
बोऽल्पधनःकृपणःकन्याप्रजोमृतस्वजनः सहजसमृद्धःशौर्यान्नृपादरण्याच्चलब्धधनः उपवासव्रतशीलोनीचामिषामवाप्नुयाद्भार्यां बहुविघ्नहो-

अथसिंहकन्यातुलावृश्चिकस्थेचंद्रेबुधादिदृष्टेजातस्यस्वरूपशार्दूलविक्रीडितेनाह ज्योतिरिति बुधादय बुधगुरुशुक्रशनिसूर्यभौमा हरि सिं स्त सिंहे
हरोसिंहस्थचंद्रेबुधदृष्टेज्योतिर्ज्ञः ज्योतिः शास्त्रार्थवेत्ता जीवदृष्टे आढ्यः ईश्वर शुक्रदृष्टेनरेंद्रः राजा सौरदृष्टेनापितः रविदृष्टेनृप राजा भौम
श भूपतिः एवंसिंहलग्नेपि तद्वदित्यादि तद्वद्बुधादिभिर्दृष्टेइत्यनुवर्तते सर्वत्रयष्ठेकन्यागतेचंद्रेबुधदृष्टेभूपः राजा जीवदृष्टेचमूपतिः सेनापतिः शुक्र
दृष्टेनैपुण युतः सर्वकार्येषुसूक्ष्मदृष्टिः अशुभैं सौररविभौमैर्दृष्टेस्त्र्याश्रयोभवति स्त्रियमाश्रित्यजीवतीत्यर्थ एवकन्यालग्नेपि जूकेतुलास्थे
चंद्रमसिबुधदृष्टेभूपोराजाभवति जीवदृष्टेस्वर्णकारः शुक्रदृष्टेवणिजः क्रयविक्रयज्ञः शेषाः सौरसूर्यभौमाः एते दृष्टेनेकृती निकृतः प्राणिघात

ज्योतिर्ज्ञाढ्यनरेंद्रनापितनृपक्ष्मेशाबुधाद्यैर्हरौतद्वद्भूपचमूपनैपुणयुता षष्ठेशुभैःस्त्र्याश्रय जूके
भूपसुवर्णकारवणिजःशेषैःक्षितेनैकृतीकीटेयुग्मपितानतेश्चरजकोव्यंगोधनोभूपतिः २

कः एवंतुलालग्नेपि कीटेवृश्चिकस्थेचंद्रमसिबुधदृष्टेयुग्मपितायुग्मस्यजनकः द्वयोःपिताजातोभवति जातएवयुग्मपिता द्विपितृकइतिकेचि
त्पठंति जीवदृष्टेनतः प्रह्व शुक्रदृष्टेरजकः वस्त्ररागकृत् सौरदृष्टेव्यंगोऽगहीनः सूर्यदृष्टेऽधनः दरिद्रः भौमदृष्टेभूपतिः राजा एवमेतेरे वदृष्टेवृ
श्चिकेपि २ अथधन्विमकरकुंभमीनस्थेचंद्रमसिबुधादिदृष्टेजातस्यस्वरूपशार्दूलविक्रीडितेनाह ज्ञात्युर्वीशेति तुरगोधन्वीतत्रस्थेचंद्रे
बुधदृष्टेज्ञातीशः स्वजनभर्ता जीवदृष्टेउर्वीशोराजा शुक्रदृष्टेजनाश्रयः जनानामाश्रयस्थानं पापैःशनिरविभौमैः दृष्टेसदंभः दांभिकः मिथ्या
धर्मध्वजी शठःपरकार्यविमुखश्चभवति एवधन्विलग्नेपि मृगोमकरस्तत्रस्थेचंद्रेबुधदृष्टेऽत्युर्वीशोराजाधिराजोभवति जीवदृष्टेनरेंद्रोरा

जा शुक्रदृष्टेपंडितः शनिदृष्टेधनीवित्तवान् सूर्यदृष्टेद्रव्योनः दरिद्रः भौमदृष्टेभूपोराजा एवंमकरलग्नेपि कुंभस्थेचंद्रमसि बुधदृष्टेभूपः राजाभवति जीवदृष्टेभूपसमः राजतुल्यः शुक्रदृष्टेऽन्यदारनिरतः परस्त्रीसक्तः चशब्दाच्छेषैः शनिसूर्यभौमैस्त्रिभिरप्यन्यदारनिरतएव एवंकुंभलग्नेपि झषगेमीनस्थेचंद्रमसिबुधदृष्टेहास्यज्ञः उपहासंकर्तुंजानाति जीवदृष्टेनृपतिः राजा शुक्रदृष्टेबुधः पंडितः पापाः शनिसूर्यभौमाः एतैर्दृष्टेचपापएवभवति एवंमीनलग्नेपि लग्नदृष्टिफलंचंद्रदृष्टिफलातिदेशेनोक्तं शिशिरकरसमागमेक्षणानांसदृशफलंप्रवदंतिलग्नजातमिति तत्रचंद्रमसादृष्टेलग्नेफलंनोक्तं तस्मात्तत्रोच्यतेउक्तमेवयस्मादुक्तं होरास्वामिगुरुज्ञवीक्षितयुतानान्यैश्चवीर्योत्कटाः तत्रकर्कटवर्ज्यमन्यो-

ज्ञात्युर्वीशजनाश्रयश्चतुरगोपापैःसदंभःशतश्चात्युर्वीशनरेंद्रपंडितधनीद्रव्योनभूपोमृगे
भूपोभूपसमान्यदारनिरतःशेषैश्चकुंभस्थितेहास्यज्ञोनृपतिर्बुधश्चझषगेपापश्चपापेक्षिते ३

लग्नः चंद्रदृष्टोहीनबलोभवति हीनबलत्वादशोभनफलः उक्तंच मुक्त्वातुचंद्रभवनंलग्नगतंशिशिरकिरणसंदृष्टं अशुभफलंनिर्दिष्टंपृच्छायांजन्मसमयेवा ३ अथहोराद्रेष्काणव्यवस्थितस्यचंद्रस्यग्रहदृष्टिफलंशार्दूलविक्रीडितेनाह होरेशेति होराशब्देनराश्यर्द्धमुच्यते होरेतिलग्नंभवनस्यचार्द्धमितिवचनात् होरायाईशोहोरेशः तस्यर्क्षदलंहोरेशर्क्षदलं तत्राश्रिताहोरेशर्क्षदलाश्रिताः तैर्ग्रहैः होरेशर्क्षदलाश्रितैः शशीचंद्रः तत्तस्तद्धोरास्थोदृष्टः शुभकरोभवति एतदुक्तंभवति यत्रतत्रराशौयस्यांहोरायांचंद्रमाःस्थितः तद्धोरास्थैः सर्वग्रहैः यदिदृश्यतेतदाजन्मनि

शुभकरोभवति तेनार्कहोरास्थश्चंद्रोयत्रतत्रशुभफलदोऽर्कहोराश्रितैर्ग्रहैः दृष्टश्चशुभकरोभवति अर्थादेव चंद्रहोरास्थैर्दृष्टोशुभकरः एवमेवतत्र राशौस्वहोरास्थश्चंद्रहोरास्थैर्ग्रहैर्यतभावस्थैर्दृष्टः शुभकरोभवति अर्थादेवार्कहोरास्थैर्दृष्टोऽशुभकरः एवंलग्नेपिहोरेशेनफलयोज्यं त्र्यंशे तत्पतिभिरिति एवंतत्रराशौयस्मिन्द्रेष्काणेस्थितश्चंद्रस्तस्ययः पतिस्तेनद्रेष्काणपतिनादृष्टश्चंद्रः शस्यतेस्तूयते शुभकरइत्यर्थः पतिभिरिति बहुवचननिर्देशान्नवांशद्वादशांशत्रिंशांशकाधिपतयोगृह्यते तैरपिदृष्टः चंद्रः शुभकरोभवति एवंलग्नेपि यद्यपिसामान्येनोक्तं तथापि शुभग्रहैर्द्रेष्काणपतिभिर्दृष्टः शस्यते पापग्रहैर्मध्यमः यस्मादनेनैवस्वल्पजातकेउक्तं क्षेत्राधिपसदृष्टेशशिनिनृपस्तत्सुहृद्भिरपिधनवान्

होरेशर्क्षदलाश्रितैःशुभकरोदृष्टः शशीतद्वत्त्र्यंशेतत्पतिभिः सुहृद्भवनगैर्वावीक्षितःशस्यते
यच्चोक्तंप्रतिराशिवीक्षणफलंतद्द्वादशांशेस्मृतंसूर्याद्यैरवलोकितोपिशशिनिज्ञेयंनवांशेष्वतः ४

द्रेष्काणांशकपैर्वाप्यन्सौम्यैःशुभनान्यैरिति सुहृद्भवनगैरित्यादि सुहृद्भवनगैः मित्रक्षेत्रस्थैः ग्रहैःवीक्षितः दृष्टःचंद्रः शस्यतेस्तूयतेशुभक-
रएव अर्थादेवस्वभवनगतैर्दृष्टः शस्यते अर्थादेवारिभवनगतैःदृष्टःनशस्यते अशुभफलोभवति एवंलग्नेपियोज्यं यच्चोक्तंप्रतिरा-
शिवीक्षणफलंतद्द्वादशांशेस्मृतमिति प्रतिराशिराशौराशौमेषादिस्थेचंद्रमसि यद्वीक्षणफलंप्रोक्तंकथिततदेवमेषादिद्वादशांशकस्थे
चंद्रमसिस्मृतमुक्तं तदेववाच्यमिति चंद्रेभूपबुधावित्यादियदुक्तं एवंलग्नेपि तत्रापिकर्कद्वादशांशंविनाचंद्रदृष्टिरशोभनासूर्याद्यैरि-
त्यादि अतोऽस्मात्परंशशिनिचंद्रेसूर्याद्यैरर्कादिभिरवलोकितेदृष्टेनवांशेषुफलंज्ञेयंज्ञातव्यमिति ४ ७ ५ ५

अथमेषवृश्चिकवृषतुलांशकस्थेचंद्रमसिसूर्यादिदृष्टे फलंवसंततिलकेनाह आरक्षिकइति क्षितिजोभौमः तन्नवांशकस्थे मेषनवांशकस्थेवृश्चिकनवांशकस्थे चंद्रमसिसूर्यदृष्टे आरक्षिकोभवति आरक्षिकः नगररक्षाधिकृतः भौमदृष्टे वधरुचिः प्राणिघातकः बुधदृष्टेनियुद्धेकुशलः नियुद्धेबाहुयुद्धेकुशलः शिक्षितः प्रवीणः जीवदृष्टेभूपःराजा शुक्रदृष्टेऽर्थवानीश्वरः सौरदृष्टेकलहकृदिति मूर्खइत्यादि सितांशेशुक्रनवांशके वृषनवांशकेतुलनवांशकेवास्थितेचंद्रमसिरविदृष्टेमूर्खोभवति भौमदृष्टेन्यदारनिरतः परदारासक्तः बुधदृष्टेकाव्यकृत् काव्यज्ञः केचिदाद्यवदितिपठंति जीवदृष्टेसत्काव्यकृत् शोभनकाव्यकर्ता शुक्रदृष्टेसुखपरः सुखासक्तः सौरदृष्टेपरदारगः परकलत्राभिगामी ५ अथमिथुनकन्याकर्कटनवांशकस्थेचंद्रेर्कादिदृष्टे फलंवसंततिलकेनाह बौधेहीति शशिनिचंद्रे बौधेबुधनवांशकस्थे

आरक्षिकोवधरुचिःकुशलोनियुद्धे भूपोऽर्थवान्कलहकृत्क्षितिजांशसंस्थे मूर्खोन्यदारनिरतःसुकविःसितांशे सत्काव्यकृत्सुखपरोन्यकलत्रगश्च ५ बौधेहिरंगचरचौरकवींद्रमंत्रिगेयज्ञशिल्पनिपुणःशशिनिस्थितेंशे स्वांशेल्पगात्रधनलुब्धतपस्विमुख्यःस्त्रीपोष्यकृत्यनिरतश्चनिरीक्ष्यमाणे ६

मिथुननवांशकस्थेकन्यानवांशकस्थेवार्कणनिरीक्ष्यमाणेदृष्टेरंगचरः मल्लादिकोभवति भौमदृष्टेचौरः तस्करः बुधदृष्टेकवींद्रः कविराजः जीवदृष्टेमंत्रीसचिवः शुक्रदृष्टेगेयज्ञः सौरदृष्टेशिल्पनिपुणः स्वांशेति स्वांशेआत्मीयनवांशकस्थेकर्कटनवांशस्थेशशिनिचंद्रेसूर्यदृष्टेऽल्पगात्रः कृशदेहोभवति भौमदृष्टेधनलुब्धःकृपणः अल्पधनोवा बुधदृष्टेतपस्वी जीवदृष्टेमुख्यःप्रधानः सितदृष्टेस्त्रीपोष्यःस्त्रीभिरभिवर्द्धनीयः सौरदृष्टेकृत्यनिरतः कार्यासक्तः ६

अथसिंहधन्विमीनन्वांशस्थेन्दौसूर्यादिदृष्टेफलमहर्षिणाह सक्रोधइति सिंहांशकस्थेचन्द्रमस्यर्कदृष्टेसक्रोधः क्रोधयुक्तोभवति भौमदृष्टेनरपति
समतः राजवल्लभः बुधदृष्टेनिधीशः निधिनाधनस्वामी गुरुदृष्टेप्रभुरमतिहताज्ञः शुक्रदृष्टेऽसज्ञः पुत्ररहितः सौरदृष्टेतिहिंस्रकर्मा क्रूरकर्मणिरत जी
वाशाद्यादि भौमांशे वार्हस्पत्येनवांशके धन्व्यंशकेमीनांशकगतेवास्थितेचन्द्रमसिसूर्यदृष्टेप्रथितबलः प्रख्यातवीर्योभवति भौमदृष्टेरणोपदेष्टा
संग्रामदेशकालव्यूहरचनाभिज्ञः बुधदृष्टेहास्यज्ञः उपहासवेत्ता जीवदृष्टेसचिवःमंत्री शुक्रदृष्टेविकामः कामहीनः पुंस्त्वहीनः सौरदृष्टेवृद्धशीलः वृ
द्धमतिरिति ७ अथमकरनवांशकस्थेकुंभनवांशकस्थेवाचन्द्रेसूर्यादिदृष्टेजातस्यफलंशार्दूलेनाह अल्पापत्यइति आर्किः अर्कस्यापत्यमार्किः तस्य

सक्रोधोनरपतिसंमतोनिधीशःसिंहांशेप्रभुरसुतोतिहिंस्रकर्मा
जीवांशेप्रथितबलोरणोपदेष्टाहास्यज्ञःसचिवविकामवृद्धशीलः ७

भागेशनैश्चरनवांशकेमकरनवांशकस्थेकुंभनवांशकस्थेवाचन्द्रेसूर्यदृष्टेऽल्पापत्योऽल्पप्रसवोभवति भौमदृष्टेसत्यपिस्वेदुःखितः सत्यपिविद्यमाने
स्वधनेदुःखितोभवति बुधदृष्टेमानासक्तः गर्वितः जीवदृष्टेस्वेआत्मीयेकर्मण्यनुरक्तः कुलानुरूपकर्मकृत् शुक्रदृष्टेदुष्टस्त्रीद्विष्टः वल्लभः सौर
दृष्टेकृपणः असाता एवतत्कालनवांशकवशात् ग्रहदृष्टावपिवक्तव्यं किंतुतत्रापिकर्कटनवांशकविनाचन्द्रदृष्टिरसंभूति मानीतहादिद्यविह
दृष्टे मानापादित्यसादिदृष्टेचन्द्रायेग्रहैरवलोकितेतद्वृत्तेनैवप्रकारेणदृष्टिफलंयत्रतत्रराशौयत्रतत्रनवांशकस्थेचन्द्रमस्यर्कादिदृष्टेयत्फलमुक्तंतत्
यत्रतत्रराशौ यत्रतत्रनवांशकेव्यवस्थितेर्केद्वारदृष्टेतदेवफलंवाच्यं एतदुक्तंभवति नवांशकव्यवस्थितस्यादित्यस्यचन्द्रस्यचताराग्रहदृष्टि

फलंतुल्यं किंतु यदादित्यदृष्ट्याचंद्रस्योक्तं तच्चंद्रदृष्ट्यासूर्यस्यवक्तव्यं तद्यथामेषवृश्चिकनवांशकस्थेर्केचंद्रदृष्टेआरक्षिकोभवति वृषतुलानवांशक
स्थेमूर्खः मिथुनकन्यानवांशकस्थेरंगचरः सिंहनवांशकस्थेसक्रोधः धन्विमीननवांशकस्थेप्रथितबलः मकरकुंभनवांशकस्थेअल्पापत्यःकर्क
टनवांशकस्थेल्पगात्रः एवमादित्यस्यनवांशकावस्थितस्यग्रहदृष्ट्याचंद्रेणफलसमानमिति ८ अथास्यैवनवांशकदृष्टिफलस्यविशेषंवसंततिल
केनाह वर्गोत्तमेति नवांशकव्यवस्थितेचंद्रेनवांशकदृष्टिफलंद्विःप्रकारमुक्तंशुभमशुभंच यथाआरक्षिकइतिशुभंवधरुचिरित्यशुभंच तत्रवर्गो

अल्पापत्योदुःखितःसत्यपिस्वेमानासक्तःकर्मणिस्वेनुरक्तः दुष्टस्त्रीष्टःकृपणश्चार्किभागेचंद्रेभानौतद्वदिंद्वादिदृष्टे ८ वर्गोत्तमस्व
परगेषुशुभंयदुक्तंतत्पुष्टमध्यलघुताशुभमुत्क्रमेण वीर्यान्वितांशकपतिर्निरुणद्धिपूर्वंराशीक्षणस्यफलमंशफलंददाति ९ इतिबृ०
दृष्टिफलाध्यायःस० १९

तमांशकगतेचंद्रेयत् ग्रहदृष्टिजंफलंशुभमुक्तं तत्पुष्टमतीवशुभंभवति स्वांशकस्थेतुयच्छुभमुक्तंतन्मध्यमं परनवांशकव्य
वस्थितेयच्छुभंतल्लघुस्तोकंविज्ञेयं एवंशुभफलस्यपुष्टतामध्यतालघुताच अशुभमुत्क्रमेण अशुभमनिष्टंयत्फलंतदुत्क्रमेणविपरीतंज्ञेयं परनवांशकस्थ
स्यचंद्रस्ययदशुभंदर्शनफलमुक्तं तदतीवाशुभंभवति स्वनवांशकस्थस्यमध्यमं वर्गोत्तमांशकस्थस्यलघुता एवंलग्नादित्ययोरपिदृष्टिफलंयोज्यं जातके
सर्वाण्येवफलानिभवंतीतिप्राप्तं यस्मादाहयवनेश्वरः अन्योन्यराश्यंशकसंप्रयोगैरन्योन्यसंदर्शनसंगमैश्च अन्योन्यसंयोगविकल्पनाभिरिदंसमुद्राबुवदप्र
मेयमिति अतःसदेवराशिदृष्टिनवांशकदृष्टिफलयोरपिसदेवपक्तिंप्राप्नोति तत्रनवांशकपतौबलवतिराशिदर्शनफलबाधनार्थमाह वीर्यान्वितइति

अथलग्नात् द्वितीयतृतीयचतुर्थपंचषष्ठस्थानस्थार्कफलमौपच्छंदसिकेनाह मतीतिमतिः बुद्धिः विक्रमः पराक्रमः एतौ विद्येते यस्य तथाविधस्तृतीयगेऽर्के रवौ भवति विसुखोदुःखितः पीडितमानसः नित्योद्विग्नचित्तः एवंविधश्चतुर्थगेऽर्के जातो भवति असुतः विपुत्रः धनवर्जितो दरिद्रः एवंविधस्त्रिकोणे पंचमस्थे रवौ जातो भवति बलवान् बलयुक्तः शत्रुजितश्च शत्रुभिररिभिः जितः एवंविधः शत्रुयाते षष्ठस्थानस्थेऽर्के जातो भवति केचिद्बलवान्नष्टरिपुश्च शत्रुयात इति पठंति तथाच सत्यः सूर्येऽरिपुरोगशोकघ्न आचार्येणात्र यवनेश्वरमतमंगीकृतं यतः षष्ठस्थानस्थितानां पापानां यवनेश्वरेणानिष्टफलमभिहितं तथाच शक्तिध्वजः षष्ठाश्रितोऽर्को विषशस्त्रदाहक्षुद्रोगशत्रुव्यसनोपतप्तं काष्ठाश्मपातोर्ध्वविशीर्णदंतान्यूनेटवीदंष्ट्रिनखक्षतांश्च कुजो गतस्तत्र परि

मतिविक्रमवांस्तृतीयगेऽर्के विसुखः पीडितमानसश्चतुर्थे । असुतो धनवर्जितस्त्रिकोणे बलवाञ्छत्रुजितश्च शत्रुयाते २ स्त्रीभिर्गतः प
रिभवं मदगे पतंगे स्वल्पात्मजो निधनगे विकलेक्षणश्च । धर्मे सुतार्थसुखभाक् सुतशौर्यभाक् स्वे लाभे प्रभूतधनवान्पतितस्तु रिःफे ३

क्षतांगं व्याधितं धिक्कृतिकर्शितं च सौरः शिरोद्रुमाशनिपातवाताद्विमुष्टिघातोपहतं च कुर्यात् अनेनैवातिदेशं पापानामाचार्यः करिष्यत्यर्कवत् २ अथलग्नात्सप्तमाष्टनवमदशमैकादशद्वादशस्थेऽर्के जातस्य स्वरूपं वसंततिलकेनाह स्त्रीभिर्गत इति पतंगे आदित्ये मदनगे सप्तमस्थानस्थे जातः स्त्रीभिः योषिद्भिः परिभवं गतः प्राप्तो भवति केचिन्मतेपतंग इति पठंति निधनगे अष्टमस्थे पतंगे सूर्ये स्वल्पात्मजः अल्पापत्यः विकलेक्षणश्च विकले अक्षिणी यस्य अदृढचक्षुर्भवति हीनदृष्टिर्भवतीत्यर्थः धर्मे नवमस्थे सुतार्थसुखभाक् सुताः पुत्राः अर्थो धनं सुखं सुखस्वभावः एषां भागी भवति केचिद्धर्मेसु

तार्यरहितइतिपठति तयान्नसत्य साध्वाचारविरोधकृत परोदैन्यकृन्नवमसस्थः स्वेदशमेसकलशौर्यभाक् स्मितोवलीनभवति लाभेएकादशेम-
भूतधनवान् बहुवित्तो भवति १ फेद्वादशेपतितः स्वकर्मपरिभ्रष्टोभवति इत्यादित्यचारः २ अथचंद्रेलग्नाद्द्वितीयतृतीयचतुर्थपंचमषष्ठस्थेजातस्य
स्वरूपशार्दूलविक्रीडितेनाह मूकइति मूकोवाच्यहीन उन्मत्तः धातुवैषम्याद्धयेष्टकारी जडः अप्रतिपन्न अधःनेत्रहीनः हीन अनुचितकर्म
कृत् बधिरः श्रोत्रेंद्रियहीनः प्रेष्योदासः एषामन्यतमोजातः शशांकोदये शशांकेचंद्रेउदयगेलग्नस्थेजातोभवति एतन्मेषवृषकर्कटवर्ज्यं तेषामि
शेषमाह स्वर्क्षाजोच्चगतइति स्वर्क्षःकर्कटकः तस्मिंल्लग्नेतत्स्थेचंद्रमसिधनीवित्तवान्भवति अजेमेषलग्नेतत्स्थेचंद्रमसिबहुसुतः प्रभूतपुत्रो

मूकोन्मत्तजडांधहीनबधिरप्रेष्याः शशांकोदयेस्वर्क्षाजोच्चगतेधनीबहुसुतः सस्वः कुटुंबीधने
हिंस्रोभ्रातृगतेसुखेसतनयेतत्प्रोक्तभावान्वितोनैकारिर्मृदुकायवह्निमदनस्तीक्ष्णोलसस्थारिगो ४

भवति चन्द्रस्योच्चोवृषः तस्मिंल्लग्नेचंद्रेसस्वः अर्थवान्भवति धनेलग्नात्द्वितीयेचंद्रेकुटुंबी बहुकुटुंबोभवति भ्रातृगतेतृतीयस्थानस्थेहिंस्रःक्रू
रोभवति प्राणिवधकोवा सुखेचतुर्थेसतनये तनयेनपंचमेनस्थानेनयुक्तेतत्प्रोक्तभावान्वितस्तेनप्रोक्तेनकथितेनभावेनान्वितोयुक्तोभवति ते
नसुखेसुखितस्तनयेपुत्रान्वितइति नैकारिरित्यनेकारिः बहुशत्रुः मृदुकाय सुकुमारशरीरः मृदुवह्निः नातिप्रदीप्ताग्निः मृदुमदन मैथुनशीघ्र
गः तीक्ष्णउग्रस्वभावः अलसः क्रियास्वपटुः एवंविधोलग्नात्षष्ठस्थेचंद्रेजातोभवति ४ ५ ६ ७

अथलग्नात्ससमाष्टमनवमदशमैकादशद्वादशस्थेचंद्रेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ईर्ष्युरिति ईर्ष्यु. परार्द्धमत्सरी तीव्रमदः अतिमदनःएवंविधो मदेसप्तमस्थेचंद्रेजातोभवति बहुमति बहुप्रज्ञः चपलबुद्धिरित्यर्थः व्याध्यर्दितः रोगपीडितः एवंविधोऽष्टमस्थेचंद्रेजातोभवति सौभाग्यंसर्वजनवाल्लभ्यं आत्मजाःपुत्रा. मित्राणिसुहृद. बांधवा.स्वजनाः धनंवित्तंएषांभागीभवति शीतगौचंद्रेधर्मस्थेनवमस्थानाश्रितेजातोभवति निष्पत्तिः निष्पादनं सर्वकर्मसमुपैतिगच्छति धर्मधनधीशौर्यैर्युतः धर्मेणधनेनावित्तेनधियाबुध्याशौर्येणबलेनयुतः एवंविधः कर्मगेदशमस्थानस्थेचंद्रेजातोभवति ख्यातइतिख्यातः सर्वत्रप्रसिद्ध. भावगुणान्वित. भावोएकादशोलाभस्थानंतेनान्वितः सलाभइत्यर्थ. एवंविधोभवगतेएकादशस्थेचंद्रेजातोभवति

ईर्ष्युस्तीव्रमदोमदेबहुमतिर्व्याध्यर्दितश्चाष्टमेसौभाग्यात्मजमित्रबंधुधनभाक्धर्मस्थितेशीतगौ
निष्पत्तिंसमुपैतिधर्मधनधीशौर्यैर्युतःकर्मगेख्यातोभावगुणान्वितोभवगतेक्षुद्रोंगहीनोव्यये ५

क्षुद्रोहिंस्रस्वभावः अंगहीन. अवयवरहितः एवंविधोव्ययेद्वादशस्थेचंद्रेजातोभवति इतिचंद्रचारः ५ अथलग्नादिस्थयोर्भौमबुधयोर्जातस्य स्वरूपंवसंततिलकेनाह लग्नेइति लग्नस्थेकुजेप्रहारादिनाक्षततनुः विक्षतशरीरः धनगेद्वितीयस्थेकदन्नः कुत्सितान्नाशीभवति धर्मेनवमेघवान् पापरतोभवति अन्यसंस्थोदिनकरप्रतिम. अन्येषुपरिशिष्टस्थानेषुस्थितोदिनकरप्रतिमोर्कतुल्यफल. तृतीयचतुर्थपंचमषष्ठसप्तमाष्टमदशमैकादशद्वादशेषुयान्येवादित्यस्यफलान्यभिहितानितान्येवभौमस्यवाच्यानि तद्यथा तृतीयेमतिविक्रमवांश्चतुर्थेविसुखः पीडितमानस पंचमेस्कृतधनवर्जित. षष्ठेबलवान् शत्रुजित. सप्तमेस्त्रीभिःपरिभवंगत. अष्टमेस्वल्पात्मज. नवमेविकलेक्षणःदशमेसुखशौर्यवान् एकादशेम-

भूतधनवान् द्वादशोपतितः इतिभौमचारः   अथबुधचारः   विद्वान्धनीइत्यादि लेऽबुधेलग्नगतेविद्वान् पंडितोभवति द्वितीयेधनवान् तृतीयेप्रखरः भक्षणखलोदुर्जनः चतुर्थेपंडितः पंचमेमंत्री षष्ठेशत्रुः विगतरिपु सप्तमेधर्मज्ञः अष्टमेविश्रुतगुणः प्रख्यातगुणः परतोऽनंतरान्यस्थानेऽर्कवत् सूर्यवत् नवमदशमैकादशद्वादशेषुयान्यर्कस्यफलान्यभिहितानितान्येवबुधस्यज्ञानानि तद्यथा नवमेकृतार्थसुखभाक् दशमेसुखशौर्यभाक् एकादशेप्रभूतधनवान् द्वादशेपतितइति   इतिबुधचारः ६   अथलग्नादिस्थस्यजीवस्यफलमिंद्रवज्रयाह   विद्वानिति जीवेगुरौविलग्नात्प्रभृतिस्थितेषु द्वादशेषु-

लग्नेकुजेसततसुर्धनगेकदर्योधर्मेधवान्दिनकरप्रतिमोन्यसस्थ   विद्वान्धनीप्रखलपंडित
मंत्र्यशत्रुर्धर्मज्ञविश्रुतगुण परतोर्कवत्ते ६ विद्वान्सुवाक्य कृपण सुखीचधीमानशत्रु
पितृताधिकश्च नीचस्तपस्वीसधनस्सलाभ खलश्चजीवेक्रमशोविलग्नात्   ७

स्थानपूर्वक्रमशः परिपाट्यैतानिफलानि तद्यथा लग्नस्थेगुरौविद्वान्पंडितोभवति द्वितीयेसुवाक्यः शोभनवचनः तृतीयेकृपणः अदाता चतुर्थेसुखी पंचमेधीमान् बुद्धिमान् षष्ठेऽशत्रुः विगतरिपुः सप्तमेपितृतोधिकः पितुः सकाशात्गुणाधिकः अष्टमेनीचः स्वकुलानुचितकर्मकृत् नवमेतपस्वी विद्यमानतपा दशमेसधनः सवित्तः एकादशेसलाभः लाभयुक्तः द्वादशेखलः क्रूरश्चेति   इतिबृहस्पतिचार ७   अथलग्नादिस्थस्यशुक्रस्यफलमिंद्रवज्रयाह   स्मरनिपुणइति स्मरनिपुणः कामकुशलः सुखितः सुजातसुखः गर्वविधोविलग्नस्थे भृगुपुत्रेशुक्रे जाताभवति प्रियकलहः कलहवल्लभः सुरतेप्सुः सुरताभिलाषी गर्वविधोः

सु

सुखितोभवति गुरुवदतोन्यगृहे अतोस्मात्स्थानत्रयादन्यस्मिन्गृहेस्थानेगुरुवत् जीववत्फलानिवक्तव्यानि द्वितीयतृतीयचतुर्थषष्ठाष्टनवमदशमै कादशद्वादशेषुयान्येवगुरोः बृहस्पतेः फलान्यभिहितानि तान्येवशुक्रस्यवक्तव्यानि तद्यथा द्वितीयेसुवाक्योभवति तृतीयेकृपणः चतुर्थेसुखी षष्ठेऽशत्रुः अष्टमेनीचः नवमेतपस्वी दशमेसधनः एकादशेसलाभः द्वादशेखलः सधनोंत्येअंत्येमीने यत्रतत्रभावस्थेसधनः वित्तवान्भवति स्थानोक्तंतत्फलंनभवति केचिद्गुरुवदन्यतस्तुझषेद्रविणीस्यादितिपठंति अतोनंतरपरिशेषस्थानेषुगुरुवत् झषेमीनेद्रविणीस्यात् भवेदिति इति शुक्रचारः ८ अथलग्नादिस्थस्यसौरस्यफलंशिखरिण्याह अदृष्टार्थोरोगीति अदृष्टार्थः नित्यंदरिद्रः रोगीव्याधितः मदनवशगः कामाधीनः

स्मरनिपुणःसुखितश्चविलग्नेप्रियकलहोस्तगतेसुरतेप्सुः
तनयगतेसुखितोभृगुपुत्रेगुरुवदतोन्यझषेद्रविणीस्यात् ८

अत्यंतमलिनः अतीवमलोपेत. शिशुत्वेबाल्येपीडार्तोव्याध्यर्दितः अलसवाक् अव्यक्तभाषीएवंविधः सवितृसुतेसौरेलग्नस्थितेजातोभवति यदितुलधन्विमकरकुंभमीनानामन्यतमोराशिः लग्नगतोनभवति तदातदेतदुक्तंफलंभवति एषामन्यतमेलग्नगतेतस्यसौरस्यफलमाह गुरुस्वर्क्षोच्चस्थइति गुरुक्षेत्रे धन्विमीनौ शनैश्चरस्यस्वर्क्षेस्वक्षेत्रेमकरकुंभौतस्यैवोच्चस्तुला एषामन्यतमोराशिः यदिलग्नगतोभवति तत्रस्थितेचसौरेनृपतिसदृशः राजतुल्योभवति ग्रामपुरपः ग्रामाणांपुराणांचाधिपतिः सुविद्वान्पंडितः चार्वंगः शोभनावयवश्चभवति केचि-
[illegible] तदुक्तं यस्मात्सारावल्यामुक्तं स्वोच्चेस्वजीवभवनेक्षितिपालतुल्योलग्नेऽर्कजेभवतिदेशनराधिनाथः शेषे

पुत्रस्तगद्पीडितएववास्येदारिद्यक्ष्मवशगोमलिनोलसश्च १ दिनकरसमोन्यत्रकथितइति अन्यत्रद्वितीयादिषुस्थानेषु दिनकरसमोर्कतुल्यः कथितः कथान्यादित्यस्यफलान्यभिहितानितान्येवसौरस्यवाच्यानि तद्यथा द्वितीयेभूरिद्रव्योनृपहृतधनोवक्रःरोगीचभवति तृतीयेमतिविक्रमवान् चतुर्थेपिस्रवः पीडितमानसः पञ्चमेभसुतोधनवर्जित षष्ठेबलवान् शत्रुनिर्जितः सप्तमेस्त्रीभिः परिभवगतः अष्टमेस्वल्पात्मजोविकलेक्षणः नवमेसुवार्यसुखभाक् दशमेस्रवशौर्यभाक् एकादशेभभूतधनवान् द्वादशेपतितइति इतिशनैश्चरचारः ९ अथलग्नादारभ्ययेतन्वाद्योभावास्ते षु भावेषुयथपेस्थितानांसर्वेषामेवग्रहाणांफलविशेषमालिन्याह सुहृदिति यदेतत्सातिगृहलग्नस्मृतिद्वादशसुस्थानेषु फलमनुपरिचिन्त्य

अहसाद्यौरोगीमरनवशगोत्यतमलिनःशिशत्वेपीडार्त्तं सवितृसुतलग्नेस्यलसवाक्
गुरुस्वक्षोच्चस्थनृपतिसदृशोग्रामपुरपःसुविद्वांश्चार्वंगोदिनकरसमोन्यत्रकथितः ९

भावःतनुकुटुंबसहोत्थादयः लग्नदेहादिभावाइति लग्नदेह शरीरपरिकल्प्यम् लग्नादारभ्यतनुकुटुंबसहोत्थादयोभावाः परिकल्प्याः अत्रकाभ्रातिः तत्रोच्यते अस्त्येव यस्माद्यवनेश्वरः मूर्तिर्नहोराशिभिवाश्रियादिति अन्यराशिभान्नपरिकल्प्यालग्नादारिकल्प्याः तेषु शरीरादिभावेषुयोग्रहोव्यवस्थितः सतस्यभावस्यपुष्टिकृशतांवाकरोति कथमित्याह सुहृदरिपरकीयः स्वर्क्षतुंगस्थितानांफलमनुपरिचिन्त्यमिति सुहृदेवमित्रर्क्षे अरिःक्षेत्रशत्रुर्क्षे परकीयमुदासीनभं स्वर्क्षमात्मीयक्षेत्रं तुंगमुच्चभं एतेषुस्थानेषु स्थितानांफलमनुपरिचिन्त्यम् परिकल्प्य भावस्योग्रहोयादृशोस्त्रेभवतितादृशंफलमयच्छति नन्वत्रमकृद्दशादिक्षेत्राणांपरिगणनाकृता तत्रनशुभाशुभफलविभागउक्तः

उच्यते अर्थादेवैतद्गम्यते तथामित्रक्षेत्रस्थोभाववृद्धिंकरोति शत्रुक्षेत्रादिस्थश्चतद्धानिं तत्रचयेशुभाशुभक्षेत्रेनोक्तेत्रिकोणनीचभेतेपिग्राह्ये मि
त्रादिक्षेत्राण्यक्षेत्रोपलक्षणानिज्ञेयानि कः पुनरपि अरिपरकीयोर्विशेषउच्यते उदासीनोत्रपरोभिप्रेतः अरिः शत्रुः परउदासीनः तत्रैतदुक्तंभव
ति पाप.सोम्योवा नीचस्थः शत्रुक्षेत्रस्थोवा यस्मिन्भावेव्यवस्थितः तस्यभावस्यहानिंकरोति उदासीनक्षेत्रस्थोनहानिंनचवृद्धिं मित्रक्षेत्रे-
स्वक्षेत्रेमूलत्रिकोणेस्वोच्चेव्यवस्थितोभावस्यवृद्धिमिति एतत्केषांचिन्मते तथाचभगवान् गार्गिः नीचर्क्षरिपुगेहस्थोग्रहोभावविनाशकृत् उदा
सीनगृहे मध्योमित्रर्क्षस्वत्रिकोणगः स्वोच्चगश्चग्रहोवश्यंभाववृद्धिकरः स्मृतइति सत्याचार्यस्तुपुनः समुपचयविपत्तीसौम्यपापेषुकथयति य

सुहृदरिपरकीयस्वर्क्षतुंगस्थितानांफलमनुपरिचिंत्यंलग्नदेहादिभावैः
समुपचयविपत्तीसौम्यपापेषुसत्यःकथयतिविपरीतंरिःफषष्ठाष्टमेषु १०

स्मिन्भावेसौम्याः स्थितास्तस्यभावस्यसमुपचयंवृद्धिंकुर्वंति यस्मिन् भावे पापाः स्थितास्तस्यभावस्यविपत्तिंहानिंकुर्वंति किंतु रिःफषष्ठाष्टमे
ष्वेतद्विपरीतंकथयंति रिःफेद्वादशेस्थानेसौम्याः भावहानिंकुर्वंति पापाः वृद्धिंतेनरिःफेसौम्याव्ययहानिंकुर्वंति पापाःव्ययवृद्धिं षष्ठेसौम्याः शत्रुहा
निंकुर्वंति पापः शत्रुवृद्धिं अष्टमेसौम्याः मृत्युहानिंकुर्वंति पापाःमृत्युवृद्धिमिति तथाचसत्यःसौम्याःपुष्टिंपापास्तद्धानिंसंस्थिताग्रहाःकुर्युःमूर्त्यादिषु
निधनेत्येषष्ठेचविपर्ययात्फलदाः ननुपूर्वसौम्यानांपापानांचोपचयस्थानावस्थितानांशुभंफलंव्याख्यातंतत्कथं षष्ठस्थाःपापाः शत्रुवृद्धिंकुर्वंति अत्रो
च्यते पूर्वसामान्येनोक्तं यत्रचवाचनिकीबाधाभवति तत्रसामान्यंभावफलंत्यक्त्वायथोक्तफलंवक्तव्यं यद्येवंकथंस्वल्पजातकेउक्तं पुष्णातिशुभा-

भावान्मूर्त्यादीन्प्रतिसंस्थिताः पापाः सौम्याः षष्ठेरिगाः सर्वेनैधन्यमष्टमगाइति अत्रोच्यते बृहज्जातके आचार्येणोक्तं स्वल्पजातकेन्याचार्यमतेन मतित्तेपमाचार्येण ज्योतिषमागमशास्त्रविप्रतिपत्तौनयोग्यमस्माकं स्वयमेवविकल्पयितुं किंतुबहूनामतपक्ष्ये यत्राचार्याणांसमसरव्यानामत भेदसमलंभवति तनवराहमिहिरोमतद्वयमपिदर्शयति तथाचबृहद्यात्रायामन्यरूपांग्रहकुंडलिकांस्वल्पयात्रायांसामान्यरूपांपठति एवंबृहदल्पयोर्विवाहपटलयोरपि ११ अथग्रहकुंडलिकाफलविशेषमनुष्टुभाह उच्चेति ग्रहकुंडलिकायांफलंद्विविधमुक्तं शुभमशुभंच तत्रयच्छुभं फलं तदुच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैर्ग्रहैर्दत्तंयथाक्रमंपादोनदलपादाल्पनिष्फलंभवति तेनोच्चस्थोग्रहः संपूर्णंप्रयच्छति मूलत्रिको-

उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः शुभंसंपूर्णपादोनदल
पादाल्पनिष्फलम् ११ इतिबृहज्जा॰ भावाऽध्यायःसमाप्तः २०

णस्थः पादोनं स्वक्षेत्रस्थोऽर्द्धं मित्रक्षेत्रस्थः पादफलं शत्रुक्षेत्रस्थः पादादप्यल्पम् नीचस्थोस्तमितश्चनकिंचिदपि एवंशुभफलं शुभग्रहणा देवाशुभस्यग्रहस्यपुत्रक्रमोव्याख्येयः तत्रास्तमितोनीचस्थश्चाशुभफलंसंपूर्णंप्रयच्छति शत्रुक्षेत्रस्थः पादोनंमित्रक्षेत्रस्थोऽर्द्धं स्वक्षेत्रस्थः पादम् त्रिकोणस्थः पादादप्यल्पं उच्चस्थोनकिंचिदपि एवंजातककालेग्रहस्यावस्थानात्फलंवाच्यं दशाष्टकवर्गादिफलपाककाले शुभमशुभमशुभंवाफलंवचनयानेवप्रयच्छति एतच्चपूर्वमेवव्याख्यातं इत्थं तत्कालफलेयुक्तोभवति यदिदशाधिपस्तस्यशुभमशुभंवापिफलंपक्त्वं व्यंनित्यंसंपरिपूर्णं ११ इतिश्रीमद्भट्टोत्पलविरचितायांबृहज्जातकविवृतौ भावाऽध्यायोविंशतितमः समाप्तः २० ५ ५

अथात आश्रययोगाध्यायो व्याख्यायते   तत्रादावेवैकादिसंख्योत्तरवृद्ध्या स्वगृहगतानां ग्रहाणां मित्रक्षेत्रगतानां च फलं पुष्पिताग्र्याह कुलसमकुले ति स्वभेषु स्वराशिष्वेकवृद्ध्याश्रितैः ग्रहैर्जाताः कुलसमकुलमुख्यबंधुपूज्याधनिसुखिभोगिनृपाः पुरुषा भवंति यस्मिन्तस्मिन् गृहे स्वक्षेत्रगतजातः कुलसमः स्वकुलतुल्यो भवति एवं द्वयोः स्वक्षेत्रस्थयोः कुलमुख्यः स्वकुलप्रधानः स्वकुलाधिकः त्रिषु बंधूनां पूज्यः चतुर्षु धनी वित्तवान् पंचसु सुखी षट्सु भोगी नृपतुल्यः केचिन्नृपइतिपठंति स चोपमानान्नृपतिरिव भूपस्तत्समत्वमेव सुक्तं स्वल्पजातकेप्युक्तं कुलतुल्यकुलाधिकबंधुमान्यधनि भोगिनृपसमनरेन्द्राः एवं षट्सु नृपसमः सप्तसु नृपो राजा एवं गुणः एकोत्तरवृद्ध्या स्वक्षेत्रगेषु जातो भवति परविभवेत्यादि एकवृद्ध्या इत्यनु

कुलसमकुलमुख्यबंधुपूज्याधनिसुखिभोगिनृपाः स्वभैकवृद्ध्या
परविभवसुहृत्स्वबंधुपोष्यागणपबलेशनृपाश्च मित्रभेषु   १

वर्तते मित्रभेष्वेकवृद्ध्या स्थितेषु परविभवसुहृत्स्वबंधुपोष्यागणपबलेशनृपाश्च जाता भवंति तेनैकस्मिन् मित्रक्षेत्रस्थे ग्रहे जातः परविभव पोष्यो भवति पराजीवीत्यर्थः द्वयोः सुहृत्पोष्यः त्रिषु स्वपोष्यो ज्ञातिपोष्यो भवति चतुर्षु बंधुपोष्यः भ्रातृपोष्य इत्यर्थः पंचसु गणपः गण-स्वामी षट्सु बलेशः सेनापती सप्तसु नृपो राजा   १   अथोच्चगतस्यैकस्यापि मित्रदृष्टस्य फलमेकोत्तरवृद्ध्या नीचशत्रुस्थानां च मालिन्या ह जनयतीति एकोप्युच्चगतो ग्रहो मित्रदृष्टः सुहृदवलोकितः नृपं राजानं जनयति उत्पादयति एवमेकोप्युच्चगतो मित्रयोगान्मित्रयुक्तत्वात्प्रचुर धनसमेतं सिद्धं च जनयति प्रचुरधनसमेतं पर्याप्तवित्तयुक्तं सिद्धं च सर्वत्रावासपूजं जनयति विधनविसुखमूढेत्यादि एकवृद्ध्येत्यनुवर्तते

एकस्थाश्शत्रुनीचर्क्षगेषु शत्रुक्षेत्रस्थेषु नीचगेषु वाग्रहेषु विधनविकलमूढव्याधितावधतप्तावधदुरितसमेतानाता भवति तेनयस्यजन्मन्येकोग्रहः शत्रुक्षेत्रगोनीचगोवाभवतिसविधनः विगतधनोभवति दरिद्रःयस्यद्वौ सविकलोदुःखितः यस्यत्रयःसमूढः विचित्तः यस्यचत्वारः सव्याधित पीडितः यस्यपञ्चसवधतप्तोभवति यस्यषट् सतप्तोभवति बहुदुःखसतप्त यस्यसप्तसवधदुरितसमेतोभवति वधबध्योर्दुरितदुष्कृत वधएवदुरिततेनसमेतोयुक्तोवा नीचेयद्यपिसप्तसनसमभवति तथापिवज्रादिवत्पूर्वशास्त्रानुसारेणतत्फलोपदेशः २ अथकुम्भलग्नेजातस्याशुभफलमुपन्यातिकथाह नकुम्भलग्नमिति सत्याचार्यः कुम्भलग्नजन्मनिनशुभमाह नशोभनमुक्तवान् तथाचसत्यः जन्मनिनद्रष्टश्रेष्ठः प्रवदेद्धोरारिभि

जनयतिनृपमेकोप्युच्चगोमित्रदृष्टः प्रचुरधनसमेतामित्रयोगाच्चसिद्ध
विधनविकलमूढव्याधितोवधतप्तोवधदुरितसमेतःशत्रुनीचर्क्षगेषु २

धनवर्ज्यःस्यात् होरान्भवेद्दिशाद्विपदेप्यिहकुम्भवर्ज्येहि कुम्भविलग्नेजातोभवतिनरोदुःखशोकसतप्तइति नभागभेदादिति पुराणयवनाभागभेदाद्द्वादशभागभेदाज्जन्मनिकुम्भलग्नमशुभमिति यस्यतस्यलग्नस्यकुम्भद्वादशभागेजन्मनशुभमितितेषामतनकुम्भलग्ने तथाच तन्मतानुसारिणाभूतकीर्तिनाप्युक्त मर्क्षस्मिन्लग्नगतेकुम्भद्विरसांशकोयदाभवति राशीनांतदाप्युसुखितः परान्नभोजीभवेत्पुरुषइति अत्रविष्णुगुप्तचाणाक्यासाहनुः कस्मात्भेदइति यदुक्त भागभेदात्कुम्भलग्नजन्मनिनशुभ तत्कस्यराशेर्लग्नगतस्य कुम्भद्वादशभागोनास्त्यपितुसर्वस्यैवास्तिविद्यते यस्मात्कुम्भस्यद्वादशभागोनशुभस्तदासर्वाण्येवलग्नोक्तानिफलानिनिरर्थकानिभवति तस्मादतिप्रसगः तेनकुम्भलग्नमेवाशुभनतत्भागभेद-

इति तथान्यत्तद्वाक्यम् कुंभद्वादशभागोलग्नगतोनप्रशस्यतेयवनैः यद्येवंसर्वेषांलग्नगतानाममनिष्टफलंनस्यात् घटयोगाद्राशीनांनचतत्सर्व-
शास्त्रकाराणांतस्मात्कुंभविलग्नोजन्मन्यशुभोनतद्भागइति ३ अधुनाहोरास्थानांग्रहाणांफलंवसंततिलकेनाह यातेष्विति असद्ग्रहाः पापाः
तेष्वसत्सुपापेषुसमभेषुविषमराश्यवस्थितेषुनकेवलयावद्दिनेशहोरामादित्यहोरांयातेषुप्राप्तेषुविषमराशिषुपापाः प्रथमार्द्धस्थायदाभवं-
ति तदाजातःख्यातः सर्वत्रप्रसिद्धः महोद्यमबलार्थयुतः महत्सुकार्येषूद्यमरतोबलवान् वीर्यवान् अर्थयुतोधनवान् अतितेजाअतितेजस्वीभ-
वति चांद्रींशुभेष्विति युजियुग्मराशौशुभेषुसौम्यग्रहेषुचांद्रीहोरांयातेषुसमराशिषुप्रथमार्द्धस्थाः सौम्याः भवंति तदाजातोमार्दवयुतोमृदुस्व

नकुंभलग्नंशुभमाहसत्योनभागभेदाद्यवनावदंति कुस्यांशभेदोनतयास्तिराशेरतिप्रसंगास्त्वि
तिविष्णुगुप्तः ३ यातेष्वसत्स्वसमभेषुदिनेशहोराख्यातोमहोद्यमबलार्थयुतोतितेजाः
चांद्रींशुभेषुयुजिमार्दवकांतिसौख्यासौभाग्यधीमधुरवाक्ययुतःप्रजातः ४

भावः कांतियुतोद्युतिमान् सौख्ययुतः सुखान्वितः सौभाग्ययुतः सर्वजनप्रियः धीयुतः मतिमान् मधुरवाक्ययुतः प्रियवदः एतैः गुणैर्युक्तोजातोभ-
वति ४ अथपुनरपिहोरागतंफलमिंद्रवज्रयाह नास्वेवेति तास्वेवपूर्वोक्तासुहोरास्वपरर्क्षगेष्वन्यराश्याश्रितेषुजातानराः सर्वेषुपूर्वोक्त
गुणेषुमध्याः भवंति एतदुक्तंभवति समराशिषुरविहोरायांपापग्रहाणामवस्थानंभवति तदाजातानांपूर्वोक्तगुणामध्याभवंति एवंविषमरा-
शिषुचंद्रहोरायांसौम्यग्रहाणामवस्थानंभवति तदाजातानांपूर्वोक्तगुणामध्याभवंति व्यत्यस्तहोराभवनस्थितेष्विति व्यत्यस्तासुविपरीत

स्याकूलाग्रु च्य पत्तेपुन भवनेपुराशिषुस्थितेपु ग्रहेपु जातामर्त्यामनुष्या उक्तगुणैः प्रागुद्दिष्टे गुणो विहीनावर्जिताभवति एतदुक्तभवति सप्त
राशिपु चन्द्रहोरायापापानामवस्थानंभवति तदाजाता महोद्यमवन्नार्थहीनाभवति वितेजसम्भ पुनेविषमराशिषु आदित्यहोरायासौम्यानामवस्था
नभवति तदाजाताभार्दवकांतिसौख्यसौभाग्यधीमधुरवाक्यविहीनाजाताभवति अत्रन्दर्शितेग्रहानस्थानेयथायथाग्रहन्वहुत्वभवति त
थातथागुणन्वहुवक्तव्य • अथद्रेष्काणानस्थानाच्चन्द्रस्यफलवसततिलकेनाह कल्याणरूपगुणमिति आत्मीयद्रेष्काणेयदाचन्द्रस्थि
तोभवति अथवास्वकद्रेष्काणेस्थितस्तदाजात कल्याणरूपगुणः प्रशस्तरूपः प्रशस्तगुणश्चभवति आत्मीयद्रेष्काणमिनद्रेष्काणावस्था

तास्वेवहोरासु परस्वेगेपुत्रेयानरा पूर्वगुणेप्रमुध्या
अत्यन्तहाराभवनास्थितपुमर्त्याभवस्तुक्तगुणैर्विहीन ५

नविनान्यद्रेष्काणावस्थितेचन्द्रमसिविनाशः यस्मादुक्तान्यगत्तदधिनाथगुणकरोति यस्मिन्द्रेष्काणेचन्द्रमाव्यवस्थितस्तस्ययोधिपतिः सयदि
चन्द्रस्यतत्कालमध्यस्तदाजातस्यमध्यमोरूपगुणौभवतः अथद्रेष्काणाधिपतिश्चन्द्रस्यतत्कालमारिस्तदाजातोरूपगुणहीनोभवति व्यालो
द्यतायुधेति व्यालद्रेष्काणः सर्पद्रेष्काणस्तत्रस्थेचन्द्रेजात तीक्ष्णउग्रोभवति उद्यतायुधद्रेष्काण सायुधस्तत्स्थेचन्द्रेजातोतिहिंस्रोमा
रणात्मकोभवति प्राणिघातरतश्च पर्थः चतुश्चरणाः चतुष्पदद्रेष्काणा तत्रस्थेचन्द्रेगुरुतल्परतोगुरुदारागमिगामीभवति भ्रष्टन्द्रेष्काण
पक्षिद्रेष्काणस्तत्स्थेचन्द्रे ऽटन परिभ्रमणशीलोभवति आत्मीयादिद्रेष्काणस्थेचन्द्रमसिव्यालद्रेष्काणस्थेन्तरेसभवतः फलद्वयमपि

वक्तव्यं अत्रव्यालद्रेष्काणाः कर्कटद्वितीयः वृश्चिकाद्याः मीनतृतीयः उद्यतायुधद्रेष्काणः मेषाद्यः मेषतृतीयः मिथुनद्वितीयः सिंहाद्यः तुल द्वितीयः कुंभाद्यश्च अत्रापिगुणद्वयांतर्भूतद्रेष्काणस्थेचंद्रे फलद्वयंवक्तव्यमिति ६ अधुनामेषादिनवांशकजातस्यस्वरूपंशालिन्याह स्तेनइति मेषवर्ज्यमन्यस्मिन् राशौमेषलग्नगतेनवांशकेजातः स्तेनश्चौरोभवति वृषवर्ज्येवृषनवांशकेजातोभोक्ता असंचयशीलः एवंमिथुन वर्ज्येमिथुननवांशकेजातः पंडितोविद्वान्भवति कर्कटनवांशकेजातः आढ्यः ईश्वरः सिंहांशकेनरेंद्रोराजा कन्यांशकेक्लीबः पुरुषाकाररहितः तुलां शकेशूरः संग्रामप्रियः वृश्चिकांशकस्थेविष्टिकृद्भारजीवी धन्व्यंशकेदासवृत्तिः मकरांशकेपापः कुंभांशकेहिंस्रः क्रूरः मीनांशकेऽधीः निर्भयः के

कल्याणरूपगुणमात्मसुहृद्दृकाणेचंद्रोन्यगस्तदधिनाथगुणंकरोति व्यालोद्यतायुध
चतुश्चरणाण्डजेषुतीक्ष्णोऽतिहिंस्रगुरुतल्परतोऽटनश्च ६ स्तेनोभोक्तापंडिताढ्योनरेंद्रःक्ली
बःशूरोविष्टिकृद्दासवृत्तिः पापोहिंस्रोऽभीश्चवर्गोत्तमांशेष्वेषामीशाराशिवद्द्वादशांशैः ७

चिद्धीरितिपठंति अधीः बुद्धिरहितः आचार्यस्यत्वभीरभिमतं तथाचस्वल्पजातके तस्करभोक्तृविचक्षणधनिनृपतिनपुंसकाभयदरिद्राः स्व लपापोग्रोत्कृष्टामेषाद्यानांनवांशभवाइति वर्गोत्तमांशेष्वेषामीशाः एष्वेवराशिषुवर्गोत्तमांशेषुजाताएषामेवपूर्वोक्तानामीशाः स्वामिनोभव ति एतदुक्तंभवति मेषलग्नेमेषनवांशकेजातश्चौरस्वामीभवति वृषलग्नेवृषनवांशकेजातोभ्रातॄणामसंचयशीलानांस्वामीभवति एवंमिथु नेपंडितस्वामी कर्कटलग्नेईश्वराणांस्वामी महाधनिकः सिंहेनृपस्वामी महाराजाधिराजः कन्यायांक्लीबस्वामी तुलेशूराणांस्वामी वृश्चिके

भारवाहानास्वामी धन्विनिदासानास्वामी मकरेपापानास्वामी कुंभेकुणपानास्वामी मीनाशके।भयानास्वामी राशिषड्द्वादशांशैरिति सर्वदृशांशैः राशिवत्फलानिवाच्यानि यानि मेषादिस्थेचन्द्रमसिफलान्यभिहितानि सृतोताम्रइत्येवमादीनितान्येवमेषादिद्वादशांशकजातस्यवक्तव्यानीति ७ भू धभौमसौर्योः स्वत्रिंशांशकस्थयोःफलंवसंततिलकेनाह जायान्वितइति जायान्वितोभार्यायुक्तः बलवीर्यौविभूषणान्यलंकरणानि सत्वमौदार्यमेतैर्यु क्तः तथातितेजाः अतिसाहसेनासमीक्षितकार्यकरणेनचयुक्तः एवंविधः कुजेभौमेस्वभागेस्वत्रिंशांशकस्थेजातोभवति रोगीव्याधितः मृतस्वयुव तिः मृतास्वाआत्मीयायुवतिर्भार्यायस्य विषमःक्रूरः अन्यदारोऽन्यसंबंधिनीदारायस्य परदाररतः दुःखीनिःस्वः परिच्छदयुतः गृहवस्त्रपरिवा

जायान्वितोबलविभूषणसत्वयुक्तस्तेजोतिसाहसयुतःस्वकुजेस्वभागे
रोगीमृतस्वयुवतिर्विषमोन्यदारोदुःखीपरिच्छदयुतोमलिनोर्कपुत्रे ८

रोपेतः मलिनः मलोपेतः एवंविधोर्कपुत्रेसौरेस्वत्रिंशांशकस्थेजातोभवति नन्वत्रत्रिंशांशकग्रहणनास्ति तत्कथंज्ञायते त्रिंशांशकफलमेतत् उच्य ते शुक्रफलाभिधानेत्रिंशांशकग्रहणंभविष्यति ८ अथजीवबुधयोः स्वत्रिंशांशकस्थयोर्जातस्यस्वरूपंवसंततिलकेनाह ख्यातइति ध नेनवित्तेनयशसाकीर्त्यासत्त्वेननिर्दुःसत्वेनप्रज्ञयाप्रभुत्वयाचयुक्तः तेजस्वीसोत्साहः पूज्यः लोकवंद्यः निरुजःस्वस्थदेहः उद्यमवान् उत्थानशी लः भोगवान् भोगसंयुक्तः एवंविधोगुरौजीवेस्वत्रिंशांशकस्थेजातोभवति मेधाबुद्धिः कलागीतवाद्यनृत्यपुस्तकचित्रकर्मादिकाः कपटः दा म्भिकत्वं काव्यकवेःकर्म विवादः वाक्पटुत्वं शिल्पंतक्षकर्मादि शास्त्रार्थः सतामाचारानुष्ठानं साहसमसमीक्षितकार्यकरणशीलता अ

तिमान्योतिपूज्य· एवंविधाः शशिजेबुधे स्वत्रिंशांशकस्थेजाताः भवंति केचिदत्रसर्वत्रैकवचनमेवेच्छंति तथापिनकश्चिद्दोष· ९ अथशुक्रस्य स्वत्रिंशांशकस्थस्य भौमादित्रिंशांशकस्थयोश्चंद्रार्कयोश्चजातस्य स्वरूपंमंदाक्रांतयाह स्वेत्रिंशांशेति बहुसुतः प्रभूतपुत्रः बहुसुखोऽपरिमित सुखः आरोग्येणानिरोगतया भाग्यैः जनप्रियत्वेन अर्थेनधनेनरूपेणसुचारुतयासंयुक्तः केचिद्भार्यार्थरूपइतिपठंति भार्ययाकलत्रेण तथा तीक्ष्णः क्रूरः सुललितवपुः शोभनशरीरः सुप्रकीर्णेंद्रियः विक्षिप्तेंद्रियार्थः सुप्रकीर्णानि विक्षिप्तानींद्रियाणियस्य बहुस्त्रीगमनशीलः एवंवि-धः शुक्रेस्वत्रिंशांशकस्थेजातोभवति भूरस्तब्धावित्यादि आरपूर्वांशकेषु भौमप्रथमेषु भागेषुरविशशियुक्तेष्वर्कचंद्रसंयुक्तेषुयथासंख्यंफ-

स्वांशेगुरोधनयशःसुखबुद्धियुक्तास्तेजस्विपूज्यनिरुगुद्यमभोगवंतः मेधाकलाकपटकाव्यविवादशिल्पशास्त्रार्थसाहसयुताशशिजेतिमान्याः ९ स्वत्रिंशांशेबहुसुतसुखारोग्यभाग्यार्थरूपःशुक्रेतीक्ष्णःसुललितवपुःसुप्रकीर्णेंद्रियश्च भूरस्तब्धोविषमवधकोसद्गुणाढ्योसुखिज्ञोचार्वंगोस्तोरविशशियुतेष्वारपूर्वांशकेषु १०  इतिश्रीबृहज्जात० आ० यो० स० २१

लानि तद्यथा भौमत्रिंशांशकस्थेर्के भूरः संग्रामप्रियः चंद्रेस्तब्धश्चिरकारी सौरत्रिंशांशकस्थेर्के विषमःक्रूरःभवति चंद्रमसिवधकः जीवत्रिंशांशकस्थेऽर्केसद्गुणोभवति चंद्रमस्याढ्यः ईश्वरः बुधत्रिंशांशकस्थेर्केसुखीभवति चंद्रेज्ञःपंडितः शुक्रत्रिंशांशकस्थेर्केचार्वंगः शोभनशरीरः चंद्रमसीष्टः सर्वजनप्रिय· एवमारपूर्वेष्वंशेषु आरोगारकःपूर्वः प्रथमोयेषामंशकानांत्रिंशद्भागानांतेष्विति १०  इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौ आश्रययोगाऽध्यायएकविंशतिःसमाप्तः २१  ७ ७ ७ ७

अथातः प्रकीर्णकाध्यायोव्याख्यायते मिश्रप्रकीर्णकंतदुच्यते तत्रग्रहाणांपरस्परकारकसद्भावंतावदीयेनाह स्वर्क्षेति स्वर्क्षेस्वक्षेत्रेयोग्रह स्थितः यस्तुंगेस्वोच्चे यश्चमूलत्रिकोणेस्थितः सचयदिलग्नकंटकेषुकेंद्रेष्वाश्रितःस्थितोभवति एवंविधस्यग्रहस्यान्योप्येवंविधः केंद्रगोयदिभवति तदातौग्रहावन्योन्यपरस्परकारकाख्यौभवतः अनेनप्रकारेणाय कर्मगःयोग्रहस्मात् यहात्दशमस्थानस्थः सविशेषतः विशेषेणतेषांग्रहाणा-मध्यात्कारकसत्तांलभते अतउक्तं कर्मगस्तुतेषांविशेषतइति १ अथास्यैवोदाहरणोपदर्शनार्थंरयोक्तमाह कर्कटेति यथाकर्कटोदये कुलीरलग्नेतस्मिंश्चोडुपेचन्द्रे कुजोंगारकः यमः सौरः अर्कः आदित्यः सूरिः बृहस्पतिः एतेकुजयमार्कसूरयः स्वोच्चगाः आत्मीयतुंगस्थाय

स्वर्क्षतुंगमूलत्रिकोणगाः कंटकेषुयावंतआश्रिताः
सर्वएवतेन्योन्यकारकाः कर्मगस्तुतेषांविशेषतः १

दिभवति कुजोमकरे यमस्तुले अर्कोमेषे सूरिः कर्कटे तदातेपरस्परमन्योन्यकारकानिगदिताउक्ताः अनेनप्रकारेण यावंतोभवंतितावंतः परस्परकारकाख्याः अनेनोदाहरणेनैतत्प्रतिपादितंभवति यथापुरुषस्यजन्मकालेकेंद्रंविना स्वर्क्षेतुंगत्रिकोणगाः अपिसंतःपरस्परकंटकगास्तदाकारकसत्तामतिलभते लग्नगस्येति लग्नगस्यग्रहस्यप्रभ्र मेषमध्यस्थितस्यसकलाः सर्वेग्रहोवरगाः दशमस्थानस्थश्चापिचतुर्थस्थानस्थश्चकारकसंज्ञोभवति अनेनैतदु क्तंभवति लग्नगोग्रहः स्वक्षेत्रगत्रिकोणेषु यद्यपिभवति तस्मायोदशमस्थः चतुर्थोवासोप्युच्चत्रिकोणस्वक्षेत्राणामन्यतमस्थोभवति त

थापिलग्नगतस्यसकारकाख्योभवति नतस्यलग्नगतइति अतउक्तं लग्नगस्यसकलोवरांबुगइति २ अथपुनरपिअन्यत्कारकलक्षणमनुष्टुभाह स्वत्रिकोणोच्चगइति स्वत्रिकोणोच्चगोग्रहः कारकत्वेहेतु. कारणंनकेंद्रस्थः यतोन्योस्यग्रहस्यलग्नेकेंद्रंविनाप्यवस्थितस्ययदिकश्चिद्ग्रहः कर्मगोदशमस्थानस्थोभवतिसचस्वक्षेत्रोच्चमूलत्रिकोणानामन्यतमेनभवति तस्माच्चदशमस्थस्ययदिसुहृन्मित्रनिर्गतोनकेवलंयावत्तद्गुणसंपन्नस्तेनमित्रगुणेनसंयुक्तस्तात्कालिकेमित्रामित्रविधिनाधिमित्रताप्राप्तास्तथाविध· सर्वग्रहः कारकाख्योभवति यस्यचदशमः सतस्यकारकाख्योनभवति कारकसंज्ञाचयात्रायामुपयुज्यते यतस्तत्रोक्तं रिक्तोपहतदशायांजन्मोदयनाथशत्रुपाकेच स्वदशेशकारकदशासंश्रयणीयो

कर्कटोदयगतेयथोडुपेस्वोच्चगाःकुजयमार्कसूरयः कारकानिगदिताःपरस्परंलग्नगस्यसकलोंबरांबुगः १ स्वत्रिकोणोच्चगोहेतुरन्योन्यंयदिकर्मगः सुहृत्तद्गुणसंपन्नःकारकश्चापिसस्मृतः२ शुभंवर्गोत्तमेजन्मवेशिस्थानेचसद्ग्रहे अशून्येषुचकेंद्रेषुकारकाख्यग्रहेषुच ४

नरेंद्रपतिरिति तथासस्विवेशिगृहयुक्तः कारकर्क्षेपिचंद्रः जयसुखधनदातातत्सहर्तान्यथेति ३ अथकारकसंज्ञाप्रयोजनमनुष्टुभाह शुभमिति यस्यलग्नेनवांशेवर्गोत्तमाख्येजन्मभवति चंद्रोपिवावर्गोत्तमांशगतोभवति तस्यशुभंजन्मयस्मिन्राशौपुरुषस्यजन्मसमयेर्कःस्थितस्तस्माद्राशेःयोद्वितीयोराशिः सवेशिसंज्ञः यस्यचप्रागुक्तेवेशिस्थानेसद्ग्रहः सौम्यग्रहोज्ञगुरुसितानामन्यतमोभवति तस्यापिशुभंजन्म यस्यजन्मलग्नेकेंद्रचतुष्टयादेकमप्यशून्यंकेंद्रंभवति तस्यापिशुभंजन्म अत्रसौम्यग्रहाधिष्ठितेकेंद्रेविशेषेणशुभंजन्म यस्मादुक्तमनेनैव एकस्मिन्नपिकेंद्रे

परिमोप्योनमहोस्तिपाभाया जन्मन्यपवाकर्मेणिनतत्कुभमाहुरानार्याः यस्यजन्मनिकारककारव्याः कारकसत्ताग्रहाभवति तस्यापिशुभजन्म भभय
थागुणाधिस्यतयाशुभतरमेवजन्म ४ अथयेनयोगेनजातोयोवनेसुखीभवति दशापतिफलपाकवैतालीयेनाह मध्येवयसइति गुरुर्जीवः जन्म-
निपत्तराशौचद्रमास्थितः तदधिपति जन्मपः यस्मिन्नह्येजातः तदधिपोलग्नपः एषामन्यतमोयस्यलग्नेकेंद्रेभवति तस्यवयोमध्येसुखप्रदोभवति यौ
वनेसुखीभवतीत्यर्थः अत्रयवनेश्वरः लग्नाधिपोलग्नपतिर्भ्रपेपान्तुस्थेस्याद्बलवान्गुरुर्वा चतुर्षुहोरादिषुसंगतः स्याच्चतुर्थयः कालफलप्रदः
स्यात् पृष्ठोभयेत्यादिदशापतिर्दशाप्रवेशकाले पृष्ठोदयराशिगोमेषवृषधन्विमकराणामन्यतमास्थितोयदाभवति तदास्वदशान्तेफलप्रदोभवति

मध्येवयसन्सुखप्रदाः केंद्रस्थागुरुजन्मलग्नपाः
पृष्ठोभयकोदयर्क्षगास्त्वंततः प्रथमेषुपाकदाः ५

अपोभयोदयेमीनेभवतितदातर्दशामध्येफलप्रदोभवति अथकोदये शीर्षोदयेमिथुनसिंहकन्यातुलावृश्चिककुंभानामन्यतमेयदाभवति तदा
प्रथमदशाप्रवेशसमयेफलप्रदोभवति एवंशुभस्याप्यशुभस्यवापक्तिर्वाच्या दशाकालंविभज्यपरिकल्प्ययस्मिन्कालेतस्यफलपक्तिर्ज्ञायते आद्ये
मध्येत्येयान्तेच चंद्रः सकलयोधनानिकुरुतेपापानिचातोन्यथेति एतत्त्रिधाविभक्तेदशाकालेज्ञेय पूर्वोक्तसर्वदशाफलयोज्य दशापतिः प्रवे
शकालेतियुन्नेवतत्फलददातीत्येतत्कुतःगम्यते यवनेश्वरादिभिः सामान्येनचोक्तं उच्यते भगवतोगार्गिवचनात् तथाच भगवान्गार्गि

...पापानिरिति ५ ५ ७ ५

अथाष्टकवर्गफलस्यकालंपुष्पिताग्रयाह दिनकरेति चारवशात्पाक्तिकालेयस्मिन्राशौशुभमशुभंवाष्टकवर्गफलं दिनकरआदित्यः प्रयच्छति तस्मि
न्राशौप्रवेशकाले आद्येत्रिभागेतिष्ठन्नेवफलंप्रयच्छति एवमेवरुधिरोभौमः गुरुर्जीवः भृगुः शुक्रः एतौगुरुभृगुजौभुवनस्यराशेर्मध्ययातौमध्य
त्रिभागगतौफलप्रदौभवतः रविसुत सौरः शशीचंद्रः एतौरविसुतशशिनौविनिर्गमस्थौराश्यंतत्रिभागस्थौफलप्रदौभवतः शशितनयोबुधः
सर्वकालफलदः सर्वभागस्थोफलप्रदोभवति सर्वस्मिन्नेवराशौयावत्तिष्ठतितावत्फलंशुभमशुभंवायथाप्राप्तंददातीति ६ इतिश्रीमहोत्प
लवि॰ बृ॰ प्रकीर्णाऽध्यायोद्वाविंशः २२ अथातोऽनिष्टाऽध्यायोव्याख्यायते तत्रादावेवदारसुतहीनजन्मज्ञानंशार्दूलविक्रीडितेनाह

दिनकररुधिरौप्रवेशकालेगुरुभृगुजौभुवनस्यमध्ययातौ रविसुतशशिनौवि
निर्गमस्थौशशितनयःफलदस्तुसर्वकाल ६ इतिप्रकीर्णाऽध्यायः २२

लग्नादिति यस्यजन्मनिलग्नात्पुत्रभंपंचमस्थानंशुभग्रहेणस्वपतिनाचप्राप्तंसंयुक्तंभवत्यथवा आलोकितंदृष्टंभवति तस्यापिपुत्रसंपत् अ
स्तीतिवक्तव्यं चंद्राद्वापंचमस्थानंयस्यशुभग्रहेणस्वपतिनावायुतदृष्टंभवति तस्यापिपुत्रसंपदस्ति यस्यलग्नचंद्रयोरुभयोरपिपंचमस्थानंशु
भग्रहेणस्वपतिनावायुतदृष्टंनभवति तस्यपुत्रसंभवः अपुत्रत्ववक्तव्य अत्रकेचिद्द्वादशप्रकारपुत्रंवर्णयंति औरसः क्षेत्रजः दत्तः कृत्रिमः अ-
धमप्रभव गूढोत्पन्नः अपविद्धः पौनर्भवः कानीनः सहोढः दासीप्रभवइति तथाचसारावल्याम् शुभभवनमथशुभसुतंशुभदृष्टंवासु
तर्क्षमिहयेषां तेषांप्रभवःपुंसांभवत्यवश्यंनविपरीतं १ एकतमेगुरुवर्गेशुभराशावौरसोभवेत्सुनः लग्नाच्चंद्राद्यथाबलयुक्ताद्वासि

तोयिवासौम्ये १ सप्तमनवांशतुल्यासौम्यांशेतावतीसदादृष्टा शुभदृष्टेतद्द्विगुणाक्लिष्टापापांशकेतथादृष्टा २ सारसैसौरगुणोद्भु-
धस्पोगुरुकृतार्केदृष्टयोनः क्षेत्रजपुत्रजनयति गौणोपिगुणान्विजदृष्टः ४ पादस्कृतर्क्षमिंदुर्निरीक्षतेयादिशनैश्चरेणसुत दत्तकपुत्रो-
स्ति कृतिमसुधस्यनवस्यात् ५ सप्तमभागेकोजेसौरयुतेपञ्चमेसदाभवने कृत्रिमपुत्रोविद्याच्छेषग्रहदर्शनान्मुक्ते ६ वर्गपञ्चमराशौ
सौरेसूर्यनतनुसंयुक्ते लोहितदृष्टेवाप्योजातश्चकृतापमप्रभवः ७ चंद्रेभौमांशगतेधीस्थेमदावलोकितेभवति गूढोत्पत्तिर्भवेत्पुत्रः शेष
ग्रहदर्शनीयाते ८ तस्मिन्नेवचभौमशनिवर्गस्थेनिरीक्षितेरविणा पुरुषस्यभवतिपुत्रोऽपविद्धइतिचरकमुनिवचनात् ९ शनिवर्गस्थे-
चंद्रेशनियुक्तेपञ्चमेसदासौरे शुक्ररविभ्यादृष्टेपुत्रःपौनर्भवोभवति १० चूडायदार्कसलात्कलादृत्तस्येवपञ्चमेभवने रविदृष्टेप्यथसुहि
ते कानीनःसभवतिपुत्रः ११ वर्गरविचंद्रमसौ कृतगेहेचंद्रसूर्यसंयुक्ते शुक्रेणदृष्टमात्रेपुत्र कथित सहोढस्च १२ पापैर्वीक्षिभिर्युक्ते
पापर्क्षपञ्चमेसदाराशौ जातोपुत्रःपुरुषःसौम्यग्रहदर्शनातीते १३ शुक्रनवांशेतस्मिन्शुक्रेणानिरीक्षितेतत्पत्यानि दासीभवानिवदन्त
द्वैपिकेचिदाचार्याः १४ सितशशिवर्गधीस्थेताभ्यादृष्टेयवापिसंयुक्ते मायणदारिकास्यस्तद्राशिगणोपिवान्ययापुत्राइति १५ एवं
लग्नाच्चंद्राद्वाकलत्रभसप्तमस्थानयस्यशुभेनस्वपतिनावायुतदृष्टंभवति तस्यकलत्रसंपदस्तीतिवक्तव्यं एवलग्नाच्चंद्राद्वायस्यसप्तम
स्थानशुभग्रहेणस्वपतिनापायुतदृष्टंनभवतितस्यकलत्रसंपन्नभवतीतिवक्तव्यं भार्यातस्यनभवतीत्यर्थः यतउक्तं ज्ञेयोन्ययासंभवः
अन्यथातयोः पुत्रकलत्रयोरसंभवः अभावोज्ञेयोज्ञातव्यः अत्रपुत्रकलत्रग्रहणमुपलक्षणार्थं सर्वेषामपितन्वादीनांभावानांलग्नाच्चंद्राद्वा-
स्थितस्येप्या यतोद्वावपितौमूर्तिसंज्ञौ तथाचयवनेश्वरः मूर्तिंचहोराशशिभंचविद्यादिति अथकलत्रस्थानेपिकंचिद्विशेषंवर्णयामि शु

केंदुजीवशशिजैः सकलैस्त्रिभिश्च द्वाभ्यां कलत्रभवने च तथैककेन एषां गृहेपि नगणेप्यविलोकिते वा संति स्त्रियो भवनवर्गखगस्वभावाः १ एवं क्रूरे नांशे लग्नाच्चंद्राद्दे च बलयोगात् शशिरविजयोः कलत्रे भार्या पुंसां पुनर्भूः स्यात् २ भवनाधिपांशतुल्या भवंति नार्यो निरीक्षणाद्वापि एकैव रे विकुजांशे गुरुबुधयोश्चापि या मित्रे ३ प्रायेण चंद्रसितयोर्बलसंयुक्तेथवापि या मित्रे दृष्टे वा बहुपत्न्यो भवति शुक्रे विशेषेण ४ गुरुशुक्रयोः स्ववर्णा रविकुजशशिभानुजे भवंत्यूना शुक्रे वेश्या प्रायाश्चंद्रेपि वदति केतुमालाख्याः ५ पाथेनेत्यादि पाथेनः कन्या तस्मिन्नुदये गते लग्नस्थे

अथानिष्टाऽध्यायः लग्नात्पुत्रकलत्रभे शुभपतिप्राप्तेथवालोकिते चंद्राद्वा यदि संपदस्ति हितयोर्ज्ञेयोन्यथासंभवः पाथेनोदयगे रवौ रविसुतो मीनस्थितो दारहा पुत्रस्थानगतश्च पुत्रमरणं पुत्रावनेर्यच्छति १ उग्रग्रहैः सितचतुरस्रसंस्थितैर्मध्यस्थिते भृगुतनयेथवोग्रयोः सौम्यग्रहैरसहितसंनिरीक्षितजायावधो दहननिपातपाशजः २

तत्र चरश्चावर्के स्थिते रविसुतः सौरः मीनस्थो यदि भवति तदा दारहा भवति दारान्कलत्राणि हंति घातयति तस्य पुरुषस्य जीवत एव भार्यामरणं वक्तव्यम् अस्मिन्नेव योगे पाथोनोदयगे रवौ अवनेः भूमेः पुत्रो भौमः पुत्रस्थाने गतः पंचमे स्थाने गतो मकरे स्थितो भवति तदा पुत्रमरणं कृतविपत्तिं यच्छति ददाति तस्य जीवत एव पुत्रमरणं वक्तव्य १ अथ जीवत एव भार्यामरणयोगत्रयं प्रहर्षिण्याह उग्रग्रहैरिति उग्रग्रहाः आदित्यभौमसौराः तैः सिताच्छुक्राद्यथासंभवं चतुरस्रसंस्थितैः चतुर्थाष्टमगतैः यस्य जन्म भवति तस्य जायावधो भार्याविपत्तिः दहनेनाग्निनाभ

वति तस्यजीवतएवभार्याभिनात्मानव्यापादयति अथवोभयो पापयोः द्वयोर्मध्येशक्रादेकोद्वादशे न्योद्वितीयेभृगुतनयेशक्रेस्थितेजातस्यनिपा
तेनोच्छ्रितपतनाज्जायावधोभवति तस्यजातस्यजीवतएवपतनान्निपतिताभार्याम्रियतइति अथवैकस्मिन्राशावेकेनभुक्तस्थानमतिक्रम्यान्येन
भुज्यमानमप्राप्ययदिशक्रस्यावस्थानंतद्राशिपापद्वयमध्यस्थोभवति अथयस्यजन्मनिसौम्यग्रहयोरन्यतमेनसहितः सयुक्तः शक्रेण
षति नचापितान्निरीक्षितोरफस्तस्यपाशजोजायावधोभवति जीवतएवभार्याद्बन्धनेनात्मानव्यापादयति कैश्चिद्योगद्वयमेतद्व्याख्यात
उभयद्वे सितचतुरस्रसस्थितेरफे मध्यस्थितेभृगुतनयेपवोभयी द्वितीयः सौम्यग्रहैरसहितः सन्निरीक्षितइति योगद्वयविशेषभूत-

लग्नाद्व्ययारिगतयोःशशितिग्मरश्म्यो पत्न्यासहैकनयनस्यवदन्तिजन्म
द्यूनस्थयोर्नवमपञ्चमसंस्थयोर्वाशुक्रार्कयोर्विकलदारमुशन्तिजातम् ३

जायावधोदहननिपातपाशजः इतियोगद्वयेपिविकल्पः तच्चायुक्त यस्माद्भगवान्गार्गिः चतुर्थाष्टमगैः शक्रात्क्षीणशशाङ्कैर्हुताशनात् तेषाद्वयो
मध्यस्थेतथाशक्रेनिपातजः शक्रेसद्योगदृष्टेनेपाशाद्भार्यावधोभवेत् २ अधुनाविकलनयनदारजन्मयोगज्ञानवसंततिलकेनाह लग्ना
ति शशीन्दुः तिग्मरश्मिःसूर्य एतयो लग्नाद्व्ययारिगतयोः एकोव्ययेद्वादशेस्थानेद्वितीयोरिस्थानेषष्ठेपत्न्यासहैकनयनस्यएकाक्षस्यजन्मवद-
न्ति कथयति जातःकाणोभवति नकेवलंयावत् तद्भार्याकाणीभवतीत्यर्थः द्यूनस्थयोरिति शुक्रसूर्ययोर्द्यूनस्थयोः उभयोर्द्वयोरपिसप्तमस्थयोः नवमयो
पञ्चमयोर्वाजातविकलदारमुशन्ति कथयति भार्याहीनाङ्गाभवतीत्यर्थः अथद्यूनस्थयोःनवमपञ्चमसंस्थयोर्वाशुक्रार्कयोः केचिदेवमेवयोगोत्पा

स्थानः तच्चायुक्तम् यस्माद्भगवान्गार्गिः पंचमेनवमेद्यूनेसमेतौसितभास्करौ यस्यस्यात्तांभवेद्भार्यातस्यैकांगविवर्जिता ३ अथाकृतकलत्रवंध्यापति
जन्मज्ञानंमालिन्याह कोणोदयइति कोणेशनैश्चरस्तस्मिन्नुदयेलग्नगतेभृगुतनयेशुक्रे अस्तचक्रसंधौवृश्चिककर्कटमीनानामन्यतमांत्यनवांशकस्थेनकेव
लयावदस्तेलग्नात्सप्तमस्थानस्थेएवमस्तस्थश्चक्रसंधौयदिभवति तदाजातोवंध्यापतिर्भवति वंध्यानिःफलार्तवा एतन्मकरवृषकन्यालग्नेषुसंभवति अ
पुत्रइतिवक्तव्येवंध्यापतिग्रहणेनैतज्ज्ञापयति यथाकौमारेभ्योदारेभ्यः पुत्रोत्पत्तिर्भवत्यविरूढकामेभ्योभवति पापग्रहैरिति पापग्रहैः व्ययस्थानं-
द्वादशं मदस्थानंसप्तमं लग्नराशिरुदयः एतेषुद्वयोरेकस्मिन्वापापग्रहैः यथासंभवंस्थितैः शशिनिचंद्रेक्षीणेधीस्थेलग्नपंचमगे अकृतस्यापुत्र

कोणोदयेभृगुतनयेस्तचक्रसंधौवंध्यापतिर्यदिनकृतर्क्षमिष्ययुक्तं पापग्रहैर्व्ययमदलग्नराशिसंस्थैः क्षीणेशशिन्यसु
तकलत्रजन्मधीस्थे ४ असितकुजयोर्वर्गेस्तगेसितेतदवेक्षितेपरयुवतिगस्तौचेत्सेंदूस्त्रियासहपुंश्चलः भृगुज
शशिनोरस्ते भार्यानरोविकृतोपिवापरिणाततनूनृस्त्र्योर्दृष्टौशुभैःप्रमदापती ५

स्याकलत्रस्यचस्त्रीवर्जितस्यपुत्रभार्यावर्जितस्यजन्मभवति जातस्यनभार्यानपुत्रोभवतीत्यर्थः ४ अथपरयुवतिगजन्मज्ञानंहरिण्याह असिते
ति असितकुजयोः सौरभौमयोः अन्यतमस्यवर्गेसितेशुक्रेस्थिते तस्मिंश्चास्तस्थेलग्नात्सप्तमगेतदवेक्षिततयोरेवसौरारयोरन्यतमेनावेक्षितेदृ
ष्टेजातः परयुवतिगः परदारगामीभवति तौचेदित्यादि तौसौरारावस्तेसप्तमेस्थानेएकराशिस्थितौसेंदूचंद्रसहितौभवतः सितकुजयोःवर्गः त
त्स्थ सितः तदवेक्षितः तदाजातः स्त्रियासहपुंश्चलोभवति सपुरुषः परदारेषुगच्छति तद्भार्यापरपुरुषेषुगच्छति भृगुजशशिनोरित्यादि

दृष्टिविचार नकेवलंयावद्विलग्नांश स्वनाथेनेत्यत्रैवोदाहार्यम् दास्यांजातइत्यादि दितिसुतगुरौशुक्रे रिःफगेलग्नाद्द्वादशस्थेन केवलं यावत्सौर भागेश
नैश्वरनवांशकृत्यवस्थितेदास्यांजातः दासीपुत्रोजातइतिवक्तव्यम् नीचेकेंद्वोरिति अर्केंद्वोः रविशशिनोः द्वयोरपिलग्नान्मदनगतयोः सप्तमस्थान
स्थयोः सूर्यजेनसौरेण दृष्टयोरवलोकितयोः जातोनीचोभवति स्वकुलानुचिताधमकर्मकृदित्यर्थः ६ अथान्यानप्यनिष्टयोगान् शार्दूलविक्रीडि
तेनाह पापालोकितयोरिति सितः शुक्रः अवनिजोऽंगारकः एतयोरस्तयोः लग्नात्सप्तमगतयोरपि पापालोकितयोः पापग्रहदृष्टयोर्जातस्य वाध्यरु
क् भवति सचप्रसिद्धः यत्रतत्रराशौचंद्रेशशिनि कर्कटवृश्चिकांशकयोरन्यतमस्थेतत्रचान्येनपापेनयुतोजातोगुह्यरुग्भवति गुह्यरुक् पुरुषव्या-

पापालोकितयोः सितावनिजयोरस्तस्थयोर्वाध्यरुक् चंद्रे कर्कटवृश्चिकांशकगते पापैर्युते गुह्यरुक् श्वित्री रिःफधन-
स्थयोरशुभयोश्चंद्रोदयस्ते रवौ चंद्रे खे वनिजेस्तगे च विकलो यद्यर्कजो वेशिगः ७ अंतः शशिन्यशुभयोर्मृगगे पतं
गे श्वासक्षयप्लीहकविद्रधिगुल्मभाजः शोषी परस्परगृहांशगयोर्विधात्रोः क्षेत्रेऽथवा युगपदेकगयोः कृशो वा ८

धिः श्वित्रीत्यादि अशुभयोः सौरारयोः रिःफधनस्थयोः द्वादशद्वितीयगतयोः चंद्रे लग्ने उदयस्थे रवावादित्येस्तेसप्तमस्थे जातः श्वित्री श्वेतकुष्ठ
युक्तोभवति चंद्रे खे दशमस्थेऽवनिजे भौमे स्तगे सप्तमस्थे अस्मिन्योगे यद्यर्कजः सौरो वेशिस्थानस्थो भवति तदाजातो विकलोंगहीनो भवति
७ अथान्यानप्यनिष्टयोगान्वसंततिलकेनाह अंतरिति यत्रतत्रस्थे शशिनि चंद्रे अशुभयोः सौरभौमयोरंतर्मध्ये स्थिते पतंगे सूर्ये च मृगगते मक
रस्थे जाताः श्वासक्षयप्लीहकविद्रधिगुल्मभाजो भवंति श्वासः प्रसिद्धः क्षयः शरीरक्षयः प्लीहः प्रसिद्धः वामकुक्षिसंस्थो मांसखंडः क-

विद्रधिगुल्मौरोगोप्रसिद्धो एषामन्यतमेनरोगेणार्दिताभवंतीत्यर्थ केचिदत्रैकवचनपठंति श्वासक्षयप्लीहकविद्रधिगुल्मभाक्स्यादिति शोषीति रवींद्वोश्चंद्रार्कयोः परस्परमन्योन्यगृहांशगयोः आदित्यः कर्कटेसिंहेचंद्रोथवायत्रतत्रराशौसिंहांशकेचंद्रः कर्कटांशेसूर्यः तदाजातः शोषीभवति अत्रकेचित्परस्परगृहांशगयोरवींद्वोरिति सिंहेसिंहांशकेस्थितेचंद्रे कर्कटेकर्कटांशस्थेसूर्येचजातः शोषीक्षयीभवतीतिवर्णयंति तच्चायुक्तम् यस्माद्भगवान्गार्गिः परस्परगृहेयातौयदिचापितदंशगौ भवेतामर्कशीतांशूतदाशोषीप्रजायते १ सेनेयथवेति युगपत्तुल्यकालतयोरेवपर स्परक्षेत्रेयदाद्वावपिभवतः सिंहेयदोभावपि अर्कचंद्रौस्थितौकर्कटेवाभवत तदाजातः शोषीभवति कृशोवाकृशोदुर्बलः ८ अथान्यानप्यनिष्टयोगा

चंद्रेश्विमध्यगसपकार्किमृगांशभागेकुष्ठीसमंदरुधिरेतदवेक्षितेवा
यातेस्त्रिकोणमलिकर्किरूपेमृगेचकुष्ठीचपापसहितेरवलोकितेवा ९

न्सततिनयेनाह चंद्रइति अश्विमध्ये धनिपंचमनवांशकेचंद्रेस्थितेतत्रचसमंदरुधिरे मंदेनसौरेणरुधिरेणांगारकेणयुक्ते यथासंभवमन्यतमे न तदवेक्षितेवाताभ्यामन्यतमेनदृष्टेजातः कुष्ठीभवति अथवायत्रतत्रराशौझषकार्किमृगांशभागे झषोमीनः कर्किःकुलीरः मृगोमकरः अजोमेषः एषामन्यतमेनवांशकस्थेचंद्रेतत्रमंदरुधिरयोरन्यतमेनयुतेदृष्टेवाजातः कुष्ठीभवति अत्रचंद्रोयदाक्रूरग्रहदृष्टोभवति तदाकुष्ठविकारीभवति नचु ष्ठी यस्माद्यवनेश्वरः मीनांशकेमेषमृगांशकेवाचंद्रस्थितोचैवहिपापदृष्टः किलासकुष्ठादिविनष्टदेहमिष्टेक्षितः कडुविकारिणेच १ याते स्त्रिकोणमिति अलिकर्किरूपे वृश्चिककुलीररूपभौ मृगेचमकरेएतेष्वत्रिकोणयातेः पापैः तथाविधोलग्नोभवति यस्यैषामन्यतमेनवमे

पंचमेवास्थानेभवति सचपापानामन्यतमेनयुक्तोदृष्टोवाभवति तदाजातः कुष्ठीभवति ९ अथान्यानप्यनिष्टयोगान्वसंततिलकेनाह निधनेति रविरादित्यः चंद्रःशशी आर अंगारकः यमः सौरः एतेरविचंद्रारयमाः यथातथायेनतेनप्रकारेणनिधनारिधनव्ययस्थिताः अष्टमषष्ठद्वितीयद्वाद शगास्तदाजातानांमनुजानांमनुष्याणामनेत्रतामांध्यंजनयंत्युत्पादयंति यथातथेतिक्रमनिवारणार्थं तांचानेत्रतांबलवद्ग्रहदोषकारणे. तेषांच तुर्णांग्रहाणांमध्याद्योबलवांस्तस्ययोवातपित्तश्लेष्माणांमध्याद्दोषउक्तः तेनदोषकारणेनतत्प्रकोपेनतस्याक्षिविनाशोभवति १० अथान्यानप्य निष्टयोगान्वैतालीयेनाह नवेति अशुभाः पापाः नवमायतृतीयधीयुताः नवमेएकादशेतृतीयेधीस्थानेपंचमे एतेषुयथासंभवंस्थिताः समव

निधनारिधनव्ययस्थितारविचंद्रारयमायथातथा बलवद्ग्रहदोषकारणैर्मनुजानांजनयंत्यनेत्रताम् १०
नवमायतृतीयधीयुतानचसौम्यैरशुभानिरीक्षिताः नियमाच्छ्रवणोपघातदारदवैकृत्यकराश्चसप्तमे ११
उदयत्युडुपेऽसुरास्यगेसपिशाचोऽशुभयोस्त्रिकोणयोः सोपप्लवमंडलेरवावुदयस्थेनयनापवर्जितः १२

स्थिता. तेचसौम्यैः शुभग्रहैरनिरीक्षितानदृष्टाः तदाबलवद्ग्रहदोषकारणैनैवपुरुषस्यनियमान्निश्चयाच्छ्रवणोपघातदाः श्रोत्रयोः कर्णयो. उपघा तदाबाधिर्यकराः अत्राशुभग्रहणेनार्कचंद्रारसौराः प्रागुक्ताएवज्ञेयाः रदवैकृत्यकराश्चसप्तमेइति तएवार्कचंद्रारसौराः लग्नात्सप्तमेस्थानेस्थिताः सौम्यैरदृष्टारदानांदंतानांवैकृत्यकरास्फः ११ अथान्यानप्यनिष्टयोगान्वैतालीयेनाह उदयतीति उडुपेचंद्रेउदयति लग्नगतेतस्मिंश्चासुरास्यगे राहुग्रस्ते तस्माच्चलग्नादशुभयोः सौरभौमयोः त्रिकोणयोः नवमपंचमस्थयोः जातःसपिशाचोभवति पिशाचाधिष्ठितोभवतीत्यर्थः एवंरवा

वादित्ये मडलेसोपप्लुवे अस्मग्रस्यगे अर्के राहु ग्रस्ते तस्मिन्मोदयस्थे लग्नगे लग्नाद्शमयोः सौरभौमयोः त्रिकोणगतयोः जातोनप्रतापवर्जितोभवति अथद्
त्यर्थः १२ अथान्यानप्यनिष्टयोगान् शार्दूलविक्रीडितेनाह सस्पृष्ट इति यस्यजन्मनि मदगः सौरोद्यूनेसप्तमेयुतः स्थितोभवति विलग्नेचगुरुः
बृहस्पतिः सपवनेनवायुनासस्पृष्टोभवति वातरोगीभवतीत्यर्थः अवनि भूः तस्याः जातोवनिजः तस्मिन्नस्तभवने सप्तमेस्थाने स्थिते विलग्ना-
श्रिते प्राग्लग्नगेच जीवेगुरौजातः सोन्मादोभवतिविनिश्चितइति तद्दिति सूर्यसुतः सौरः तस्मिन्नुदयेलग्नेस्थिते अवनिसुतेभौमेधर्मात्मजद्यून

सस्पृष्टःपवनेनमदगःयुतेद्यूनेविलग्नेगुरौसोन्मादोवनिजेस्थितेऽस्तभवनेजीवेविलग्नाश्रिते तद्
त्सूर्यसुतोदयेऽवनिसुतेधर्मात्मजद्यूनगेजातेवासुसहस्ररश्मितनयेक्षीणव्ययेशीतगौ १३ रा
श्यंशपोष्णकरशीतकरामरेज्यैर्नीचाधिपांशकगतैररिभागगैर्वा एभ्योल्पमध्यबहुभिःक्रमशः
प्रसूताज्ञेयाःस्वरभ्युपगमक्रयगर्भदासाः १४ गे नवमपञ्चमसप्तमस्थानानामन्यतमस्थानस्थेजातस्तद्वत्सोन्मा

द एवभवति केचित्तद्वाहु यमोदयइतिपठति अथवाक्षीणेशीतगौ चंद्रेसहस्ररश्मितनयेन शनैश्चरेणसयुक्ते व्ययद्वादशस्थानयातेभा
तेसायहणात्सोन्माद एवभवति १३ अथान्यानप्यनिष्टयोगान्वसततिलकेनाह राश्यंशपेति यस्मिन्नवांशकेचन्द्रोवर्ततेसराश्यंशकःत
स्यपःपतिः राश्यंशपः उष्णकरः सूर्यः शीतकरश्चन्द्रः अमरेज्योजीवः राश्यंशपोष्णकरशीतकरामरेज्यैः आत्मीयादुच्चात्सप्तमराश्यधिपोनीचा
धिपस्तदीयेनीचाधिपतिनवांशकेव्यवस्थितैः अरिभागगैः शत्रुनवांशगतैर्वाजातादासाभवति एभ्योऽल्पमध्यबहुभिरिति एभ्योग्रहेभ्य

एकोल्प द्वौमध्यमो यत्रचत्वारोवाबहवः एभ्यः प्रसूता क्रमशोदासाभवंति यस्यैकोनीचाधिपांशकेशत्रुनवांशकेवागतोभवति सोभ्युपगमेनात्मना जीविताथींदासत्वमुपपद्यते यस्यद्वौसोन्येनक्रीतोविक्रीतः येनक्रीतस्तस्यदासोभवति यस्यत्रयश्चत्वारोवासगर्भदासोदासस्यपुत्रोदास्यावा पुत्रोलोकेगृहदासइतिप्रसिद्धः १४ अथान्येषामनिष्टयोगानांज्ञानार्थंहरिण्याह विकृतेति वृषः प्रसिद्धः अजोमेषः हयोधन्वी एषामुदयेऽन्य तमेलग्ने पापैर्दृष्टेऽवलोकितेविकृतदशनोविरूपदंतोभवति अशःभक्षेत्राणि पापग्रहराशयः मेषसिंहवृश्चिकमकरकुंभाः एषामन्यतमेलग्नेहये धन्विनिवावृषभेपिवालग्नेपापदृष्टेजातः खलतिः खल्वाटोभवति रवावादित्येनवमस्कतगेलग्नान्नवमपंचमयोरन्यतमस्थानस्थेपापग्रहदृष्टे

विकृतदशनःपापैर्दृष्टेवृषाजहयोदयेखलतिरशःभक्षेत्रेलग्नेहयेवृषभेपिवा नवमस्कृतगेपापैर्दृष्टेरवावृदृढेक्ष
णोदिनकरस्कृतेऽनेकव्याधिःकुजेविकलःपुमान् १५ व्ययस्कृतधनधर्मगैरसौम्यैर्भवनसमाननिबंधनंवि
कल्प्यम् भुजगनिगडपाशभृद्दृकाणैर्बलवदसौम्यनिरीक्षितैश्चतद्वत् १६

जातः अदृढेक्षणोभवत्यसारनयनः एवंदिनकरस्कृतेसौरेलग्नान्नवमपंचमस्थेपापैः दृष्टेनेकव्याधिः बहुरोगोभवति एवमेवकुजेभौमेलग्नान्नवम पंचमस्थेपापदृष्टेपुमान्पुरुषोजातोविकलोऽगहीनोभवति१५अथान्यानप्यनिष्टयोगान्पुष्पिताग्रयाह व्ययस्कृतेति असौम्यैः पापैः व्ययस्कृतधनधर्म गैः द्वादशपंचमद्वितीयनवमस्थानानांयथासंभवमन्यतमस्थैः जातस्यनिबंधनंभवति सबध्यतइत्यर्थः तच्चनिबंधनंभवनसमानंराशिसदृशंसप्रा पीयेनप्रकारेणसराशिः बध्यतेतेनप्रकारेणेत्यर्थः तद्यथा मेषवृषधनुर्धराणामन्यतमेलग्नेतस्यरज्वादिनाबंधनंभवति मिथुनकन्यातुलकुंभा

नामन्यतमेऽपेनिगडैः बध्यते कर्कटमकरमीनानामन्यतमेऽपेषधनविनाद्र्ग्गौस्थितोरस्यते वृश्चिकऽभेमूगृहे बध्यते भुजगनिगडपाशभृदिति यस्मिन्द्रे
ष्काणेपुरुषोजातः सनेह्रुजगपाशभृद्भवति सर्पद्रेष्काणोनिगडपाशभृद्द्रेष्काणः सचप्रथमपंचमनवमानामित्यनयागणनयायस्यराशेः सबधीभवति
स्तेद्वाशि बठवताव्यवस्थितः असौम्येनपापग्रहेणान्यतमेनदृश्यतेतयाज्जातस्यतद्बवनसमर्मनिबधनतहत्तेनैवमकारेणाविकल्प्य भुजगद्रेष्काणः
कर्कटाद्यः वृश्चिकाद्य वृश्चिकद्वितीयः मीनात्यश्चनिगडस्यद्रेष्काणोमकराद्यः भुजगनिगडपाशभृदितिकेचिद्व्याख्यातु तत्रपाशभृद्वनेनद्रेष्का-
णोनपठितः तस्माद्भुजगनिगडपाशभृन्निगडपाशभृदितिव्याख्येय भुजगपाशभृन्निगडपाशभृद्भुजगादिभागैर्बठवदसौम्यनिरीक्षिते-

परुषवचनोऽपस्मारार्तः क्षयीचनिशापतौसुरवितनयेवक्राल्लोकगतेपरिवेषगे
रवियमकुजैःसौम्यादृष्टैर्नभस्थलमाश्रितेभृतकमनुजःपूर्वाहृष्टेवराधमसध्य
मा॰ १७ इतिवृहज्जातकविमतावनिष्टोऽध्यायसमासः २२

श्वलहत इतिस्पष्टोभवेदित्यर्थः अस्मिन्स्लोकेपठितइति १८ अथान्यानप्यनिष्टयोगान्हारिण्याह परुषवचनइति निशापतौचंद्रेसरवितनये-
सौरसहितेवक्राल्लोकगतेभौमेनदृष्टेपरिवेषगेतत्कालपरिवेषयुक्तेजातः पुरुषःपरुषवचनःसदाऽप्रियाभिधायी अपस्मारार्तःक्षयीचभवति अ
भर्चंद्रमसस्त्रयः प्रकाराव्याख्याताः त्रयश्चदोषाः यस्यैकप्रकारश्चद्रुपाभवति तस्यैकोदोषोभवति यस्यप्रकारद्वय तेनचंद्रसौरेणयुक्तेपरुषव
नः सदैवापियाभिधायीभवति सरवितनयेभौमदृष्टेअपस्मारार्तोऽपस्मारःमूर्छा सरवितनयेभौमदृष्टेतत्कालपरिवेषगेक्षयीभवति रवियम

कुजैरिति रविरादित्य· यमः सौरः कुजोऽंगारकः एतैः नभस्थलमाश्रितैः दशमस्थानस्थैः सौम्यादृष्टैः शुभग्रहाणांमध्यान्नकेनविदृष्टैरवलोकितैः जातोमनुजोमनुष्योमृतकोभवति तैःपूर्वोद्दिष्टैर्ग्रहैः रवियमकुजैः वराधममध्यमोमृतकोभवति तेषांग्रहाणामेवंविधेनैकेनमृतकोपिवरः श्रेष्ठो भवति अजुगुप्सितांमृतिंकरोति द्वाभ्यांमध्यमोभवति मध्यमांमृतिंकरोति त्रिभिरधमोजुगुप्सितांमृतिंकरोति १७ इतिश्रीभट्टोत्पलवि रचितायांबृहज्जातकविवृतौअनिष्टाध्यायस्त्रयोविंशतिः २३ अथातःस्त्रीजातकाध्यायोव्याख्यायते तत्रादावेवपुरुषजन्मोक्तफलाति देशंतदधिकंचवसंततिलकेनाह यद्यत्फलमिति नरभवेपुंजन्मनियद्यत्फलमंगनानांस्त्रीणामक्षममसंभाव्यंतत्पतिषुतद्भर्तृषुवदेद्ब्रूयात् पुंज

यद्यत्फलंनरभवेक्षममंगनानांतत्तद्वदेत्पतिषुवासकलंविधेयं तासांतुभर्तृमरणंनिधनेवपुस्तु
लग्नेंदुगंशुभगतास्तमयेपतिश्च १ युग्मेषुलग्नशशिनोःप्रकृतिस्थितास्त्रीसच्छीलभूषणयुता
शुभदृष्टयोश्च ओजस्थयोश्चमनुजाकृतिशीलयुक्तापापाचपापयुतवीक्षितयोर्गुणोना २

न्मोक्तंफलंयद्वृत्तातामृदृगित्यादि तत्रयत्स्त्रीणांक्षमंयोग्यं तत्तासामेववक्तव्यं यच्चाक्षमंनसंभवति राज्यादितत्पतिषुतज्जातककाले दृष्ट्वावक्त व्यम् यच्चसंभवति सुनफादियोगानांफलंतदखिलंसकलमुभयोरेववक्तव्यं तानिचत्रिविधानिफलानि कानिचित्स्त्रीणांवक्तव्यानि कानिचित्त त्पतिषु कानिचिद्द्वयोरपि वृत्तातामृदृगित्याकारप्रदर्शनानिस्त्रीणामेववक्तव्यानि राजयोगादिफलानितत्पतिषुतत्पतीनांसुनफादियोगफला नि सुरवदुःखप्रदर्शकानिउभयोरपि अथवा सकलंसमग्रंस्त्रीजातकफलंतत्पतिषुविधेयंवक्तव्यंतासामित्यादि तासांस्त्रीणांनिधनेऽष्टमे-

स्थानेभर्तृमरणंयथावक्तव्यंतयोपरिस्याद्वक्ष्यति वपुस्तुशरीरंलग्नेन्दुगंलग्नचन्द्रयोर्गतं तच्चापितासांयथावक्तव्यं तथावक्ष्यति तासांसुभगता
सौभाग्यंयादृग्भाविपतिर्वाताहृगस्तमयेसप्तमस्थानाद्वक्तव्यं तदपिवक्ष्यति यदुक्तंवपुस्तुलग्नेन्दुगतम् १ पतिदर्शनवसन्ततिलकेनाह
युग्मेत्यादि लग्नशशिनोरुदयचन्द्रयोरपियुग्मेषुसमराशिषुस्थितयोः स्त्रीयोषित्प्रकृतिस्थिता स्त्रीस्वभावाभवति प्रकृतौस्वभावेतिघति
तयोरेवलग्नेन्द्वोः शुभदृष्टयोः सौम्यग्रहावलोकितयोः सच्छीलभूषणयुताभवति सच्छीलंशोभनचारित्रंतदेवभूषणमलंकरणंतेनयुता
अथवाशोभनेनशीलेनभूषणैश्चयुता ओजस्थयोरिति तयोरेवलग्नेन्द्वोरोजस्थयोर्विषमराशिगतयोः मनुजाकृतिशीलयुक्तापुरुषाकारा

कन्यैवदुष्टाव्रजतीहदास्यंसाध्वीसमायाकुचरित्रयुक्ता
भूम्यात्मजर्क्षेक्रमशोंशकेषुवक्रार्किजीवेन्दुजभार्गवाणाम् ३

पुरुषशीलाचभवति तयोःलग्नेन्द्वोः पापयुतवीक्षितयोः पापसंयुतयोः अवलोकितयोर्वापापापापशीलागुणोनासर्वगुणरहिताचभवति अर्था
देवैकस्मिन्समराशिगेअन्यस्मिन्विषमराशिगेपुरुषस्त्रियोर्मध्यस्वरूपाकाराभवति एवमेकस्मिन्शुभग्रहयुतेअन्यस्मिन्पापयुतेसच्छीलाभव-
ति असच्छीलाचमिश्रेत्यर्थः एवमेकस्मिन्शुभग्रहदृष्टेअन्यस्मिन्पापदृष्टेपि एवमुभयोरपिसौम्यासौम्ययुतदृष्टयोश्च अनयादिशाशेषकल्पना
कार्या २ अथभौमर्क्षेलग्नेचन्द्रेवाभौमादित्रिंशांशकजातायाःस्वरूपमिन्द्रवज्रयाह कन्यैवेति भूम्यात्मजर्क्षेभौमक्षेत्रेमेषवृश्चिकयो-
रन्यतमेलग्नगतेचन्द्रगतेपातश्च वक्रार्किजीवेन्दुजभार्गवाणां कुजयमजीवज्ञसितानामंशकेषुत्रिंशांशकेषुक्रमेणफलनिर्देशोवक्तव्यः तद्यथा

भौमलग्नेभौमत्रिंशांशकेलग्नगतेचंद्रगतेवाजाताकन्यैवदुष्टाभवत्यनूढापि सापुरुषसंप्रयोगेचव्रजतिगच्छतीत्यर्थ सौरत्रिंशांशकजाताकन्यैव
दास्यदासभावंव्रजतिजनयति इहास्मिन्भौमक्षेत्रेजीवत्रिंशांशकेसाध्वीसच्छीलाभवति बुधत्रिंशांशकेजातासामायायुक्ताभवति शुक्रत्रिं-
शांशकेजाताकुचरित्रयुक्ताभवति दुर्वृत्ताइति एवंत्रिंशांशकफलंसर्वदागुणनयापरीक्षितव्यम् ३ अथबुधशुक्रक्षेत्रयोरन्यतमेलग्नगेचं
द्रगेवाभौमादित्रिंशांशकजातायाःस्वरूपमिंद्रवज्रयाह दुष्टेति अंशकेषुवक्रार्किजीवेंदुजभार्गवानामितिसर्वत्रानुवर्तते असुरपूजितः
शुक्रस्तस्यक्षेत्रेवृषतुलयोरन्यतमेलग्नगेचंद्रगेवा भौमत्रिंशांशकेजातादुष्टादुष्टशीलाभवति शनित्रिंशांशकेजातापुनर्भूः पाणिग्रहणा

दुष्टापुनर्भूःसगुणाकलाज्ञाख्यातागुणैश्चासुरपूजितर्क्षे
स्यात्कापटीक्लीबसमासतीचबोधेगुणाढ्याप्रविकीर्णकामा ४

दनंतरंअन्यस्यभार्याभवति जीवत्रिंशांशकेजातासगुणागुणवतीभवति बुधत्रिंशांशकेजाताकलाज्ञाभवति गीतवाद्यनृत्यचित्रादिषुकुश-
ला शुक्रत्रिंशांशकेजातागुणैः शीलादिभिः ख्याताभवति स्यात्कापटीत्यादिबोधे मिथुनकन्ययोरन्यतमेलग्नगेचंद्रगेवाभौमत्रिंशांशकेजा-
ताकापटीकपटासक्ताभवति सौरत्रिंशांशकेजाताक्लीबसमानपुंसकतुल्याभवति गुरुःबृहस्पतित्रिंशांशकजातासाध्वीभवति बुधत्रिंशांश
कजातागुणाढ्यागुणबहुलाभवति शुक्रत्रिंशांशकजाताप्रविकीर्णकामाविक्षिप्तमन्मथासर्वपुरुषगामिनीभवतीति ४ ६९ ६९

के यस्मिन्राशौयद्ग्रह त्रिंशांशकेचंद्रमाभवतितद्वत् फलंवाच्यम् योवालग्नेभवति तस्ययस्त्रिंशांशः तद्दशाद्वा कथमुच्यते बलाबलविकल्पेनेत्या
दि चंद्रलग्नयो योबलवान्सयत्रराशौयत्रत्रिंशांशकेभवतिव्यवस्थितः तस्ययदुक्तंफलंतदेवविचिंतयेत् एतदुक्तंभवति अन्यस्मिन्राशावन्य-
स्मिन् त्रिंशांशकेचंद्रमाभवति अन्यस्मिन्राशौअन्यस्मिन्त्रिंशांशकेलग्नात्तदातयोर्योबलवान्सयस्मिन्त्रिंशांशकेभवति तस्यैवफलंवदेत् योब
लरहितस्तस्यफलंनभवतीति ६ अथयस्मिन्योगेजाताःस्त्रीभिःपुरुषाकारसंस्थाभिःसहमदनंशमयति तद्योगद्वयज्ञानंमहर्षिणयाह इक्स
स्थाविति असितःसौरःसितः शुक्रःएतावसितसितौपरस्परांशे अन्योन्यांशगतौ सौरःशुक्रांशगतः शुक्रःसौरांशगतस्तौचपरस्परं इक्संस्थौ

शशिलग्नसमायुक्तैःफलंत्रिंशांशकैरिदं बलाबलविकल्पेनतयोरुक्तंविचिंतयेत् ६ इक्संस्थावसितसितौपरस्परांशे
शौक्रेवायदिघटराशिसंभवोंशः स्त्रीभिःस्त्रीमदनविषानलप्रदीप्तंसंशांतिंनयतिनराकृतिस्थिताभिः ७

अन्योन्यंपश्यतःएकोयोग अथवाशौक्रेराशौवृषतुलयोरन्यतमेलग्नगतेतत्कालंयदिघटराशिसंभवोंशः कुंभनवांशकोदयोभवति तदाद्वितीयो-
योग अस्मिन्योगद्वयेजातास्त्रीअन्याभिरपराभिःस्त्रीभिःयोषिद्भिः नराकृतिस्थिताभिःपुरुषसंस्थानाभिःपुरुषाकारयुताभिःमदनविषानलप्रदी
प्तंकामविषाग्निप्रज्वालितंशांतिंनयति शमयति एतदुक्तंभवति अन्यास्त्रीस्वजघनेनपुरुषरूपेणचर्ममयंलिंगंबध्वापुंवत् तस्यारतिमभिजनयति यतो
तिकामार्त्तत्वात् पुरुषयोगंगंतुंनशक्नोति ७ अथास्तमयेपतिश्चेतियदुक्तंतद्विज्ञानंशार्दूलविक्रीडितेनाह शून्यंति लग्नाच्चंद्राद्वायः सप्तमोरा-
शि सयदिशून्यः सर्वग्रहवियुक्तोभवति अबले बलहीनश्चतस्मिन्नस्तभवने शून्ये अबलेचबलरहितेतथासौम्यैः शुभग्रहैरनिरीक्षितेनकेन

निच्छमपदेणदृश्यमानेनकेननिर्म्मोध्यग्रहणशुतेजातायाः भर्त्ताकापुरुषः कुत्सितपुरुषोभवति अथवालमात्रग्रहाद्य सप्तमोराशिस्तत्रबुधमन्दयो
रेमाग्चारः यतमेस्थितेजातायाः भर्त्ताक्लीबः पुरुषाकाररहितोभवति यस्याश्चरगृहेनरराशिःसप्तमेभवति तस्या नित्यसर्वकालमर्त्ताप्रवासान्वितः प्र
वासशीलोभवति अर्थादनस्थिरेसप्तमेनित्यगृहेस्थितोभवति हि स्वभावेकिंनित्यवासेकिंचिद्गृहेस्थितोभवति उत्सृष्टारविणाकुजेनविधवेति
नगणोरवावस्तस्थितेसप्तमगेजातापतिनात्सृष्टाभर्त्रात्यक्ताभवति एवंकुजेसप्तमगतेतस्मिन्नाशुभे पापे वीक्षितेवाल्येविधवाङ्काविगतभर्तृकाभव
ति अर्कनन्दनेमारयुनेसप्तमगेतस्मिन्नाशुभे पापेर्वीक्षितेदृष्टेकन्येरजरामुपगच्छति कुमार्येवस्थाभवति वृद्धत्वप्राप्नोतीति विवाहनकरोतीत्यर्थ

शून्येकापुरुषोबलेस्तभवनेसौम्यग्रहावीक्षितेक्लीबोस्तेबुधमन्दयोश्चरगृहेनित्यप्रवासान्वितः उत्सृष्टार
विणा कुजेनविधवावाल्येऽस्तराशिस्थितेकन्यैवाशुभवीक्षितेर्कतनये द्यूनेजरांगच्छति ८

अथचन्द्रलग्नयोर्यन्त्रयशादेतद्वक्तव्य ८ ननुचन्द्रात्सप्तमस्थानादप्येतत्फलकथमवगम्यते उच्यते सप्तमेस्थानेचन्द्रमसः फलदर्शनाभावात् पुनर
पिजातापीरशीभविष्यतीतितद्व्यानशार्दूलविक्रीडितेनाह आग्नेयैरिति एकैकस्मिन्पापग्रहेसप्तमेफलमुक्तं यदिबहवः आग्नेयाःकूराःसप्तमस्था
स्युर्यदि तदामतिमदोक्तफलं य ग्रहैराग्नेयैरस्तगराशिसंस्थितैः विधवाभवति मिश्रैःकूरे सौम्यश्चसप्तगम्येःपुनर्भूर्भवेत् स्वपाणिग्राहिणात्यक्ता अन्यस्यभ
र्यांभगतीपर्य हिमनुना तयाचभ्रयातोपुनर्भूलक्षणयुक्तमीरिणीस्वपतिंहित्वासवर्णाकामतःश्रयेत् अक्षतचभजाद्यास्पुनर्भूसंस्कृतपुनः क्रूरइति

क्रूरआदित्यांगारकशनैश्चराणामन्यतमेऽस्तगेलग्नात्ससमस्थेतास्मिंश्चहीनेबलेसर्वबलरहितेतथाभूतेसौम्येक्षितेशुभग्रहाणांबुधगुरुसितानामन्यतमेन दृष्टेजातास्वपतिनाआत्मीयेनैवभर्त्राप्रोज्झितात्यक्ताभवति अन्योन्यांशगयोरिति सितःशुक्रः अवनिजोआरकःएतयोःसितावनिजयोःअन्योन्यांशगयोः परस्परनवांशकस्थितयोः यत्रतत्रराशौसितनवांशकेभौमोभौमनवांशकेशुक्रः तदासांगनास्त्रीअन्यप्रसक्तापरपुरुषरताभवति अथवाद्यूनेलग्नात्स प्तमेस्थानेतावेवयद्यंगारकशुक्रौशीतरश्मिसहितौ चंद्रसहितौभवतस्तथाप्यन्यपुरुषासक्ताभवति किंतुभर्तुरनुज्ञयापत्युराज्ञयेति नतुस्वातंत्र्येणेति ९ अथयेनयोगेनजातामात्रासहबंधकीभवति येनचरुग्दितयोनिर्येनचसुभगातद्योगत्रयंमालिन्याह सौरारर्क्षेइति सौरःशनैश्चरः तद्दृक्षेमकरकुं

आग्नेयैर्विधवास्तराशिसहितैर्मिश्रैःपुनर्भूर्भवेत्क्रूरेहीनबलेऽस्तगेस्वपतिनासौम्येक्षितेप्रोज्झिता अन्योन्यां
शगयोःसितावनिजयोरन्यप्रसक्तांगनाद्यूनेवायदिशीतरश्मिसहितौभर्तुस्तदानुज्ञया ९ सौरारर्क्षेलग्नगे
सेंदुशुक्रेमात्रासार्द्धंबंधकीपापदृष्टे कौजेऽस्तांशेसौरिणाव्याधियोनिश्चारुश्रोणीवल्लभासद्ग्रहांशे १०

भौ आरोभौमस्तदृक्षे मेषवृश्चिकयोरेषामन्यतमेलग्नगतेतस्मिंश्चसेंदुशुक्रेइंदुनाचंद्रेणशुक्रेणचसंयुक्तेतथाभूतेपापदृष्टे पापग्रहावलोकितेजाता बंधकीपरपुरुषगामिनीभवति नकेवलयावन्मात्रासार्द्धंजनन्यासहबंधकीजातातन्मातापिबंधकीपरपुरुषगामिनीभवति अस्तांशेलग्नात्सप्त मेस्थानेयोराशिस्तत्कालंकौजोभौमनवांशकोभवति तस्मिंश्चकौजेऽस्तांशेसौरिणारविजेनदृष्टेजाताव्याधियोनिःसरोगभगाभवति यदुक्तं सुभगतास्तमयेतदर्थमाह चारुश्रोणीवल्लभासद्ग्रहांशइति यदा लग्नात्ससमेस्थानेसद्ग्रहस्यशुभग्रहस्यनवांशकोदयोभवति तदाचारुश्रो

यत्रान्यसंबंधीराशि ससमेभवति अन्यसंबंधीनवांशश्चतत्रग्रहयंशपयो: योबलवांस्तदीयंफलंवाच्यमिति १२ अथचंद्रशुक्रबुधानांद्वौत्रयोवाल-
ग्नगतायस्याभवंतितस्याःस्वरूपंवसंततिलकेनाह ईर्ष्येति यस्याःजन्मलग्नेशशिशुक्रौचंद्रसितौसमेतौभवतः साईर्ष्यान्वितामात्सर्ययुक्ता
सुखपरास्रुखासक्ताचभवति ज्ञेंद्वो बुधचंद्रयोःलग्नगतयोः कलासुनिपुणातज्ज्ञासुखितासंजातसुखाभवति गुणाढ्यागुणबहुलाचशुक्र
ज्ञयोःसितबुधयोर्लग्नगतयोरुचिरादर्शनीयासुकांतासुभगाभर्तृवल्लभाकलाज्ञाचभवति त्रिष्वपीति यस्यास्त्रयोपिचंद्रबुधशुक्रालग्नगताभ

ईर्ष्यान्वितासुखपराशशिशुक्रलग्नेज्ञेंद्वोःकलासुनिपुणासुखितागुणाढ्या शुक्रज्ञयोस्तु
रुचिरासुभगाकलाज्ञात्रिष्वप्यनेकवसुसौख्यगुणाशुभेषु १२ क्रूरेष्टमेविधवतानिधनेश्व
रांशेयस्यस्थितोवयसितस्यसमेप्रदिष्टा सत्स्वर्थगेषुमरणंस्वयमेवतस्याःकन्यालिगोह
रिषुचाल्पसुतत्वमिंदौ १४ वंतिसाऽनेकवसुसौख्यगुणा अनेकैर्वसुभिःधनैःसौख्यैरनेकैर्बहुभिश्चगुणैर्युक्ता

भवति अपिशब्दात्त्रिषुशुभेषुबुधगुरुसितेषुलग्नगतेषुजाता अनेकवसुसौख्यगुणाभवति १३ अत्रपूर्वतासांभर्तृमरणमितियदुक्तंतद्विज्ञान
वसंततिलकेनाह क्रूरेष्टमइति यस्याःक्रूरग्रहोष्टमेस्थानेभवतितस्याविधवताभवति कस्मिन्कालइत्याह निधनेश्वरांशेयस्येति निधनेश्वरोष्ट
मस्थानाधिपतिर्यस्यग्रहस्यनवांशकेभवति तस्यग्रहस्ययस्तास्मिन्वयसिविवाहात्परतस्तस्याः वैधव्यंवक्तव्यं एकंद्वोनवविंशतिरित्यादिग्रहवयः
एवकेचिद्वदंति वयंपुनः दशांतर्दशाकालंवयः शब्देनब्रूमः यत्रनिधनेश्वरश्चंद्रभौमयोरन्यतमेंऽशेभवति तत्रचंद्रभौमयोर्वयः प्रमाणंवर्षत्रितयं

स्तेसमस्थेयद्यन्यः कश्चिद्ग्रहोलग्नान्नवमगतोभवति तदासास्त्रीप्रागुक्तंफलनप्राप्नोति नवमगतस्यग्रहस्यतुल्यांतत्कथितांप्रव्रज्यांयुवतिः
स्त्रीअसंशयेननिःसंशयेनोपैतिप्राप्नोति एवंस्त्रीजातकव्याख्यातं उद्वाहेइति अत्रयेयोगाव्याख्यातास्तेचेदुद्वाहेविवाहकालेभवंति तदा
योगोक्तफलंवाच्यं तथातस्यावरणविधौकन्यामार्गणकालेप्रदानकालेकन्यादानकालेचचिंतायांप्रश्नकालेप्येवंसकलंसर्वंविधेयंवक्तव्यम्
स्त्रीजातकेषुयेशुभाशुभयोगाउक्तास्तेऽत्राभिस्तुभाऽशुभावक्तव्याः नसकलजातकोक्ताः तेचयथाप्रदर्शितकालेनैवज्ञेयाः येषांचवक्ष्यमाणविवा
हपटलोक्तयोगैर्बाधोभविष्यति तेत्रनवक्तव्याः युक्तयेतद्विवाहपटलमुक्तमिति १६ इतिश्रीभट्टोत्पलविरचितायांबृ० स्त्रीजातका० श्चतु० २४

पापैस्तेनवमगतग्रहस्यतुल्यांप्रव्रज्यांयुवतिरुपैत्यसंशयेन उद्वाहेवरणविधौप्रदानकाले
चिंतायामपिसकलंविधेयमेतत् १६ इतिबृह० स्त्रीजातकाध्यायश्चतुर्विंशतिः २४

अथातोनैर्याणिकाऽध्यायोव्याख्यायते तत्रादावेवाष्टमेस्थानेग्रहदृष्टेवियुक्तेयुतेवायथाम्रियतेतद्विज्ञानंशार्दूलविक्रीडितेनाह मृत्युरिति व
लिभिर्ग्रहैर्मृत्युगृहेक्षणेनमृत्युर्भवति यस्यजन्मलग्नान्मृत्युगृहंषष्ठमस्थानंभूत्ययोग्रहोबलवान्पश्यतितस्यग्रहस्ययोधातुरुक्तस्तद्धातुको-
पोद्भवस्तेनधातुनाप्रकुपितेनसम्म्रियते तद्यथाऽर्कस्यपित्तंचंद्रस्यवातकफौ भौमस्यपित्तं बुधस्यत्रयोपिवातपित्तश्लेष्माणः बृहस्पतेः कफः शु
क्रस्यवातकफौ सौरस्यवातइति तत्संयुक्तभगात्रजइति तदित्यनेनलग्नादष्टमस्थानस्यपरामर्शः तेनाष्टमेनयुक्तंयद्भगात्रं तत्संयुक्तभगात्र
लज्जातस्तत्संभूतः लग्नादष्टमोराशिः यस्मिन्नंगेकालाख्यपुरुषस्यवर्ततेतस्मिन्नंगेदृष्टग्रहोक्तदोषकोपान्म्रियते भूरिभिर्बहुभिः

वीर्यान्वितौ सबलौ बहुभवोमृत्युः यदाबहवोपिवीर्यान्विताःतच्छून्यमष्टमस्थानपश्यतितदायावतःपश्यति तावतायद्गुणासुक्तदोषप्रकोपेनतेनबहवो
दोषायस्मिन्कालेपुरुषांगलग्नादष्टमराशिर्वर्त्ततेतस्मिन्नंगेप्रकुप्यनिधनंकुर्वंतीति अग्न्यम्बुशस्त्रायुधजइति सूर्यादिभिरष्टमेस्थानेस्थितैरग्न्यादिभिर्मृत्यु
र्भवति तद्यथा यस्यलग्नादष्टमेस्थाने$^{\circ}$र्कोभवति तस्याग्निहेतुकोमृत्युर्भवति एवंचंद्रेऽष्टमेऽम्बुहेतुकः भौमेआयुधहेतुकः बुधेज्वरहेतुकः
जीवेआमयकृतः क्षुत्तृष्णातव्याधिहेतुकः शुक्रेक्षुद्हेतुकः सौरेक्षुद्हेतुकइति एतैर्ग्रहैर्बलिभिर्यथोक्तएवमृत्युः शुभेनकर्मणाभवति बल-
हीनैरशुभेनमध्यबलैर्मध्यमेनेतिविज्ञातमरणप्रकारस्यमरणदेशज्ञानार्थमाह निधनेचरादिष्विति यस्यनिधनेऽष्टमेस्थानेचरराशिर्भवति

अथनैर्याणिकाध्यायप्रारंभः मृत्युर्मृत्युगृहेक्षणेनबलिभिस्तद्धातुकोपोद्भवस्तत्संयुक्तभगात्रजोबहुभवोवीर्यान्वितै
र्भूरिभिः अग्न्यम्बायुधजोज्वरामयकृतस्तृट्क्षुत्कृतश्चाष्टमेसूर्याद्यैर्निधनेचरादिषुपरस्वाध्वमदेशेष्विति १

सपरदेशेम्रियतेयस्यस्थिरः सस्वदेशेयस्यद्विस्वभावःसोध्वप्रदेशेपथिम्रियतइति १ अथशैलाग्राभिघातेपुयैर्योगैर्म्रियतेतान् शार्दूलवि
क्रीडितेनाह शैलाग्राभिहतस्येति सूर्यकुजयोः रविभौमयोः युगपत्तुल्यकालस्वबंधुस्थयोर्दशमयोश्चतुर्थयोर्वाजातस्यशैलाग्राभिहत
शिलाप्रहारेणहतस्यमृत्युर्भवति कूपइति मदशशांकभूमितनयैः सौरेंदुभौमैर्यथासंख्यंबंध्वस्तकर्मस्थितैश्चतुर्थसप्तमदशमस्थैः त
द्यथा सौरेचतुर्थगेचंद्रेसप्तमगेभौमेदशमगेजातःकूपपतितोम्रियते कन्यायामिति हिमोष्णकरयोश्चंद्रार्कयोः कन्यायांस्थितयोःस्वपाप
ग्रहदृष्टयोर्जातःस्वजनेनम्रियते स्वजनेनव्यापाद्यते उभयोदयेहि स्वभावराशावुदयेलग्नगतेतत्रचार्कशशिनोरथचंद्रोयदास्यातामथेतात

दातोयेजलेमज्जितोमग्नोम्रियते २ अथान्यानपिमृत्युयोगान्शार्दूलविक्रीडितेनाह मंदेइति मंदेशनैश्चरेकर्कटगेकुलीरस्थेमृगांकेचंद्रेमृगे मकरस्थितेजातस्यजलोदरकृतोजलोदरेणमृत्युर्भवति शस्त्राग्निप्रभवइति शशिनिचंद्रेकुजर्क्षेमेषवृश्चिकयोरन्यतमस्थेतत्रचाशुभयोर्द्वयोः पापयोर्मध्यस्थेजातस्यशस्त्राग्निप्रभवः शस्त्रेणाग्निनावाप्रभवति तत्कृतोमृत्युः कन्यायामिति शीतगौचंद्रेकन्यायांतद्वत्स्थितेपापद्वय मध्यगतेजातस्यरुधिरोत्थशोषजनितोमृत्युर्मरणंभवति दुष्टेनरक्तेनशोषेणवाउत्थितोजनितः उत्पन्नः सौरर्क्षइति हिमगौचंद्रेसौरर्क्षे=

शैलाग्राभिहतस्यसूर्यकुजयोर्मृत्युःखबंधुस्थयोः कूपेमंदशशांकभूमितनयैर्बंध्वस्तकर्मस्थितैः
कन्यायांस्वजनाद्धिमोष्णकरयोःपापग्रहैर्दृष्टयोः स्यातांयद्युभयोदयेर्कशशिनौतोयेतदाम्रज्जितः २
मंदेकर्कटगेजलोदरकृतोमृत्युर्मृगांकेमृगेशस्त्राग्निप्रभवःशशिन्यशुभयोर्मध्येकुजर्क्षेस्थिते
कन्यायांरुधिरोत्थशोषजनितस्तद्वत्स्थितेशीतगौसौरर्क्षेयदितद्वदेवहिमगौरज्ज्वग्निपातैःकृतः ३

मकरकुंभयोरन्यतमस्थेतद्वत्तस्मिंश्चपापद्वयमध्यगतेयदिचेज्जातस्तदारज्ज्वाग्निपातैः रज्ज्वाग्निनापाताद्वाम्रियतइति ३ अथान्यानपिमृत्यु योगान्शार्दूलविक्रीडितेनाह बंधाद्धीनवमस्थयोरिति अशुभयोर्द्वयो. पापयोर्धीनवमस्थयोःपंचमनवमस्थानस्थयोस्तयोश्चसौम्यग्रहैर दृष्टयोरनवलोकितयोर्जातः बंधाद्बंधनेनम्रियते द्रेष्काणैरिति येनलग्नेनपुमान्जातस्तस्मादष्टमेस्थानेयोराशिस्तत्कालंवर्तते तत्रयदि- सपाशसर्पोद्रेष्काणोभवतिसनिगडोवातदाजातः बंधनेनम्रियते तत्रभुजगपाशभृद्द्रेष्काणः कर्कटाद्यः वृषद्वितीयः कन्यातिमश्च

कन्यायामिति मीनलग्नजातः कन्यायामस्तगे सप्तमस्थे चंद्रे तस्मिन्श्चाशशाङ्कान्विते केनान्वितापेन सहिते सितेशुक्रे मेषगे सूर्ये रवौ लग्नगते जातस्य म
रणमंदिरगृहे स्त्रीहेतुकस्त्रीनिमित्तं विद्धि जानीहि ४ अथान्यानपि मृत्युयोगान् शार्दूलविक्रीडितेनाह शूलोद्भिन्नतनुरिति कर्क्येन
तृ पस्थाने ५ शनिकृते मेषे स्थिते सूर्ये पिवादर्ति रवौ चतुर्थस्थे दशमे स्थाने यदि यमः सौरो भवति तदा जातः शूलोद्भिन्नतनुर्म्रियते
शूलेनाद्भिन्ना तनुर्यस्य शूलभेत्तस्य तस्य मरणं भवति सप्रक्षीणेति पापैः रविभौमसौरैः सप्रक्षीणहिमांशुभिरतिक्षीणचंद्रसंयुक्तै

बंधाद्दीनवमस्थयोरशुभयोः सौम्यग्रहादृष्टयोर्दृष्काणेश्वसुसर्पपाशनिगडे छिद्रस्थिते बंधतः
कन्यायामशशाङ्कान्वितस्तमयगे चंद्रे सिते मेषगे सूर्ये लग्नगते च विद्धि मरणं स्त्रीहेतुकं मंदिरे ४
शूलोद्भिन्नतनुः ककेवनिसुतेसूर्यपिवार्येयमे सप्रक्षीणहिमांशुभिश्च युगपत्पापैस्त्रिकोणाद्यगे
बंधुस्थेन रवौ वियत्यवनिजे क्षीणेंदुसंवीक्षिते काष्ठेनाभिहतः प्रयाति मरणं सूर्यात्मजेनाक्षिते ५

युगपत्तुल्यकालं त्रिकोणाद्यगैः पंचमनवमलग्नस्थैः एतदुक्तं भवति सक्षीणचंद्राणां पापानामेतत्स्थानत्रयमुक्त्वा न्यत्रावस्थितिर्न भवति
तदा चकाराच्छूलोद्भिन्नतनुर्म्रियते बंधुस्थेनेति रवौ सूर्ये बंधुस्थे न याच्चतुर्थगे वियति दशमे अवनिसुते भौमे स्थिते तस्मिन्श्च क्षीणेंदु
ना क्षीणचंद्रेणासंवीक्षिते तदा जातश्चकाराच्छूलोद्भिन्नतनुर्म्रियते अस्मिन्नेव योगे चतुर्थगे रवौ दशमस्थे भौमे तस्मिन्श्च सूर्यात्मजेन शने
श्चरेणेक्षिते दृष्टे जातः काष्ठेनाभिहतः काष्ठपातेन ताडितो मरणं प्रयाति प्राप्नोतीत्यर्थः ५ ५ ५ ५

अथान्यानपिमृत्युयोगान्वसंततिलकेनाह रंध्रास्पदेति रंध्रमष्टमंस्थानं आस्पदंदशमं अंगंलग्नं हिबुकस्थानंचतुर्थं एतैरंध्रास्पदांगहिबुकैर्यथा-
संख्यप्रक्षीणचंद्ररुधिरार्किदिनेशयुक्तैः एतदुक्तंभवति अतिक्षीणश्चंद्रोऽष्टमेरुधिरोभौमः दशमेआर्किः सौरोलग्नेदिनेशोरविश्चतुर्थेएवंविधेयोगे
जातोलगुडहतांगोलगुडताडितावयवोम्रियते केचित्पठंतिलगुडाहतांतइति लगुडाहतोभवति तैरेवेति तैरेवग्रहैः प्रक्षीणचंद्ररुधिरार्किदिनेशैःय
थासंख्यंकर्मनवमोदयपुत्रसंस्थैः दशमनवमलग्नपंचमस्थैः क्षीणचंद्रमादशमेभौमोनवमे सौरोलग्ने अर्कःपंचमेयदिभवति तदाजातस्यधूमेनाग्नि

रंध्रास्पदांगहिबुकैर्लगुडाहतांगःप्रक्षीणचंद्ररुधिरार्किदिनेशयुक्तैः तैरेवकर्मनवमोदयपुत्र
संस्थैर्धूमाग्निबंधनशरीरनिकुट्टनांतः ६ बंधस्तकर्मसहितैःकुजसूर्यमंदैर्निर्याणमायुध
शिखि क्षितिपालकोपात् सौरेंदुभूमितनयैःस्वसुखास्पदस्थै र्ज्ञेयः क्षतक्रिमिकृतश्चशरी
रघातः ७

नाबंधनेनशरीरनिकुट्टनेनकाष्ठादिनाप्रहरणेनवा तस्यमृत्युर्भवति ६ अथान्यानपिमृत्युयोगा
न्वसंततिलकेनाह बंधस्तकर्मसहितैरिति कुजोऽगारकः सूर्योरविः मंदःसौरः एतैर्यथासंख्यंबंधस्तकर्मसहितैः चतुर्थसप्तमदशमस्थैः चतु
र्थेभौमः सप्तमेसूर्यः दशमेसौरः यस्यजन्मनिभवति तस्यायुधेनखड्गादिनाशिखिनाग्निनाक्षितिपालकोपेननृपक्रोधेनवाएषामन्यतमेननिर्याणंमृ-
त्युर्भवति सौरेंदुभूमितनयैः शनिशशिभौमैः यथासंख्यंस्वसुखास्पदस्थैर्द्वितीयचतुर्थदशमस्थैर्द्वितीयेसौरः चतुर्थेचंद्रः दशमेभौमः यस्यजन्मनि-
भवति तस्यक्षतक्रिमिकृतः क्षतेछिद्रेक्रमयः कीटाउत्पद्यंते तत्कृतश्चशरीरपातोभवति क्षतक्रिमिभिः पतितैर्मृत्युर्भवति ७ ६ ७

अथान्यानपिमृत्युयोगान् शार्दूलविक्रीडितेनाह रूपस्थइति अर्केशौरवस्येदृशमुस्थानगतेकुजेरसातलगतेचतुर्थस्थेजातस्ययानप्रपातात् वाहना
त्पतितस्यवधोमृत्युर्भवति यन्त्रोत्पीडनजइति कुजेऽङ्गारकेऽस्तमयगेसप्तमस्थेसौरेहिनाम्बुक्रमेसोरश्चेदुश्चेनश्वेतेसौरेहिना शनिचन्द्ररविभिरम्बु
रूपेलग्नेस्थितैःजातस्ययन्त्रोत्पीडनजोवधः यन्त्रपीडितोम्रियते केचित्क्षीणेहिनाम्बुक्रमेइतिपठति क्षीणेन्दुःक्षीणचन्द्रमाइनआदित्यःआर्किसौरःए
तैःलग्नेस्थितैःजातस्ययन्त्रोत्पीडनजोवधः विण्मध्यइति रुधिरोङ्गारकःआर्किसौरःशीतकिरणश्चन्द्रःएतेयथासंख्यंजूकाजसौरर्क्षगाःजूकस्तुल
तोमेषःसौरर्क्षेमकरकुम्भौतेनतुलेकुजोभौमःमेषेसौरःमकरकुम्भयोरन्यतमेचन्द्रःएवंयस्यजन्मनिभवति सविण्मध्येऽमेध्यमध्येम्रियते यातैर्वै

रूपस्थेऽर्केरवौकुजेरसातलगतेयानप्रतापाद्वधोयन्त्रोत्पीडनजःकुजेऽस्तमय
गेसौरेहिनाम्बुक्रमे विण्मध्येरुधिरार्किशीतकिरणेजूकाजसौरर्क्षगैः
तैर्वागलितेन्दुसूर्यरुधिरैर्व्योमास्तबन्धात्क्षयात् ८

ति गलितेन्दुःक्षीणचन्द्रःसूर्यआदित्यःरुधिरोङ्गारकःएतैर्यथासंख्यंव्योमास्तबन्धात्क्षयात् यातैःप्राप्तैःव्योम्निदशमेक्षीणचन्द्रःअस्तमयेसप्तमेसू
र्यःबन्धाद्येबन्धुसंज्ञकेचतुर्थेभौमे पक्षित्याक्षयसंज्ञायस्य एवंयस्यजन्मनिभवतिसवायुग्रहणात्विण्मध्येम्रियते ८ अथान्यानप्यनिष्टयोगान्
वैतालीयेनाह वीर्यान्वितेति क्षीणेन्दौक्षीणचन्द्रेवीर्यान्वितेनसुबलेनवक्रेणभौमेनदृष्टेवीक्षितेःकेन्द्रेसौरेनिधनस्थितेःरूपेजातस्यगुह्योद्भवरो
गपीडयागुदेपायुरुत्पन्नःरोगोगस्तत्पीडयाःशीघ्रमगन्दरार्शःकृमिशस्त्रदाहजःस्फिक्शस्त्रजःदाहजःअर्शोभगन्दररोगजोपात् कृमिपाते

नशस्त्रकर्मणावादाहेनवाक्रियमाणेनतस्यमृत्युर्भवति ९ अथान्यानपिमृत्युयोगान्वसंततिलकेनाह अस्तेरवाविति अस्तेसप्तमेरवावादित्येसरु-
धिरेणभौमेनसंयुक्तेस्थितेऽर्कपुत्रेसौरेनिधनेऽष्टमेक्षीणोहिमगोचंद्रेरसातलगतेचतुर्थस्थानस्थेजातःस्वगांतोभवति खगःपक्षीतत्कृतोमृत्युर्भव
ति तस्यमृतस्याग्निसंस्कारोनभवतीत्यर्थः लग्नात्मजाष्टमेति इनःसूर्यः भौमःकुजःमंदःसौरः चंद्रःशशांकः एतैर्यथासंख्यंलग्नात्मजाष्टमतपः सु
स्थितैः लग्नपंचमाष्टमनवमस्थैः तेनलग्नेर्कःपंचमेभौमः अष्टमेसौरः नवमेचंद्रोयस्यजन्मनिभवति तस्यशैलशिखरात् पर्वतमस्तकात् पतितस्याश

वीर्यान्वितवक्रवीक्षितेक्षीणेंदौनिधनस्थितेऽर्कजे गुह्योद्भवरोगपीडयामृत्युःस्यात्कृमिश
स्त्रदाहजः ९ अस्तेरवौसरुधिरेनिधनेर्कपुत्रेक्षीणेरसातलगतेहिमगौखगांतः लग्ना
त्मजाष्टमतपस्विनभौममंदचंद्रैस्तुशैलशिखराशनिकुड्यपातैः १०

निपातेनचोल्कयावज्रपातेनकुड्यपातेनभित्तिपातेनवामृत्युर्भवति १० अथयस्यजन्मन्येतेषांयोगानांमध्यादन्यतमोयोगोनभवति नचाष्टमे-
स्थानेकश्चिद्ग्रहोभवति नचाष्टमंस्थानंकश्चिद्ग्रहःपश्यतितन्मृत्युकारणंवैतालीयेनाह द्वाविंशइति येनद्रेष्काणेनपुमान्जातस्तस्माद्योद्वाविंशोद्रे-
ष्काणोभवति ससूरिभिः पंडितैः निधनस्यमृत्योःकारणनिमित्तंकथितः कथमित्याह तस्याधिपतिरित्यादि तस्यद्वाविंशस्यद्रेष्काणस्ययोधिप
तिर्ग्रहस्तस्याग्न्यंबायुधजइत्यादि स्वगुणैर्योहेतुःपठितस्तेननिर्याणंमरणंप्रयच्छतिददाति अथवायस्मिन्राशौसद्वाविंशोद्रेष्काणोभवति तस्यराशे

र्यो स्वामीतत्सम्भवोभवति सवास्वगुणैरात्मीयहेतुभिः निर्याणमरणम्प्रयाति स्वद्वाविंशोद्रेष्काणोलग्नादष्टमराशौभवति सकथज्ज्ञायतेऽस्यपते यदिलग्नस्यप्रथमोद्रेष्काणस्तदाष्टमस्यापि प्रथमोथलग्नस्यद्वितीयस्तदाऽष्टमस्यापिद्वितीयोऽथलग्नस्यतृतीयस्तदाऽष्टमस्यापितृतीय नकेवल यावत्सर्वराशीनामेवव्यवस्था अनेनक्रमेणप्रकारेणयोऽष्टमराशि द्रेष्काणःसएवद्वाविंशोद्रेष्काणइति तत्रैतज्जात यस्योक्तयोगानामन्यतमोयोगो नभवति नचाष्टमस्थानग्रहयुतवीक्षिततस्यद्वाविंशद्रेष्काणाधिपाष्टमराश्यधिपयोर्यौबलवास्तदुक्तदोषेणमृत्युरिति ११ अथयादृग्भूमौम्रियतेतद्वि

द्वाविंश कथितस्तुकारणद्रेष्काणोनिधनस्यसूरिभि
तस्याधिपतिर्भवोपिवानिर्याणास्वगुणे प्रयच्छति ११

ज्ञानवसंततिलकेनाह होराणवांशेति पुरुषस्यजन्मसमयेहोरायालग्नेयोनवांशकोभवति तस्ययोधिपतिः ग्रहस्तेनयोयुक्तोराशि सराशिर्यत्र स्थितइत्यर्थो तस्यराशेर्यायोग्याभूमिस्तस्याभूमौसम्रियते तद्यथा सचेद्राशिद्वयेभवति तदाअधिकसन्चारभूमौसचेद्राशिःमेषोभवति तदा जाविकल्पसत्तेभूमौ वृषभश्चेत्तदावृषभसन्चारभूमौमिथुनश्चेत्तदागृहे कर्कटश्चेत्तदाकूपेसिंहश्चेत्तदारण्ये कन्याचेत्तदाकूपे तुलाश्चेत्तदापण्यगृहे वृ श्चिकश्चेत्तदाश्वभ्रे धन्वीचेत्तदाऽश्वसंचारभूमौ मकरश्चेत्तदानूपे कुंभश्चेत्तदागृहे मीनश्चेत्तदानूपइति यथातुपुनर्मृत्युयोगेजलादौमरणमुक्तं ते पातथैव नकेवलदर्शितराशिवशेनभूप्रदेशोवक्तव्यः अपितुयोगेक्षणादिभिरिति सलग्ननवांशकाधिपतिर्यस्मिन्राशौव्यवस्थितः तत्रपद्यनेन

ग्रहेणतस्ययोगोभवति तदातस्यचयाभूमिः ईक्षणादिर्योवातस्यपश्यति आदिग्रहणाद्यस्यनवांशकेस्थितस्तस्यापियाभूमिरुक्तातस्यांसम्रिय तइति अत्रचबहुभूमिसंभवेग्रहबलाद्वक्तव्याः ननुचग्रहस्यकाभूमिः उच्यते ग्रहस्यात्मीयराशेर्याभूमिः सैवेति ननुयस्यराशिद्वयंतस्यकाभूमि-रित्युच्यते तत्रत्रिकोणराशेः संबंधिनीभूमिः तद्यथा आदित्यस्यसिंहभूमिः अरण्यम् चंद्रमसः कर्कटभूमिरनूपभौमस्य मेषभूमिरजाविकसं-चारप्रदेशः बुधस्यकन्याभूमिरनूपः जीवस्यधनुर्भूमिरश्वप्रचारः शुक्रस्यतुलाभूमिः विपाणिः शनैश्चरस्यकुंभभूमिः गृहमिति केचिदत्रदेवा लयेअग्निविहारकोशशयनक्षित्युत्कराः स्युरित्यादिकंस्थानमिच्छंति एतच्चशोभनं यतःएतेषुस्थानेषुम्रियमाणाद्दश्यंतइति एवमेतस्मादन्य

होरानवांशकप्रयुक्तसमानभूमौयोगेक्षणादिभिरतःपरिकल्प्यमेतत् मोहस्तुमृत्यु
समयेऽनुदितांशतुल्यः स्वेशेक्षितेद्विगुणितस्त्रिगुणःशुभैश्च १२ ७

त् परिकल्प्यंचिंत्यम् मोहस्त्विति यावंतोलग्नस्यनवांशकाअनुदिताः शेषास्तेषामंशानांसपीडितानांयावत्कालोभवति एतदुक्तंभवति यावत्कालोलग्नादवशिष्टः पुरुषस्यजन्मविषयेभवति तावंतस्तावत्कालमिति सचेल्लग्नराशिः यदिस्वेशेनस्वपतिनेक्षितोदृष्टस्तदासएवकालोद्विगुणोवक्तव्यः अथादिवस्वामिनासौम्यग्रहेणचदृष्टस्तदाषड्गुणकालोवक्तव्यः १२ अथमृतस्यशरीरपरिणामज्ञानंमालिन्याह दहनेति निधनभवनेऽष्टमेस्थानेयोद्रेष्काणोव्यवस्थितः तद्वशाच्छवपरिणामश्चिंतनीयः सचगणनयाद्वाविंशोद्रेष्काणोभवति सचयदिदहनद्रेष्काणोऽग्निद्रेष्काणोभवति तदाभस्मत्वेनपरिणमत्यग्निनादह्यते पापद्रेष्काणोग्निद्रेष्काणः अथजलद्रेष्काणोभवतितदासक्लिद्यते जलमध्येक्षि

प्यते सौम्यग्रहद्रेष्काणोजलद्रेष्काण थवामिश्रद्रेष्काणोभवति तदाशुष्यति नद्यतेनचापिजलमध्येक्षिप्यते सौम्यग्रहद्रेष्काणः पापयुक्तोभवति पापग्रहद्रेष्काणोवासौम्ययुक्तस्तदामिश्रद्रेष्काण तथानिधनभवनसस्थैरथवा यथाश्रितैः व्यालवर्गैः सर्पद्रेष्काणैः विडंबितोभवति तदाश्वसृगालकाकादिभिर्भुज्यते भस्यतइत्यर्थः अश्व्यालद्रेष्काणाः कर्कटयाः कर्कटद्वितीय वृश्चिकायाः वृश्चिकद्वितीय मीनान्त्यश्च उक्तंच शा परगोधिरस्यचमीनपश्चिमोपगतः निधनेयस्यभवतिद्रेष्काणास्तस्यचमृतस्य भुजतिवायसाद्याः प्राणिसमूहानचास्तिसंदेह पापग्रहद्रेष्काणो यस्याष्टमराशिसंस्थितोभवति दहनमाप्नोति नरोमृतमात्रोनिश्चयात्भवेत् एवंसौम्यद्रेष्काणोजलमध्येक्षिप्यतेनरोत्रमृतः सौम्यद्रेष्काण पापे

दहनजलविमिश्रैर्भस्मसंक्लेदशोषैर्निधनभवनसंस्थैर्व्यालवर्गैर्विडंब इतिशव
परिणामश्चिंतनीयोयथोक्तःपृथुविरचितशास्त्राद्गत्यनूकादिचिंत्यम् १२

पापद्रेष्काणोपिसौम्ययुक्तः यस्याष्टमभवनगतः शोषमाप्नोतिसोपिमृतःसन् एवंप्रकाराः शवानामृतानांपरिणामोविपत्तिश्चिंतनीयोविचार्य पृथुविरचितशास्त्राद्विस्तीर्णाच्छास्त्राद्गत्यर्थकादिमरणादिचिंत्यम् मृतस्यकांगतिंप्राप्स्यति कस्माच्चलोकादयमागतः आदिग्रहणात्तनकीः गासीदिति अनूकशब्देनेहातीतजन्मोच्यते १२ अथयोपजातोजंतुः सकस्माल्लोकादागतइतियदुक्तंतदिज्ञानमालिन्याह गुरुरिति गुरुर्जीवः उडुपतिशुक्रौ चंद्रसितौ सूर्यभौमौरविकुजौ यमज्ञौसौरबुधौ एतेविबुधपितृतिर्यङ्नारकीयान्प्रजातान्कुर्युः विबुधलोकोदेवलोकः पितृलोकः
[illegible]

दिनकरः सूर्यः शशी चंद्रः अनयोः दिनकरशशिनोः मध्याद्योबलीवीर्यवान् तेनाधिष्ठितोयुक्तोयस्त्र्यंशोद्रेष्काणः तस्ययोनाथः स्वामी तस्ययोलोकस्त स्मादागतइतिवक्तव्यं तत्रसयदिद्रेष्काणोगुरोर्जीवस्यसंबंधीभवति तदा विबुधलोकादागतइतिवक्तव्यं अथचंद्रशुक्रयोरन्यतमसंबंधीभवति तदापितृलोकादागतइतिवक्तव्यं अथसूर्यभौमयोरन्यतमसंबंधीभवति तदातिर्यग्लोकादागतइतिवक्तव्यं अथशनैश्चरबुधयोरन्यतमसंबंधी भवति तदानरलोकादागतइतिवक्तव्यं यस्माल्लोकादागतस्तत्रापिश्रेष्ठमध्यहीनत्वज्ञानमाह प्रवरेत्यादि यस्यग्रहस्यप्रदर्शितलोकात्तस्यजन्म ज्ञानमाह ग्रहस्तुंगस्थः स्वोच्चराशिगतोभवति तदातत्रप्रवरः प्रधानमासीदितिविज्ञेयं अथोच्चराशिच्युतोनीचमप्राप्य तदातत्रासौमध्यमआसी

गुरुरुडुपतिशुक्रौसूर्यभौमौयमज्ञौविबुधपितृतिरश्चोनारकीयांश्चकुर्युः
दिनकरशशिवीर्याधिष्ठितात्र्यंशनाथात्प्रवरसमनिकृष्टास्तुंगह्रासादनूके १४

दितिविज्ञेयं नीचस्थः निकृष्टः हीनः एतदनूकेप्राग्जन्मनिज्ञेयं १४ अथमृतस्यकागतिर्भविष्यति तद्विज्ञानंमालिन्याह गतिरिति यस्यजन्मनिल ग्नात्षष्ठसप्तमाष्टमस्थानानिशून्यानिभवंति तस्यतत्कालेरिपुस्थानेत्र्यंशोद्रेष्काणोवर्त्ततेतयोर्याअधिपतीतयोर्मध्येयोबलवांस्तस्ययोलोकोभि हितः सएवगतिः एवंत्रिपुरध्रत्र्यंशपइति तत्रतेनमृतेनगंतव्यमिति अस्तास्थितोवा अथलग्नात्षष्ठसप्तमाष्टमस्थानानामन्यतमेस्थानेकश्चि द्ग्रहोभवति तदातस्यदर्शितलोकेतेनगंतव्यं अथलग्नात्षष्ठसप्तमाष्टमस्थानानांद्वेस्थानेत्रीणिवासग्रहाणिभवंति सोप्येकस्मिन्नपिद्व्यादयोग्रहा भवंति तदातेषांग्रहाणांयोबलवांस्तस्ययः प्रदर्शितोलोकस्तेनगंतव्यमिति नन्वस्तस्थितोवेतिकेश्चिद्बलमुक्तं तत्रसप्तमस्थग्रहणंकृतं तत्षष्ठा

लग्नादित्रिकोणगो भूत् समुद्भवेत्तद्भवनक्रमेणसञ्चारमादद्गतिप्रगण्यात् यद्यप्यत्रसामान्येनोक्तं बृहस्पतेरवस्थानं तथान्यद्वादशभागक्रमेणभति राशौसञ्चार्यः तद्यथा यदिप्रथमलग्नस्यप्रथमद्वादशभागोदयोभवति तदालग्नस्थेजीवेजातः द्वितीयद्वादशभागश्चेत्तदालग्नाद्द्वितीयेगुरौजात एवमू तीयादिद्वादशभागोदयेतृतीयादिषुस्थानेषुज्ञेयम् विकल्प्यवर्षाणिवयोनुमानादेवबृहस्पतेरवस्थानज्ञात्वातस्यएववयोनुमानात्तस्याकृतिशरीरम वस्थवर्षाणिविकल्प्यवर्षैः प्रमाणबुध्याद्वादशसुद्वादशसुवर्षेषुविकल्पनाकार्या किमस्मिन्नेवभगणपरिवर्तेज्ञानराशोः बृहस्पतेरवस्थानमभूदुत द्वितीयउततृतीयादिषु एवतस्याकृतिमवेक्ष्यवयोनुमानवक्तव्य यतद्वादशसुवर्षेषुभ्रान्तिर्भवति तत्रपुरुषलक्षणोक्तेनदशधिभागेनद्वादशवार्षिकोद

## लग्न त्रिकोणेषुगुरुस्त्रिभागैर्विकल्प्यवर्षाणिवयोनुमानात्

गास्तेष्वेषुपरिकल्प्यमत्तस्तेभागसस्पर्शोहूर्पेज्ञानतयाचगुरुलक्षणेपठ्यते पादौसगुल्फौप्रथमप्रदिष्टजंघेद्वितीयस्तुसजानुचक्रे मेढ्रोरुमुष्काश्चततस्तृतीयनाभिकटिश्चेतिचतुर्थमाहुः उदरकथयतिपञ्चमहृदयषष्ठमथस्तनान्वित अथसप्तममंसजत्रुणीकथयन्त्यष्टमयोष्ठकंधरे नवमनयनेचसभ्रुणीभ्रलललाटदशामशिरस्तथा अशुभेष्वशुभदशाफलचरणाद्येषुशुभेषुशोभनमिति किन्तर्विंशत्यधिकवर्षशतयस्यजन्मनोतीत तस्यनष्टजातकवर्षज्ञानोपाय एवनास्ति एववर्षेषुज्ञातेषुऋतुज्ञानमाह ग्रीष्मोर्कस्तुमइति येनलग्नेनप्रश्नपृच्छति तत्ररेवर्कः सूर्यः स्थितस्तद्रेष्काणोचाठमेतदाग्रीष्मेजातइतिवक्तव्य कथितास्तुशेषैरिति शेषैरन्यैग्रहै [illegible] नाप्येनोक्तः यथय

दाशनैश्वरोलग्नेभवति तद्द्रेष्काणोवातदाशिशिरेजातइतिवक्तव्यं एवंशुक्रेलग्नगतेवा तद्द्रेष्काणोतदावसंतेजातः एवंभौमे ग्रीष्मे एवमेवरवावपि चंद्रेलग्नगतेतद्द्रेष्काणेवावर्षासुबुधेशरदि जीवेहेमंतइति यदाबहवोलग्नगताः भवंतितदातेषामध्येयोबलवान्तदुक्तौजातइतिवक्तव्यं अथ नकश्चिद्यदिलग्नगतोभवति तदातस्यसंबंधीद्रेष्काणोदयोभवति तदातदुक्तौजातइत्येवंवक्तव्यं अन्यायनर्तौदृतुरर्कचारादिति अन्यस्मि न्नयनेऽन्यस्मिन्नृतावर्कचाराहृतुः अन्यस्मिन्नयनेउदयनासंभवश्चेदृतुरन्योभवति तदृतुरर्कचारवशेनवक्तव्यं एतदुक्तंभवति सौरेणमानेन- ऋतुर्वक्तव्यः नतुचांद्रेणयथाशिशिरेज्ञातेमकरकुंभयोरन्यतमेराशौसूर्यस्यावस्थानंज्ञेयं एवंशेषराशिष्वप्यूह्यं अनेनलौकिकश्चांद्रमासोनिराकृ

ग्रीष्मोर्कलग्नेकथितास्तुशेषैरन्यायनर्तावृतुरर्कचारात् २ चंद्रज्ञजीवाः परिवर्तनीयाः
शुक्रारमंदैरयनेविलोमे द्रेष्काणभागेप्रथमेतुपूर्वोमासोनुपाताच्चतिथिर्विकल्प्यः ३

तोभवतीति २ अथायनेविलोमेग्रहपरिज्ञानादृतुपरिज्ञानंमासपरिज्ञानंचेंद्रवज्रयाह चंद्रज्ञेति अयनेविलोमेसति चंद्रज्ञजीवाः शुक्रारमंदैःपरिवर्तनी याःशशिबुधगुरवःसितभौमशनैश्चरैः अयनव्यत्ययेप्राप्तेसतिपरिवर्तनीयाः व्यत्ययेनव्यवस्थाप्याः एतदुक्तंभवति यद्युत्तरायणेज्ञातेप्रावृट्कालेज्ञात स्तदावसंतेजातइतिवक्तव्यम् चंद्रान्छुक्रेणान्नपरिवर्तितः अयोत्तरायणेशरदिप्राप्तायांग्रीष्मेजातः दक्षिणायनेग्रीष्मेज्ञातेशरदिजातः अथबुधो रवि भौमयोरपवर्तितो रविभौमोबुधेनच उत्तरायणेहेमंतेज्ञातेशिशिरेजातः दक्षिणायनेशिशिरेप्राप्तेहेमंतजातः इतिवक्तव्य अत्रजीवमंदौपरस्परमपव र्तितो एवमृतौज्ञातेमासज्ञानमाह द्रेष्काणभागइति प्रश्नलग्नेयोद्रेष्काणोवर्ततेतस्यचद्रेष्काणस्ययदिप्रथमभागोवर्ततेतदाज्ञाततौप्रथमेमासिजातः

इतिवक्तव्य अथलग्नेद्रेष्काणस्थइतीयोभागोवर्त्तते तदाज्ञाततोद्वितीयेमासिजात: तृतीयद्रेष्काणेद्वौविभागौपूर्वपरावत्रापि अर्कावस्थानतएवमास
ज्ञान अथएवमासज्ञातातिथिज्ञानार्थमाह अनुपाताच्चतिथिर्विकल्प्य: अनुपातात्त्रैराशिकात्तिथिर्विकल्प्योविकल्पनीय: लग्नस्यषड्लिप्ताशतानिद्रेष्का
ण: द्रेष्काणेनचज्ञातर्तुकस्तुज्ञानतदर्धलिप्ताशतत्रय लिप्ताशतत्रयेणमासज्ञान अत्रानुपाततिथिलिप्ताद्दशकेनैकैकोज्ञेय: एवम्भतिथिरादित्यभाग
एवमादित्यस्यराशयोभागाज्ञेया मासाराशयस्तिथयोभागा: यस्मिन्भतियौज्ञातवर्षेयथाप्रदर्शितादित्योभवति तस्मिन्तिथौतस्यजन्मप्रतिवक्तव्य
१ अथचन्द्रमानतिथिज्ञानोपायमिदृवज्रयाह अत्रापीति अत्रास्मिन्तिथिज्ञानेद्विजेन्द्रापुनर्योहोराशारूमज्ञा सूर्याशतुल्या अत्रास्थानेस्फुटार्कभ

अत्रापिहोरापटवोद्विजेन्द्रा-सूर्याशतुल्यांतिथिमुद्दिशन्ति
रात्रिद्युसंज्ञेषुविलोमजन्मभागैश्चवेलाःक्रमशोविकल्प्या ४

गसमांतिथिमुद्दिशन्ति कथयन्ति प्रश्नकालेतात्कालिकेनादित्येनयावतोभागाभुक्तास्तावत: शुक्लप्रतिपत्प्रभृतिज्ञातमासस्यतिथयोव्यतीता: अत्रचा-
न्द्रमानेमकरमासेजातेमाघमासोज्ञेय: एवमन्येष्वपिमासकल्पनाकार्या तथाचमणित्थ: पृच्छाकालेरविणायावतोंशा: स्फुटेनसमुक्ता: राशेस्तास्ति
थय: स्यु: शुक्लादावर्कमासस्यएवंदिनेज्ञातेकिमयंरात्रौजातोदिवावेति तदर्थमाह रात्रिद्युसंज्ञेष्विति रात्रिद्युसंज्ञापूर्वव्याख्याता: गोजाश्विकर्कि
मिथुनाद्यास्तादिनातनप्रश्नकालेयदिरात्रिसंज्ञोलग्नोभवति तदातस्यविलोमतादिवाजन्मवक्तव्यं अथद्युसंज्ञोलग्नोभवतितदारात्रौजन्मवक्तव्यं
एवंदिनरात्रिविभागेज्ञातेवेलाज्ञानमाह भागैश्चवेला:क्रमशोविकल्प्या: यस्मिन्दिनेपुरुषस्यजन्मज्ञातंतस्मिन्दिनेअंशादित्योपिज्ञात: तत-

स्तस्यपुरुषस्ययदिवाजन्मतदा तस्मादादित्याद्दिनप्रमाणंकार्यम् अथरात्रौजन्मतदारात्रिप्रमाणंतत्रप्रश्नलग्नस्यतस्मिन्कालेयावंतश्चषकाभुक्तास्तैरङ्गुणि तःकार्यः यदिपुरुषस्यदिवाजन्मतदादिनप्रमाणेन यदारात्रौतदारात्रिप्रमाणेन तात्काललग्नभुक्तचषकाणांगुणनांकृत्वातस्यैवलग्नस्यस्वदेशराश्युद यप्रमाणेनभागमपहृत्यावासावेला तावताकालेनगतेनदिनस्यरात्रेर्वाजन्मवक्तव्यं एवंलग्नभागेऽक्रमशः परिपाद्यावेलासमयः विकल्प्याविकल्प नीया ४ अर्थांतरेणमासज्ञानमिंद्रवज्रयाह केचिदिति केचिदाचार्याः शशांकाध्युषितान्चंद्रयुक्तान्नवांशाञ्छुक्रांतसंज्ञंमासंकथयंति प्रश्नकालेयस्मि न्नवांशकेनवमेंशेचंद्रमाभवति तमपिनवांशकंविधापरिकल्प्य तस्मिन्नवांशकेनवमेंशेचंद्रमाव्यवस्थितइति चंद्रनवांशकगतंनक्षत्र

केचिच्छशांकाध्युषितान्नवांशाञ्छुक्रांतसंज्ञंकथयंतिमासं
लग्नत्रिकोणोत्तमवीर्ययुक्तंसंप्रोच्यतेगालभनादिभिर्वा ५

मन्वेष्यम् तन्नक्षत्रशुक्रांतसंज्ञकेमासितस्यजन्मवक्तव्यं अत्रयस्यनक्षत्रस्यशुक्रांतसंज्ञोमासोनास्तितस्यबृहस्पतिचारोक्तविधिनाशु क्रांतसंज्ञोमासः परिकल्प्यः तत्रोक्तं नक्षत्रेणसहोदयमस्तंवायेनयातिसुरमंत्री तत्संज्ञंवक्तव्यंवर्षमासक्रमेणैव वर्षाणिकार्तिकादीन्याग्नेयाद्भद्वयानियोज्यानि क्रमशस्त्रिभंतुपंचममुपांत्यमंत्यंचयद्वर्षमिति तत्रचंद्रमायदिवृषनवांशकेतन्नवांशकसप्तकस्याग्रेभवतितदा कार्तिकेमासिजातइतिवक्तव्यं अथवृषनवांशकस्योर्ध्वंभवति मिथुननवांशकेतन्नवांशकषट्कस्याग्रेयदाचंद्रमाभवति तदामार्गशीर्षे मासिजातइतिवक्तव्यम् अथमिथुननवांशकेतन्नवांशकषट्कस्योर्ध्वंकर्कटनवांशकेतन्नवांशकपंचकस्याग्रेयदाचंद्रमाभवति तदापौषेमासिजातइतिवक्तव्यं अ

| मेषादिराशीनां चषकाः | | |
|---|---|---|
| मे | २०० | मी |
| वृ | २४० | कुं |
| मि | २८० | म |
| क | ३२० | ध |
| सिं | ३६० | वृ |
| क | ४०० | तु |

चयवनेश्वरः मासेतुशक्लप्रतिपत्प्रवृत्ते पूर्वेशशी मध्यबलोदशाहे तथाच यद्राशिसंज्ञेशीतांशुः प्रश्नकालेनवांशके स्थितस्तद्राशिगः पूर्णोयस्मिन्भवति चंद्रमाः जन्ममासः सनिर्दिष्टः पुरुषस्यतुपृच्छतः कृष्णपक्षांतिकोमासोज्ञेयोत्रतुविपश्चिता लग्नत्रिकोणेत्यादि लग्नस्यप्रथमलग्नस्यत्रिकोणयोश्चनवमपंचमयोर्मध्याद्यस्तत्कालमुत्तमेनप्रधानवीर्येणबलेनयुक्तस्तद्भराशिः प्रोच्यते कथ्यते यस्मिन्राशौगतेचंद्रमसिजातइतिवक्तव्यं तथाच यवनेश्वरः होरादिवीर्याधिकलग्नमाजिस्थानंत्रिकोणेशशिनोविधार्य अंगालभनादिभिर्वा कालांगानीत्यनेनप्रदर्शितोयः कालपुरुषस्यांगविभागस्तदालभनाद्यानेनविधिनास्पृष्टुस्पृशतः यदेवकालपुरुषस्यांगंस्पृशतितत्स्थेचंद्रमसिजातइतिवक्तव्यं आदिग्रहणात्प्राण्युक्तसत्सदर्शनश्रवणे

यावान्गतः शीतकरोविलग्नाच्चंद्रादृदेत्तावतिजन्मराशिः
मीनोदयेमीनयुगंप्रदिष्टंभस्याहृताकाररुतैश्चनित्यम् ६

गृह्यते ५ अथप्रकारांतरेणजन्मेशराशिज्ञानमिंद्रवज्रयाह यावानिति विलग्नात्पृच्छालग्नाच्छीतकरश्चंद्रोयावान्गतोजन्मराशौव्यवस्थितस्तस्माद्यस्तावतिराशिः तत्रस्थेचंद्रमसिजातइतिवक्तव्यं मीनोदयेयदिमीनलग्नगतोभवति तदामीनयुगमेवप्रदिष्टमुक्तं मीनस्थचंद्रमाइतिवक्तव्यं ननुदर्शितविधिनाराशिरनेकप्रकारोयत्रप्राप्तोभिन्नरूपस्तत्रकोवक्तव्यइत्याशंक्याह भस्याहृताकाररुतैरिति यस्यराशेः संबंधिभस्य द्रव्यंतस्मिन्कालेकृत्रिममानीयते तदाकारश्चकश्चिदृश्यते यथामार्जारादिदर्शनेसिंहोमहिषादिदर्शनेवृषइत्यादि अथवाराश्युक्तरूपंपुरुषस्य दृष्ट्याथवारुतेनयस्यराशिसदृशप्राणिनोरुतंशब्दः क्रियतेतत्रस्थेचंद्रमसिजातइतिवक्तव्यं ६ ७ ७ ७

एकजन्मराशौज्ञातेलग्नज्ञानमिद्यज्ञयाह होरेति होरायामप्रश्नलग्नेयस्यराशोर्नवांशकस्तत्कालवर्ततेतस्मात्तावतितमतस्मितमतमेवांशकराशितस्य जन्मलग्नवक्तव्य अथवालग्नाल्लग्नद्रेष्काणादारभ्यरविः सूर्योयावति यावत्संख्येद्रेष्काणेव्यवस्थितस्तस्माल्लग्नादारभ्यतावतिराशौलग्नगतेतस्य- जन्मवक्तव्य अनन्तद्वादशेभ्योधिकेद्रेष्काणेद्वादशकमपास्यसंख्यानिर्देशः चतुर्विंशतेरधिकेचतुर्विंशतिमपास्यशेषवदेत् एवंशास्त्रमाह शास्त्रकथ यति नस्तमनीषिकयोक्तमित्येतत्प्रतिपादयति शास्त्रग्रहणेनैतत्प्रतिपाद्यते उक्तंच प्रच्छालग्नवाशास्त्ययोराशिसंज्ञयासमस्तस्मिन्लग्नगतेराशौ जन्मवक्तव्यम् पृच्छतस्तावत्संख्योपगतेलग्नाद्द्रेक्काणेदिनकृत् तत प्रथलग्नात्तावत्संख्येकृतेलग्नराशौप्रष्टुर्जन्मविनिर्दिशेत् ७ अथप्रकारांतरेण

होरानवांशप्रतिमंविलग्नंलग्नाद्रविर्यावतिचद्रेकाणे
तस्माद्वदेत्तावतिवाविलग्नंप्रष्टुःप्रसूताविविशास्त्रमाह ७

लग्नानयनमिद्गवक्त्रयाह जन्मादिशेदिति लग्नगेग्रहेजन्मादिशेत् प्रश्नलग्नेयोग्रहोव्यवस्थितस्ततात्कालिककृत्वालिसापिडीकार्ये अथवहवोलग्न गताभवति तदातेषांयोबलवान् तत्तात्कालिककृत्वालिसापिडीकार्यम् ततः सलिलसमीकृतायामवनौद्वादश्यांगुलेनशंकुनातात्कालिकानि छायांगुलानिगृहीत्वा तैरंगुलैरेकैकग्रहयदृशितकालेलिसापिडीकृतगुणयेत् अथवासर्वग्रहेभ्योयोबलवान् ग्रहस्ततात्कालिककृत्वालिसापिड कृत्वाछायांगुलाहतनार्कगुणकारयेत् द्वादशभिर्विभजेत्तत्रयावत्संख्यमवशिष्टतावत्संख्योमेषादारभ्ययोराशिर्भवति तस्मिन्राशौलग्नगते तस्यजन्मवक्तव्य अथप्रकारांतरेणाह आसीनेत्यादि आसीनउपविष्टोपदामप्रान्चति ........ नसप्तमराशिस्तस्मिन्लग्नगतेतस्यजन्म

क्तव्यम् अथसुप्तः सुप्तोत्रशयनपतितोविहितः लग्ननिद्रस्यप्रश्नाभावात् तत्रपतितोयदापृच्छति तदालग्नाद्यत्करवस्थानंचतुर्थराशिस्तस्मिन्लग्न गतेतस्यजन्मवक्तव्यं अथोत्थितःपृच्छति तदातस्माल्लग्नाद्यदाज्ञास्थानंदशमोराशिस्तस्मिन्लग्नगतेतस्यजन्मवक्तव्यं अथशयनादासनाच्चोत्थितः उत्तिष्ठतःपृच्छति तदोदयलग्नराशौतस्मिन्नेवजन्मवक्तव्यम् उक्तंच उत्तिष्ठतोविलग्नात्सुप्तःकसस्यबंधुलग्नाच्च उपविष्टस्यास्तमयेव्रजतोमेषूरणस्थानादिति ८ अथप्रकारांतरेणसर्वमेवनष्टजातकंवक्ति ततःप्रश्नकालेतात्कालिकलग्नेकृत्वालिसापिंडीकार्यं ततस्तस्यालिसापिंडीकृतस्यगुणकारविज्ञानार्थंशार्दूलविक्रीडितेनाह गोसिंहाविति गोसिंहादयोराशयोयथाक्रमंदशादिभिर्गुणकारैः संवर्ग्यागुणनीयाः तद्यथा गोसिंहौवृषसिंहौ

जन्मादिशेल्लग्नगेवीर्यगेवा छायांगुलघ्नोर्कहृतेवशिष्टम्
आसीनसुप्तोत्थिततिष्ठताभंजायासुखाज्ञोदयगंप्रदिष्टम् ८

दशभि१०र्गुणयेत् वृषलग्नंलिसापिंडीकृतंदशभिर्गुणयेत् एवंसिंहंदशभिरेव जितुमाष्टमोमिथुनवृश्चिकौलग्नगतावष्टभि८र्गुणयेत् क्रियतुलेमेषतुले एतौसप्तभिर्गुणयेत् ७ कन्यामृगौकन्यामकरौएतौलग्नगतौविषयैःपंचभि५र्गुणयेत् एवमेतेयथाक्रमंसंवर्ग्यागुणनीयाः शेषाअनुक्ताराशयःस्वसंख्यागुणाआत्मीयसंख्ययागुणनीयाः तत्रगणनयाकर्कटंचतुर्भिर्गुणयेत् एवंधन्वीनवभिः९ कुंभमेकादशभिः११ एवंमीनोद्वादशभिः१२ एवंतावल्लग्नस्य गुणकारेणावश्यमेवगुणयेत् दशकाष्टसप्तविषयैः ततस्तत्रयदिग्रहोभवति तदाग्रहगुणकारेणावश्यमेवगुणयेत् तत्रग्रहगुणकारविधिः जीवारास्फुजिदैंदवा प्रथमवद्दशकाष्टसप्तविषयैरिति जीवेगुरौलग्नगतेतमेवलग्नं

| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ७ | १० | ८ | ४ | १० | ५ | ७ | ८ | ९ | ५ | ११ | १२ |

स्तगुणकारैरहृतरशाभिर्गुणयेत् आरोभौमेउभगतश्चाष्टभिः आस्फुजिच्चुकः तस्मिन्उभगते सप्तभिः ऐन्द्रेन्दु पंचभिः शेषाररिशशिसौरसतेन्दुसौम्यवत् अथ

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| र | च | भ | बु | गु | शु | श | रा | के |
| ५ | ५ | ८ | ५ | १० | ७ | ५ | | |

वत् पंचभिर्गुणनीयाइत्यर्थः एवतात्कालिकलग्नअवश्यराशिगुणकारेणगुणयेत् ततःसप्तहोक्तगुणकारैरर्पितत्रचयदाग्रं भोभवति तदाग्रहगुणकारेणगुणयेत् यदाबहवोग्रहाभवति तदासर्वेषांगुणकारैर्गुणयेत् एवंचतद्गुणितमेकत्रतस्यापये

त् • अथनष्टस्थानयनवसततिलकेनाह सप्ताहृतमिति सप्ताहतसप्तभिर्गुणयेत् द्विसप्ततिरिति ततस्तत्रनवदेयाः शोध्यावा नकिंचिद्धाउदेदुच्यते यदि मन्तरगशिर्द्धभगतोभवतितदानवदेयाः स्थिरेनदेयानापिशोध्याः द्विस्वभावेचिलभेनवशोध्याः एवंकेचिद्व्याचक्षते नयपुनर्भूमः यदिमभउभेभयः

गोसिंहौजितुमाष्टमौक्रियतुलेकन्यामृगौचकमात्सर्वगोर्द्याप्रमष्टसप्तविषयौशेषाःस्वसंख्यागुणाः
जीवारास्फुजिदेवता अथमवेच्छेषाग्रहाः सौम्यवद्राशीनांनियतोविधिर्ग्रहभुतेः कार्याचतद्गणा ९

कारणोभवति तदानदेयाः द्वितीयेनदेयानापिशोध्याः तृतीयेनवशोध्याः एवंकृत्वातस्यराशोस्त्रिधनेनसप्तविंशत्याभागमपहृत्यावातत्याज्य तच यावत्तन्म्योक्षेपशेषोभवति तावत्संख्यमश्विन्यादितोयन्नक्षत्रंतन्नस्यचतस्यप्रसुर्वक्तव्य केचिदूचति यथास्थितस्यराशेः सप्तविंशत्याभागमप हृत्याशेषांकेनयथदानेनविशोधनेनवायथास्थितेनांकेनसवादृडसंख्ये तयानक्षत्रवक्तव्य एवंमित्यादिकलत्रसहजात्मजशत्रुभेभ्यइति भा र्यामर्तृपुत्रादिपुनष्टजातकपदापृच्छतितदातद्भेभ्यस्तद्भावेभ्यः एवमस्य पृच्छकस्यवदेद्भूयात् तमेवोदयराशिपरिकल्पयेदित्यर्थः एतदुक्तमप-
[illegible]

देधमथशत्रोः पृच्छतितदाराशिपंचकंदेयं एवंकृत्वायद्भवतितदेवोदयराशिंप्रकल्प्य तद्गुणाकारेणगुणयेत् तत्स्थग्रहगुणाकारेणचततस्तत्रप्राग्वन्नवक
दानविशोधनेकृत्वासप्तविंशत्याभागमपहृत्यावशेषांकसमंयस्यप्रश्नःपृच्छतितस्यनक्षत्रंवक्तव्यं एतदप्युपलक्षणार्थमेवत्रिराशिसहितात्तात्कालिका-
ल्लग्नाभित्रस्यवक्तव्यमेतल्लग्नस्त्रानयनमप्युपलक्षणमेवंसकलमपिनष्टजातकंवक्तव्यं १० अथवर्षाद्यानयनंवसंततिलकेनाह वर्षर्तुमासेति वर्षादी
न्सर्वाणिस्वविकल्पेनभागेहृतेयथापाठक्रमेणानयितव्यानि तद्यथा तात्कालिकंलग्नंलिप्तापिंडीकृतंराशिगुणाकारहतंग्रहसंयुक्तंचेद्ग्रहगुणकार
हतमपियदेकांतेस्थापितंतत्पुनरपिदशादिगुणंकार्यम् एतदुक्तंभवति सराशिःस्थानचतुष्टयेधार्यः एकत्रदशगुणोऽन्यत्रद्वितीयेऽष्टगुणोन्यत्रतृतीये

सप्ताहतंत्रिघनभाजितशेषमूर्ध्वंदत्वाथवानवविशोध्यनवाथवास्मात् एवंकलत्रसहजात्मजशत्रुभे-
भ्यः प्रश्नर्वदुदयराशिवशेनतेषां १०, वर्षर्तुमासतिथयोद्युनिशान्यडूनिवेलोदयर्क्षनवभागविकल्प
नाःस्युः भूयोदशादिगुणिताःस्वविकल्पभक्ताहृषीदयोनवकदानविशोधनाभ्याम् ११

सप्तगुणः चतुर्थेपंचगुणः कार्यःयतउक्तं भूयोदशादिगुणितान्भूयः पुनरपिदशकाष्टसप्तविषयैर्गुणनीयाः ततस्तस्मिन्राशिचतुष्टयेप्राग्वन्नवक
दानविशोधनेकृत्वास्वविकल्पेर्भागमपहृत्यावासवर्षादयोज्ञेयाः ११ अथनज्ञायतेकस्माद्राशेःकस्यानयनकार्यंतदनुष्टुप्त्रयेणाह विज्ञेयादशकेष्व
ब्दाइति अत्रबहुवचनंबहुधोपयोगित्वात्कृतं यदुक्तं स्वविकल्पभक्ताहृषीदयस्तद्व्याख्यायते एतेचत्वारोराशयः स्थापितास्तेषांनवकदानविशोध
नंकृत्वाकर्मयोग्याःसर्वेभवंति ततोदशगुणस्यपृथक्स्थस्यपरमायुषाविंशत्यधिकेनवर्षशतेनभागमपहृत्यन्त्रस्तुसंख्ययोंकोवशिष्यतेतदंकसमंतस्य

कालेज्ञातेराश्यादिलग्नंकर्तव्यं ततस्तस्यहोराद्रेष्काणनवांशद्वादशांशत्रिंशांशभागाः कर्तव्याः तात्कालिकाग्रहाश्चकर्तव्याः ततोयथाभिहितेनविधिनाद शांतर्दशाष्टकवर्गादिरभिहितस्यफलस्यनिर्देशः कार्यः एवंनष्टजातकंसाधयेत् १४ अथप्रकारांतरेणनक्षत्रानयनमार्ययाह संस्कारनामेति संस्कारेणनामसंस्कारनामतस्यमात्राः संस्कारेणागतस्यनाम्नोमात्राः संस्कारनाममात्राः संस्कारग्रहणेनेतत्प्रतिपादितंभवति संस्कारेणयत्पुरुषस्य नामकृतंतस्यमात्राग्राह्याः नान्यस्यकस्यचित्कुनामादेः मात्राश्चेहगृह्यंते हल् अर्द्धमात्रिकः अचमात्रिकः इत्यनयास्थित्या ताः संस्कारनाममात्राः संगृह्यद्विगुणीकार्याः ततस्तात्कालिकानिशंकुछायांगुलानिगृहीत्वाताद्विगुणमात्रास्तैरंगुलैः संयुक्ताः कार्याः एवंकृतेयद्भवति तस्यत्रिनवकेनस

वेलामथविलग्नंवाहोरामंशकमेववा पंचकेषुविजानीयान्नष्टजातकसिद्धये १४ संस्कारनाममात्राद्विगुणाच्छायांगुलैःसमायु
क्ता शेषंत्रिनवकभक्तान्नक्षत्रंतद्धनिष्ठादि १५ द्वित्रिचतुर्दशदशतिथिसप्तत्रिगुणानवाष्टचैंद्राद्याः पंचदशघ्नास्तद्दिग्मु
खान्विताभंधनिष्ठादि १६

सप्तविंशत्याभागमपहृत्ययः शेषोभवतितदंकसमंतस्य धनिष्ठादितआरभ्यनक्षत्रंवक्तव्यं १५ अथनक्षत्रानयनंप्रकारांतरेणार्ययाह द्वित्रिचतुर्दशेति पूर्वाभिमुखोयदाप्रष्टापृच्छति तदाद्व्योरंकः स्थाप्यः अथाग्नेयाभिमुखस्तदात्रयाणां अथदक्षिणाभिमुखस्तदाचतुर्दशानां अथनैर्ऋत्यभिमुखस्तदादशानां अथपश्चिमाभिमुखस्तदातिथिसंख्यानांपंचदशानां अथवायव्याभिमुखस्तदासप्तत्रिगुणाएकविंशतिः उत्तराभिमुखस्तदानवानां ऐशान्याभिमुखस्तदाष्टानां तद्यथा एवंदिगभिमुखप्रष्टृवशेनांकंगृहीत्वाततः पंचदशगुणः कार्यः ततस्तस्मिन्प्रदेशेयावंतः पुरुषास्तदभिमुखाः स्थितास्तत्संख्ययान्वितोयुक्तः कार्यः एवंकृतेयद्भवति तस्यसप्तविंशत्याभागमपहृत्ययोकोवशिष्यते

तद्वक्समतस्यपनिश्चायारभ्यनक्षत्रवक्तव्य १६ अथनष्टजातकोपसंहारआर्ययाह इतिनष्टजातकमिति इतिशब्द उपसंहारे मया वराहमिहिराचार्ये णनष्टजातकंबहुप्रकारंबहुभेदंविनिर्दिष्टम् उक्तमिदं अतोस्यार्थेतो सच्छिष्यैः शोभनस्वच्छास्त्रै ग्राह्यं यत्नात्परीक्ष्यविचार्य यथायेनप्रकारेणसं भवति सत्यरूपतयाग्राह्यमिति येनप्रकारेणसंभवतितथाग्रहीतव्यमित्यर्थः बहुभिरागमैर्मयाविचार्यपराशरवसिष्ठयवनसत्यमणित्थादीनां मतानि आलोक्यकृत तदेवभूयोनिर्मलगुणानिपुणबुध्याविचार्य सविद्याकार्य येनस्फुटसिद्धोसौसंपद्यते १७ इतिश्रीमद्भट्टोत्पलविरचिताय बृ हज्जातकविवृतौनष्टजातकाध्यायःषड्विंशतिःसमाप्तः २६ अथद्रेष्काणाध्यायोव्याख्यायते तत्रादौमेषाद्यद्रेष्काणस्यस्वरूपज्ञानवेतालं

इतिनष्टजातकमिदंबहुप्रकारंमयाविनिर्दिष्टम् ग्राह्यमतःसच्छिष्यैःपरीक्ष्ययत्नाद्यथाभवति १७
इतिनष्टजातकाऽध्यायःसमाप्तः २६ अथद्रेष्काणाऽध्यायआरंभः कट्यांसि
तवस्त्रवेष्टितः कृष्णःशक्तइवाभिरक्षितुं रौद्रःपरशुंसमुद्यतंधत्तेरक्तविलोचनःपुमान् १

नाह कट्यामिति कट्याजघनेसितश्वेतवस्त्रमंबरंवेष्टितंयेन कृष्णः असितवर्णः शक्तइवअभिरक्षितुमाभिमुख्येन रक्षांकर्तुंशक्तः सम र्थइव रौद्रोभीषणःयःपरशुंकुठारंसमुद्यतं धत्तेधारयति रक्तविलोचनोलोहिताक्षः सचपुमान्पुरुषः एषपुरुषद्रेष्काणः सायुधोमेषाद्यद्रे ष्म १ अयमेषद्वितीयद्रेष्काणस्यस्वरूपमिंद्रवज्रयाह रक्ताम्बरेति रक्तांबरालोहितवस्त्रा भूषणमलंकरणं भक्ष्यभोज्यं तत्रचित्तंयस्याः कुंभाकृतिःघटोदरी वाजिमुखी अश्ववक्त्रा तृषार्त्तापिपासार्त्ता एकेनपादेनचरणेनोपलक्षिता ... तोपरिष्ठ पवनात्मा

यैः कथितं एषचतुष्पदद्रेष्काणः स्त्रीद्रेष्काणोऽर्कसक्तश्च यस्मादाचार्यैश्चतुष्पान्मुखाच्चतुष्पदद्रेष्काणइतिव्याख्यातस्तथाखगमुखोद्रेष्काणश्च २अथ मेषतृतीयद्रेष्काणस्यस्वरूपमिंद्रवज्रयाह क्रूरइति क्रूरोविषमस्वभावः कलाज्ञःकलावित् कपिलःपिंगलःक्रियार्थीकर्मस्वभिलाषुकः भग्नव्रतः स्वलितनियमः आभिमुख्येनोद्यतोदंडः हस्तेपाणौयस्य रक्तानिलोहितानिवस्त्राण्यंबराणिबिभर्तिधारयति चंडःक्रोधशीलः अयंमेषतृतीयस्त्रिभागोद्रेष्काण. कथितःउक्तः एषनरद्रेष्काणः सायुधोजीवसक्तश्च ३ अथवृषप्रथमद्रेष्काणजातस्यस्वरूपंदोधकेनाह कुंचितेति कुंचिताः कुटिलाःलू

रक्तांबराभूषणभक्ष्यचिंताकुंभाकृतिर्वाजिमुखीतृषार्त्ता एकेनपादेनचमेषमध्येद्रेष्काणरूपंयवनोपदिष्टं २
क्रूरःकलाज्ञःकपिलःक्रियार्थी भग्नव्रतोभ्युद्यतदंडहस्तः रक्तानिवस्त्राणिबिभर्तिचंडोमेषेतृतीयःकथितस्त्रि
भागः ३ कुंचितलूनकचाघटदेहादग्धपटातृषिताशनचित्ता आभरणान्यभिवांछतिनारीरूपमिदंवृषभेप्र
थमस्य ४ क्षेत्रधान्यगृहधेनुकलाज्ञोलांगलेसशकटेकुशलश्च स्कंधमुद्वहतिगोपतितुल्यःक्षुत्परोजवदनोमलवासाः ५

ना. कचाः केशायस्याः कुटिलछिन्नकेशा घटदेहा कुंभसदृशोदरी दग्धपटा दग्धवस्त्रा तृषितापिपासार्ता अशनेभोजने चित्तंयस्याः आभरणानि भूषणानि अभिवांछति साचनारीस्त्री इदंवृषभप्रथमस्यद्रेष्काणस्यस्वरूपं एषःस्त्रीद्रेष्काणः साग्निकः शुक्रसक्तश्च ४ अथवृषद्वितीयद्रेष्काणस्यस्वरूपंस्वागतयाह क्षेत्रधान्येति क्षेत्रंकेदारः धान्यानिशालयः गृहंवेश्मधेनुः गौः कलाः गीतवाद्यनृत्यलेखचित्रकर्मादि एतासांज्ञः पंडितःलां

डनंक्रीडा आत्मजाःपुत्राः अलंकरणमाभरणं अर्थोवित्तं एषांसंबंधिनींचिंतांकरोति अथमिथुनस्यराशेर्मध्येद्वितीयद्रेष्काणइत्यर्थः एषनरद्रेष्का
णः सायुधः खगद्रेष्काणः शक्रसक्तश्च ८ अथमिथुनस्यतृतीयद्रेष्काणस्वरूपंस्वागतयाह भूषितइति भूषितोलंकृतः वरुणवत्समुद्रवत् बहुरत्नः
प्रभूतमणिः तूणंशराधानं कवचंसन्नाहः एतौबद्धौ ग्रंथितौयेनसधनुष्कः चापयुक्तः नृत्तेवादित्रेवाद्यविषये कलासुज्ञनिः शेषासुविद्वांस्तज्ज्ञः का
व्यकृत्पंडितः काव्यकर्मकार्यंतत्करोति एषोमिथुनस्यराशेरवसानेतृतीयद्रेष्काणइत्यर्थः एषः नरद्रेष्काणःसायुधःसौरसक्तश्च ९ अथकर्कटप्र

उद्यानसंस्थःकवचीधनुष्मान्शूरोस्त्रधारीगरुडाननश्च क्रीडात्मजालंकरणार्थचिंतांकरोतिमध्येमिथुनस्यराशेः ८ भूषि
तोवरुणवद्बहुरत्नोबद्धतूणकवचःसधनुष्कः नृत्तवादितकलासुचविद्वान्काव्यकृन्मिथुनराश्यवसाने ९ पत्रमूलफलभृद्द्वि
पकायःकाननेमलयगःशरभांघ्रिः क्रोडतुल्यवदनोहयकंठःकर्कटेप्रथमरूपमुशंति १० पद्मार्चितामूर्द्धनिभोगियुक्ता
स्त्रीकर्कशारण्यगताविरौति शाखांपलाशस्यसमाश्रिताच मध्येस्थिताकर्कटकस्यराशेः ११

थमस्यस्वरूपंस्वागतयाह पत्रेति पत्राणिमूलानिफलानिचबिभर्ति धारयति द्विपकायोहस्तिसदृशशरीरः काननेमलयगः मलयश्चंदनवृक्षःत
त्रोपगतःस्थितः शरभांघ्रिः शरभसदृशपादः क्रोडः सूकरस्तत्तुल्यवदनः तत्सदृशवक्त्रः हयकंठोऽश्वग्रीवः कर्कटेकर्कटराशौप्रथमद्रेष्काणस्य
स्वरूपमुशंति कथयंति एषद्रेष्काणश्चतुष्पाच्चंद्रसक्तश्च १० अथकर्कटद्वितीयद्रेष्काणस्यस्वरूपमिंद्रवज्रयाह पद्मार्चितेति स्त्रीयोषिन्मूर्द्धनि
शिरसिपद्मैः कमलैरर्चितापूजिता भोगियुक्तासर्पा कर्कशाकठिनयौवनोपेता अरण्यगताएकांतस्थिता विरौति आक्रोशयति पलाशवृक्षस्यशाखाल

गलेद्दलेसशकटेशकटसहितेकुशला शिक्षिता गोपतितुल्यवृषभसदृशास्कंधंककुदमुद्वहति धारयति सुतरां सुधयार्तः अजवदनः छागवक्त्रः म लवासामलिनावरः एषोनरद्रेष्काणः चतुष्पाद्द्रेष्काणोबुधसत्क्रम ५ अथवृषतृतीयद्रेष्काणस्यस्वरूपदोधकेनाह द्विपसमकायइति द्वि पसमकायोमहाशरीरोहस्तितुल्यदेह नपुनः हस्तिशरीरः पांडुरदंष्ट्र श्वेतदंतः शरभसमांघ्रिः रहस्पादोनपुनः शरभसदृशापादः पिंगलमू- र्तिः कपिलदेहः अवि प्रसिद्धः मृगआरण्यपशुः अविमृगलोभीर्यव्याकुलचित्तयस्य अयंवृषभवनस्यवृषराशेः मातंगतस्तृतीयद्रेष्काणः चतुष्पादः सौरसत्क्रम ६ अथमिथुनस्यप्रथमद्रेष्काणस्यस्वरूपज्ञानवसंततिलकेनाह सूच्याश्रयमिति नारीस्त्रीसूच्याश्रयकर्मसीव

द्विपसमकायःपांडुरदंष्ट्रः शरभसमांघ्रिःपिंगलमूर्तिः अविमृगलोभव्याकुलचित्तोवृषभवन
स्यप्रातगतोयम् ६ सूच्याश्रयसमभिवांछतिकर्मनारीरूपान्विताभरणकार्यकृतादराच
हीनप्रजोच्छ्रितभुजार्त्तुमतीत्रिभागमाद्यतृतीयभवनस्यवदंतितज्ज्ञाः ७

नक्रियांसम्यगभिवांछतिइति रूपान्वितास्वरूपाआभरणकार्ये भूषणकर्मणिकृतआदरः अभिलाषः भद्रायया हीनप्रजा अपत्यरहिता उ च्छ्रितभुजोर्ध्वबाहुकीऋतुमतीसातेवाकामातीवा तृतीयभवनस्यमिथुनस्यार्थ प्रथमत्रिभागंद्रेष्काणं तज्ज्ञाः पंडिताः प्रवदंतिकथयंति प यस्त्रीद्रेष्काणोबुधसत्क्रम ७ अथमिथुनद्वितीयद्रेष्काणस्यस्वरूपमुपजातिकयाह उद्यानसंस्थइति उद्यानसंस्थउपवनेतिष्ठति कवचीस न्नाहःपारतशरीरः धनुष्मान्चापहस्तः शूरोरणप्रियःशरास्त्रधारीनाणार शरःकाम्यनितान्येवास्त्राणि तद्धारणशीलयस्येति गरुडमन्नोपमिसरशरस्त्र्य

डुनंक्रीडा आत्मजाःपुत्राः अलंकरणमाभरणं अर्थोवित्तं एषांसंबंधिनींचिंतांकरोति अथमिथुनस्यराशेर्मध्येद्वितीयद्रेष्काणइत्यर्थः एषनरद्रेष्काणः सायुधःखगद्रेष्काणः शुक्रसत्कश्च ८ अथमिथुनस्यतृतीयद्रेष्काणस्वरूपंस्वागतयाह भूषितइति भूषितोलंकृतः वरुणवत्समुद्रवत् बहुरत्नः प्रभूतमणिः तूणंशराधानं कवचंसन्नाहः एतौबद्धोग्रथितौयेनसधनुष्कःचापयुक्तः नृत्तेवादित्रेवाद्यविषयेकलासुकलावित् शेषासुविद्यासुतज्ज्ञः काव्यकृत्पंडितः काव्यकर्मकार्यंतत्करोति एषोमिथुनस्यराशेरवसानेतृतीयद्रेष्काणइत्यर्थः एषः नरद्रेष्काणःसायुधःसौरसत्कश्च ९ अथकर्कटस्य

उद्यानसंस्थःकवचीधनुष्मान्शूरोस्त्रधारीगरुडाननश्च क्रीडात्मजालंकरणार्थचिंतांकरोतिमध्येमिथुनस्यराशेः ८ भूषितोवरुणवद्बहुरत्नोबद्धतूणकवचःसधनुष्कः नृत्तवादितकलासुचविद्वान्काव्यकृन्मिथुनराश्यवसाने ९ पत्रमूलफलभृद्द्विपकायःकाननेमलयगःशरभांघ्रिः क्रोडतुल्यवदनोहयकंठःकर्कटेप्रथमरूपमुशंति १० पद्मार्चितामूर्द्धनिभोगियुक्ता स्त्रीकर्कशारण्यगताविरौति शाखापलाशस्यसमाश्रिताचमध्येस्थिताकर्कटकस्यराशेः ११

स्यस्वरूपंस्वागतयाह पत्रेति पत्राणिमूलानिफलानिचबिभर्त्ति धारयति द्विपकायोहस्तिसदृशशरीरः काननेमलयगः मलयश्चंदनवृक्षः तत्रोपगतःस्थितः शरभांघ्रिः शरभसदृशपादः क्रोडःसूकरस्तत्तुल्यवदनः तत्सदृशवक्त्रः हयकंठोऽश्वग्रीवः कर्कटेकर्कटराशौप्रथमद्रेष्काणस्यस्वरूपमुशंति कथयंति एषद्रेष्काणश्चतुष्पाच्चंद्रसत्कश्च १० अथकर्कटद्वितीयद्रेष्काणस्यस्वरूपमिंद्रवज्रयाह पद्मार्चितेति स्त्रीयोषिन्मूर्द्धनिशिरसिपद्मैःकमलैरर्चितापूजिता भोगियुक्तासर्पा कर्कशाकठिनयौवनोपेता अरण्यगताएकांतस्थिता विरौति आक्रोशयति पलाशवृक्षस्यशाखाल

तासमाश्रिता तत्रासक्ता स्थिता कर्कटस्यराशेर्मध्येस्थिताद्वितीयद्रेष्काणेसमवस्थिता एषस्त्रीद्रेष्काणोव्यालद्रेष्काणो भौमसक्तश्च ११ अथकर्कटस्यतृतीयद्रे-
ष्काणस्यस्वरूपंवैतालीयेनाह भार्येति भार्याजायातस्याआभरणार्थमलंकरणनिमित्तमर्णवंसमुद्रं नौस्थोनावमारूढः सर्पवेष्टितागोगच्छतियाति हैमैः सुव
र्णनिर्मितैः विभूषणैरलंकरणैर्युत चिपिटास्यः चर्पटमुखः कर्कटेत्यगतः तृतीयद्रेष्काणइत्यर्थः एषनरद्रेष्काणोव्यालद्रेष्काणोजीवसक्तश्च १२ अथसिंहपूर्व
स्यद्रेष्काणस्यस्वरूपंशालिन्याह शाल्मलेरिति शाल्मलिवृक्षस्योपर्यधिगृध्रःपक्षीजम्बुकःसृगाल एतौस्थितौतथाश्वासारमेयः नरोमनुष्यःश्वम
लिनै मलोपेतैरंबरैर्वस्त्रैरन्वितोयुक्त मातृपितृविप्रयोजितोजननीजनकविरहितोरौत्याक्रुश्यति इदमाद्यप्रथमरूपंसिंहस्योच्यतेकथ्यते सिंहप्रथमद्रे

भार्याभरणार्थमर्णवंनौस्थोगच्छतिसर्पवेष्टितः हैमैश्चयुतोविभूषणैश्चिपिटास्योत्यगतश्चकर्कटे १२
शाल्मलेरुपरिगृध्रजंबुकौश्वानरश्चमलिनांबरान्वितः रौतिमातृपितृविप्रयोजित सिंहरूपमिदमाद्य
मुच्यते १३ हयाकृति पाडुरमाल्यशेखरोबिभर्तिकृष्णाजिनकंबलनर दुरासद सिंहइवात्तका
र्मुकोनताग्रनासोमृगराजमध्यमः १४ ष्काणइत्यर्थः एषनरद्रेष्काणश्चतुष्पदद्रेष्काणः स्वगद्रेष्काणोर्कसक्तश्च १३

अथसिंहद्वितीयस्यस्वरूपंवंशस्थेनाह हयाकृतिरिति हयाकृतिः अश्वाकारः पांडुरपीतश्वेतरूपयुक्त माल्यपुष्पनिचय शेखरेशिरसियस्यकृष्णा
जिनकृष्णमृगचर्मकंबलमौर्णिकंबिभर्तिधारयति केचित्कृष्णाजिनचीवरमितिपठंति चीवरजीर्णवासः नरोमनुष्योदुरासदः दुर्जेयः दुःसाध्यः सिंह इ
व आत्तकार्मुकः गृहीतचाप नतघ्रनासः [illegible]

एषनरद्रेष्काणः सायुधोजीवसक्तश्च १४ अथसिंहतृतीयस्यस्वरूपमुपजातिकयाह ऋक्षाननइति ऋक्षःप्राणीऋक्षाननः ऋक्षसदृशवक्त्रः
वानरतुल्यचेष्टः वानरेणकपिनातुल्यासदृशाचेष्टास्वभावोयस्य दंडआयुधं फलंआम्रादि आमिषंमांसंचबिभर्त्तिधारयति कूर्चीदीर्घश्मश्रुः
मनुष्यः पुरुषः कुटिलैः केशैर्मूर्द्धजैर्युक्तः मृगेश्वरस्यसिंहस्यांत्यगस्त्रिभागः एषनरद्रेष्काणः चतुष्पदद्रेष्काणः सायुधोभौमसक्तश्च १५ अथक
न्यापूर्वस्यस्वरूपमुपजातिकयाह पुष्पप्रपूर्णेनेति कन्याकुमारीपुष्पप्रपूर्णेनकुसुमपरिपूरितेनकुंभेनउपलक्षितामलप्रदिग्धैरतिमलोपेतैः अंब

ऋक्षाननोवानरतुल्यचेष्टोबिभर्तिदंडंफलमामिषंच कूर्चीमनुष्यःकुटिलैश्चकेशैर्मृगेश्वरस्यांत्यगत
स्त्रिभागः १५ पुष्पप्रपूर्णेनघटेनकन्यामलप्रदिग्धांबरसंवृतांगी वस्त्रार्थसंयोगमभीष्टमानागुरोः
कुलंवांछतिकन्यकाद्यः १६ पुरुषःप्रगृहीतलेखनिःश्यामोवस्त्रशिराव्ययायकृत् विपुलंचबिभर्त्ति
कार्मुकंरोमव्याप्ततनुश्चमध्यमः १७ रैर्वस्त्रैः संवृतांगी संवृतावयवा वस्त्राण्यंबराणि अर्थोधनं एषांसंयोगमभीष्ट

मानावांछमानागुरोः कुलंव्रजतिगच्छति कन्यकाद्यःप्रथमद्रेष्काणः एषस्त्रीद्रेष्काणोबुधसक्तश्च १६ अथकन्याद्वितीयस्यस्वरूपंवैताली
येनाह पुरुषोनरः प्रगृहीतलेखनिःयेनाक्षराणिलिख्यंते सालेखनिःश्यामःश्यामवर्णःवस्त्रशिराः कर्पटसंयमितमूर्द्धा केचिद्रूक्षशिराइतिप
ठति संयमितशिराः व्ययंव्ययकृत् आयंप्रवेशंचकरोति गणयतिविपुलंविस्तीर्णंकार्मुकंधनुर्बिभर्त्तिधारयति रोमव्याप्ततनुः रोमशशरीरः ए
षमध्यमोद्वितीयद्रेष्काणः एषनरद्रेष्काणःसायुधः सौरसक्तश्च १७ ७ ७ ७ ७

अथकन्यातृतीयस्थानमुपजातिकयाह गोरीगौरवर्णा कधौताग्राणियस्मिन् दुकूलेपटविशेषेतेनगुप्ताछादिता केचित्तुदुकूलहस्ताइतिपठति समुच्छ्रिताअत्यर्चा कुमाघटः करच्छुर्दर्वीमसिद्धा गृहोपयोगिकलोहभांडतत्करेहस्ते यस्याःदेवालयकरगृहस्त्रीयुवतिः प्रयतासमाहिताप्रवृत्ता गतुंपृथतावदति कथयतिमुनयः कन्यास्य गतस्त्रिभाग तृतीयद्रेष्काणःएषस्त्रीद्रेष्काणःशुक्रसत्कम्म १८ अथतुलायस्वरूपवसततिलकेनाह वीथ्यतरेति वीथ्यतरेमार्गमध्येयत्तदापण हट्टतत्रगतः समवस्थित पुरुषोनरस्तुलावान् तुलाहस्तःविद्यमानतुल उन्मानेऊर्ध्वमानेतुलादिकेमाने

गोरीकधौताग्रदुकूलगुप्तासमुच्छ्रिताकुंभकरच्छहस्ता देवालयस्त्रीप्रयताप्रवृत्तावदति कन्यात्यगतस्त्रिभागः१८ वीथ्यतरा
पणगतःपुरुषस्तुलावानुन्मानमानकुशल प्रतिमानहस्त भांडविचितयतितस्यचमूल्यमेतद्रूपवदतियवना प्रथमतुलाया १९
कलशपरिगृह्यविनिःपतितुसमभीप्सतिगृध्रमुखःपुरुषः क्षुधितस्तृषितश्चकलत्रसुतान्मनसैतितुलाधरमध्यगतः २०

मानशब्देनकुडवादेस्तस्मिन्कुशलः तज्ञः प्रतिमानयेनद्रव्याणिकवर्णरत्नानि परिछिद्यतेतेतुहस्तेयस्य भांडक्रयद्रव्यतद्दीयतेयस्यविचित यतिध्यायति तस्यभांडस्यैतन्मूल्यमिति तस्यचभांडस्यचमूल्यविचितमति एतद्यवनास्तुलायाः प्रथमद्रेष्काणस्यरूपवदतिकथयति एषनर द्रेष्काणःशुक्रसत्कम्म १९ अथतुलाद्वितीयस्यस्वरूपंत्रोटकेनाह कलशमिति गृध्रःपक्षीगृध्रमुखोगृध्राननःपुरुषःकलशंकुंभगृहीत्वा विनिःपति तुनिर्विशेषपतितुमभीप्सति वाछति यतःक्षुधितोबुभुक्षितःतृषितःपिपासितोत कलत्रभार्यासुतान्पुत्रान् मनसाचित्तेनैतिगच्छति अभीप्सति [illegible]मिन्पतितस्यरसीत्यर्थः ईदृग्येवप्रकारः तुलाधरमध्यगतः तुलाद्वितीयद्रेष्काणःएषनरद्रेष्काण सर्पद्रेष्काणः शनैश्चरसत्कम्म २०

अथतुलातृतीयस्यस्वरूपंवंशस्थेनाह विभीषयन्निति रत्नचित्रितोमणिभिर्विभूषितः वनेरण्येमृगान्हरिणान्विभीषयन् भीषांकुर्वन्तिष्ठति कीदृ-
शः कांचनंसौवर्णंतूणंशराधानंवर्मसन्नाहं तेचबिभर्त्तिधारयति फलान्यामिषंचमांसंबिभर्त्तिनरोमनुष्योवानररूपभृत् वानरस्यकपेरिवरूपंबि
भर्त्तिधारयति फलान्याम्रादीनिकेचिद्धनुर्धरः किन्नररूपभृन्नरः इतिपठंति धनुर्धरःचापहस्तःकिन्नरोदेवयोनिरश्वमुखः पुरुषः तुलावसानेतु-
लस्यतृतीयद्रेष्काणेयवनैः पुराणयवनैरुदाहृतःकथितः नरोमनुष्योवानराकारोऽयंचतुष्पदद्रेष्काणोबुधसत्कश्च २१ अथवृश्चिकप्रथमस्य-

विभीषयन्तिष्ठतिरत्नचित्रितोवनेमृगान्कांचनतूर्णवर्मभृत् फलामिषंवानररूपभृन्नरस्तुलावसानेयवनैरुदाहृतः २१
वस्त्रैर्विहीनाभरणैश्चनारीमहासमुद्रात्समुपैतिकूलं स्थानच्युतासर्पनिबद्धपादामनोरमावृश्चिकराशिपूर्वः २२
स्थानसुखान्यभिवांछतिनारीभर्तृकृतेभुजगावृतदेहा कच्छपकुंभसमानशरीरावृश्चिकमध्यमरूपमुशंति २३

स्वरूपमुपजातिकयाह वस्त्रैरिति नारीस्त्रीवस्त्रैरंबरैस्तथाभरणैरलंकरणैश्चविहीनावर्जिता महासमुद्रान्महासागरात् कूलंसमुपैत्यागच्छति
स्थानच्युतास्वस्थानात् भ्रष्टासर्पनिबद्धपादाभुजगनियमितचरणामनोरमाचित्तानंदविधायिनी चित्ताल्हादकरीवृश्चिकराशेःपूर्वः प्रथमद्रे
ष्काणः एषस्त्रीद्रेष्काणोव्यालद्रेष्काणोभौमसत्कश्च २२ अथवृश्चिकद्वितीयस्यस्वरूपंदोधकेनाह स्थानेति नारीस्त्रीस्थानसुखानिअभिवांछ
ति भर्तृकृतेपतिनिमित्तं भुजगावृतदेहासर्पव्याप्तशरीरा कच्छपःकूर्मःकुंभोघटः तत्समानशरीरातत्तुल्यदेहा वृश्चिकेमध्यमरूपंद्वितीयंद्रेष्काणमुशंतिक

ययति व्यस्त्रीद्रेष्काणोव्यालद्रेष्काणःजीवसत्त्वम् २३ अथवृश्चिकतृतीयस्वरूपज्ञानमुपिताग्रयाह पृथुलचिपिटमिति पृथुलविस्तीर्णचिपिटकर्परं कूर्मतु
ल्यकच्छपसदृशवक्त्रमुखंयस्य श्वासारमेयः मृगोहरिणः शृगालःक्रोडवराहःसूकरः एषांभीमकारीभयकारी मलयस्यचंदनस्याकरस्यप्रदेशमुत्पत्तिस्थ
नमवतिरक्षतिसन्मृगपतिःसिंहः अत्यगतोवृश्चिकस्यतृतीयद्रेष्काणः एषःकूर्माननःसिंहद्रेष्काणःचतुष्पदद्रेष्काणःचक्रसत्त्वम् २४ अथधन्विपूर्वस्यस्वरूप
ज्ञानमिदंचाथाह मनुष्यवादिति मनुष्यवक्त्रोनरवदनः अश्वसमानकायःतुरगसदृशदेहःआयतदीर्घं धनुश्चापगृहीत्वा आश्रमस्थःतत्राश्रमेतिष्ठति क्रतूप-

पृथुलचिपिटकूर्मतुल्यवक्त्रःश्वमृगशूकरशृगालभीयकारी अवतिचमलयाकरप्रदेशंमृगपतिरत्यगतस्यवृश्चिकस्य २४ मनुष्यव
क्त्रोऽश्वसमानकायोधनुर्विगृह्यायतमाश्रमस्थः क्रतूपयोज्यानितपस्विनश्चरक्षतिपूर्वो धनुषस्त्रिभागः २५ मनोरमाचंपकहेम
वर्णाभद्रासनेतिष्ठतिमध्यरूपा समुद्ररत्नानिविघट्टयंतीमध्यत्रिभागोधनुषःप्रदिष्टः २६

स्रुक्स्रुवादीनि तपस्विनःतापसान्रक्षति अवतिरक्षितवान् आद्यःप्रथमोधनुषस्त्रिभागोधन्विद्रेष्काणः केचित्चरक्षपूर्वेतिपठंति धनुषःपूर्वस्त्रि योग्यानि यज्ञोपकरणादीनियज्ञभाण्डानि
भागःप्रथमद्रेष्काणः एषोऽश्वसमानकायःनरद्रेष्काणःचतुष्पात्सायुधद्रेष्काणःजीवसत्त्वम् २५ अथधन्विद्वितीयस्यस्वरूपज्ञानमुपजातिकयाह
मनोरमेति मनोरमाचित्तानन्दकारिणी चंपकपुष्पविशेषःहेमस्वर्णं तत्सदृशावर्णा तत्समकांतिः भद्रासनेआसनविशेषेतिष्ठति तत्रउपविष्टा मध्यम-
रूपा नचातिशोभना नात्यत्यशोभनासमुद्ररत्नानि सागरमणीन् विघट्टयंतीस्त्रीतिष्ठति धनुषोमध्यत्रिभागोद्वितीयद्रेष्काणोमणिभिः परिपूर्णा

एषस्त्रीद्रेष्काणोभौमसक्तश्च २६ अथधन्वितृतीयस्यस्वरूपमुपजातिकयाह कूर्चीनरइति नरोमनुष्यः कूर्चीदीर्घश्मश्रुः हाटकंसुवर्णंचंपकः पुष्पविशेषः तदाभोतत्सदृशकांतिः तत्समानद्युतिः वरासनेप्रधानासनेनिषण्णः उपविष्टः दंडधरोदंडहस्तः कौशेयकानिपट्टविशेषाणि उद्वहतेधारयति अजिनंमृगचर्म नवमस्यराशेर्धनुषः तृतीयद्रेष्काणस्यस्वरूपंएषनरद्रेष्काणः सायुधः अर्कसक्तश्च २७ अथमकरप्रथमस्यस्वरूपंदोधकेनाह रोमेति रोमचितोरोमशः मकरोपमदंष्ट्रः मकरतुल्यदंष्ट्रः मकरोजलचरप्राणी सूकरस्यवराहस्य कायोदेहः तत्समानशरीरः तत्तुल्यतनुः योक्त्रकंयेनबलीवर्दायोज्यते जालकःप्रसिद्धः येनपक्षिणोबध्यंते बंधनंनिगडादि एतानिधारयति तच्छीलः रौद्रमुखोवक्रिताननः मकरप्रथमः प्रथमद्रेष्काणःएषःपुरु

कूर्चीनरोहाटकचंपकाभोवरासनेदंडधरोनिषण्णः कौशेयकान्युद्वहतेजिनंचतृतीयरूपंनवमस्यराशेः २७ रोमचितो
मकरोपमदंष्ट्रःसूकरकायसमानशरीरः योक्त्रकजालकबंधनधारीरौद्रमुखोमकरप्रथमस्तु २८ कलास्वभिज्ञा-
ब्जदलायताक्षीश्यामाविचित्राणिचमार्गमाणा विभूषणालंकृतलोहकर्णायोषाप्रदिष्टामकरस्यमध्ये २९

षद्रेष्काणः बंधनधारित्वात्सनिगडः सूकरसमानशरीरः नसूकरः तस्मान्नचतुष्पात् शनैश्चरसक्तश्च २८ अथमकरद्वितीयस्यस्वरूपमुपजातिकयाह कलास्वभिज्ञाब्जदलायताक्षीति कलास्वभिज्ञाआभिमुख्येनजानाति अब्जदलायताक्षी अब्जदलपद्मपत्रतद्वदायतेदीर्घेअक्षिणीयस्याः सादीर्घनेत्राचश्यामाश्यामवर्णाविचित्राणिनानाप्रकाराणिवस्तूनिच मार्गमाणा अभीप्समानाविभूषणैरलंकरणैरलंकृता लोहकर्णालोहयुक्तश्रोत्रा लोहाभरणंकर्णयोर्यस्याः सायोषास्त्रीमकरस्यमध्येद्वितीयद्रेष्काणेप्रदिष्टाउक्ता एषःस्त्रीद्रेष्काणः शक्रसक्तश्च २९ ७

अथमकरतृतीयस्यस्वरूपरयोद्रुतयाह किन्नरोपमेति किन्नरोपमतनुः किन्नरादेवयोनयः अश्वमुखाः पुरुषास्तत्सदृशीतनुः सकवलः कवलेनसहिता तूण शराधारश्चापधनुः कवच सन्नाहः एतैस्तूणचापकवचैः शराधारधनुःसन्नाहैः समन्वितोयुक्तः कुंभघटरत्नचित्रितमणिविरचितस्कंधगअंसास्कंधउद्वहति धारयति मकरराशेः पश्चिमस्तृतीयद्रेष्काणएषः पुरुषद्रेष्काणः सायुधःचतुष्पसत्तम २० अथकुंभप्रथमद्रेष्काणस्यस्वरूपबोधकेनाह स्नेहमद्यजलभोजनेति स्नेहस्तैलादि मद्यपानविशेष जलमुदकभोजनमशन एतेषामागमः तेनव्याकुलितमनः चित्तयस्यसकवलः कवलसहितः

किन्नरोपमतनु सकवलस्तूणचापकवचैःसमन्वितः कुंभमुद्वहतिरत्नचित्रितस्कंधगमकरराशिपश्चिमः ३०
स्नेहमद्यजलभोजनागमव्याकुलीकृतमना सकवलः कोशकारवसनोऽजिनान्वितोगृध्रतुल्यवदनोघटादिम ३१
दग्धेशकटेसशाल्मलेलोहान्याहरतेंगनावने मलिनेनपटेनसंवृताभांडैर्मूर्धिगतैश्चमध्यमः ३२

कोशाकारवसनः पट्टवासा अजिनान्वितः कृष्णमृगचर्मयुक्तः गृध्रपक्षीतत्तुल्यवदनः तत्समवक्त्रः घटादिगः कुंभप्रथमद्रेष्काणः एषनरद्रेष्काणः सौरसत्तम ३१ अथकुंभद्वितीयस्वरूपवेत्ताउपेनाह दग्धेशकटेइति शकटेगन्त्र्यां दग्धेअग्निनाभस्मीकृतेसशाल्मलेशाल्मलवृक्षसहितेअंगनास्त्रीलोहान्याहरतेगृह्णाति वनेअरण्येमलिनेनपट्टेनसमलेनवाससासंवृताआच्छादिताभांडैः भाण्डप्रकारैः मूर्धिगतैः मस्तकारोपितैः उपलक्षिता केनिद्राजेरागोपिता परिपूर्णइतिपठंति मध्यमोद्वितीयद्रेष्काणः स्त्रीद्रेष्काणः साग्निश्चतुष्पसत्तम ३२

अथकुंभ तृतीयस्यस्वरूपज्ञानमिंद्रवज्रयाह श्यामइति श्यामः श्यामवर्णः सरोमश्रवणः लोमशकर्णः किरीटीमौलियुक्तः त्वक्चर्मपत्रंपर्णं निर्या-
सोवृक्षनिर्यासः यथागुग्गुलुः स्नेहः फलंचस्फप्रसिद्धमेवाम्रादि एतैःसहभांडानिलोहव्यतिमिश्रितानि लोहसंयुक्तानिबिभर्तिधारयति तानि-
चसंचारयति स्थानात् स्थानांतरंनयति घटस्यकुंभस्यांतगतः तृतीयद्रेष्काणः एषनरद्रेष्काणः शक्रसक्तश्च ३३ अथमीनाद्यस्यस्वरूपमिंद्रवज्र
याह स्रुग्भांडेति स्रुग्भांडानि यज्ञोपकरणभांडानि मुक्तामौक्तिकं मणयः प्रसिद्धाः शंखः प्रसिद्धएव एतैर्मिश्रैरेकीकृतैः व्याक्षिप्तोहस्तोयस्य

श्यामःसरोमश्रवणःकिरीटीत्वक्पत्रनिर्यासफलैर्बिभर्ति भांडानिलोहव्यतिमिश्रितानिसंचारयत्यंत्यग
तोघटस्य ३३ स्रुग्भांडमुक्तामणिशंखमिश्रैर्व्याक्षिप्तहस्तःसविभूषणश्च भार्याविभूषार्थमपांनिधानं
नावाप्लवत्यादिगतोझषस्य ३४ अत्युच्छ्रितध्वजपताकमुपैतिपोतंकूलंप्रयातिजलधेःपरिवारयुक्ता व
र्णेनचंपकमुखाप्रमदात्रिभागोमीनस्यचैषकथितोमुनिभिर्द्वितीयः ३५

आकुलकरः सविभूषणः साभरणःभार्या
जाया तद्विभूषणार्थमलंकरणार्थमपांनिधानंसमुद्रंनावाप्लवति नौस्थोगच्छति केचिन्महार्णवंचनावाप्लवतीतिपठंति झषस्यमीनस्यादिगतःप्र
थमद्रेष्काणः एषनरद्रेष्काणोजीवसक्तश्च ३४ अथमीनद्वितीयस्यस्वरूपज्ञानंवसंततिलकेनाह अत्युच्छ्रितेति अत्युच्छ्रिता अतीवोच्चाध्व-
जाःपताकायस्मिन्पोतेतमुपैति आरोहति जलधेःसमुद्रस्यकूलंतटंप्रयाति प्रमदास्त्रीकीदृशीपरिवारयुक्तासखीजनेनावृता चंपकंपुष्पविशेषः
चंपककांतिः मुखवर्णेनचंपककांतिमुष्णाति अपहरति एषः मीनस्यद्वितीयत्रिभागोमुनिभिर्गदितउक्तःएषःस्त्रीद्रेष्काणोचंद्रसक्तश्च ३५

अथशेषाध्यायसंग्रहंशालिन्याह कर्माजीवइति कर्माजीवोदशमः १० राजयोगाऽध्यायएकादशः ११ स्वयोगा नाभसयोगाध्यायोद्वादशः १२ चांद्रयो
गाः सुनफाधाश्चंद्रयोगाध्यायस्त्रयोदश १३ द्विग्रहत्रिग्रहयोगाध्यायश्चतुर्दशः १४ प्रव्रज्यायोगाध्यायः पंचदशः १५ अथोनंतरंराशिशीलाऽध्यायः
षोडश १६ दृष्टिफलाध्यायःसप्तदशः १७ तस्मात्परोभावाध्यायोऽष्टादशः १८ अयातःपरमाश्रयाध्यायएकोनविंशतितमः १९ प्रकीर्णाध्यायो-
विंशतिः २० । २ अथशेषाध्यायसंग्रहंशालिन्याह अनिष्टयोगाइति अनिष्टयोगाऽध्यायएकविंशतिः २१ कामिनीनांस्त्रीणांजातकाध्यायो-
द्वाविंशतिः २२ निर्याणंमरणज्ञानाध्यायस्त्रयोविंशतिः २३ नष्टजातकाऽध्यायश्चतुर्विंशतिः २४ द्रेष्काणस्वरूपाध्यायः पंचविंशतिः २५ एवंपं-

कर्माजीवोराजयोगाःस्वयोगाश्चांद्रायोगाद्विग्रहाद्याश्चयोगाः प्रव्रज्याथोराशिशीलानिदृष्टिर्भावस्तस्मादाश्रयोथप्रकीर्णः २ नेष्टा
योगाजातकंकामिनीनांनिर्याणंस्यान्नष्टजन्मदृकाणः अध्यायानांविंशतिःपंचयुक्ताजन्मन्येतद्यात्रिकंचाभिधास्ये ३ प्रश्ना
स्तिथिर्भंदिवसःक्षणाश्चचंद्रोविलग्नंनवधलग्नभेदः शुद्धिर्ग्रहाणामथचापवादोविमिश्रकाख्यंतनुवेपनंच ४

चयुक्ताध्यायानांविंशतिः जन्मनिजातकेउक्ताकथितोक्ताएतज्जातके ३ एवमिदानींयात्रिकेयात्रायांनिबद्धमध्यायसंग्रहमभिधास्येकथयिष्ये
तत्रोपजातिकयाह प्रश्नास्तिथिरिति प्रश्नाःप्रश्नप्रभेदाध्यायः तिथिस्तिथिबलाध्यायः भनक्षत्राभिधानं दिवसोदिवसाभिधानं वारफललक्षण
म् क्षणोमुहूर्त्तनिर्देशः चंद्रश्चंद्रबलाध्यायः लग्नंचलग्नविनिश्चयः अथानंतरंलग्नभेदोहोराद्रेष्काणनवांशकद्वादशभागत्रिंशद्भागानांलक्षणं
सफलंग्रहाणांशुद्धिःसफला समस्तग्रहाणांकुंडलिकाफलं अथानंतरं अपवादाध्यायःविमिश्रकाख्यंमिश्रकाध्यायः तनुवेपनंदेहास्पंदनं ४

शेषाध्यायस्य कीर्तनमुपजातिकयाह अतःपरमिति अतोऽस्मात्परं गुह्यकपूजनस्याध्यायो भवेत् स्वमस्वभाध्यायः ततोऽनन्तरं स्नानविधिः प्रदिष्ट उक्तः यज्ञ
णा यज्ञो ग्रहयज्ञः अथानन्तरं निर्गमः प्रस्थानिकं क्रमात्परिपाट्यादिष्ट उक्तः शकुनोपदेशः शकुनरुतज्ञानं एष यात्रायाः संग्रह ५ अथ शेषवस्तुसंग्रह
मुपजातिकयाह विवाहकाल इति विवाहकालो विवाहपटलं ग्रहाणां करणं पञ्चसिद्धान्तिकायां प्रोक्तं कथितं पृथग्विभज्यता हि पुला तस्य करणस्य शा
भावाः भक्तानाय विपुला विस्तीर्णा शाखा कथिता त्रिभिः स्कन्धैर्गणितहोरासंहिताख्यै रयं ज्योतिः शास्त्रसंग्रहो मया वराहमिहिराचार्येण देववि

अत परं गुह्यकपूजनस्यात्स्वमततः स्नानविधिः प्रदिष्टः यज्ञो ग्रहाणामथ निर्गमश्च क्रमाच्च दिष्टः शकुनोपदेशः ५ विवाहकालः कर
णं ग्रहाणां प्रोक्तं पृथक्तद्धि पुला च शाखा स्कन्धैस्त्रिभिर्ज्योतिषसंग्रहोऽयं मया कृतो देवविदां हिताय ६ पृथुविरचितमन्यैः शास्त्रमे
तत्समस्तं तदनु लघु मयेदं तत्प्रदेशार्थमेव कृतमिह हि समर्थं धीविषाणामलत्वे मम यदिह यदुक्तं सज्जनैः क्षम्यतां तत् ७

दा सांवत्सरिकाणां हिताय हितार्थं कृतो विरचितः विस्तीर्णशास्त्राण्यालोच्य संक्षेपतो मया कृतः ६ एतन्मालिन्याह पृथुविरचितमन्यैरिति ए
तत्समस्तं सकलं शास्त्रमन्यैराचार्यैर्यवनेश्वरादिभिः पृथु विस्तीर्णं विरचितं कथितं तदनु तदेव शोभनतरं मया तत्प्रदेशार्थं तदुपरिस्थार्थं लघुस्व
ल्पं कृतं तत्प्रदेशोऽपि योऽर्थः सोऽस्मिन् तात्पर्यार्थः हि यस्मादर्थ इह अस्मिन् शास्त्रे कृतं धीविषाणामलत्वे बुद्धिशृङ्गनिर्मलीकरणविषये समर्थं युक्तं म
त्तः कृतमयं चेह संग्रहे यदुक्तमशोभनमुक्तं कथितं तत्सज्जनैः पण्डितैर्मम क्षम्यतां क्षन्तव्यमित्यर्थः ७ २ ५

अथकालविशेषेणकुकृताल्पकृतयोश्चपुनः करणेसतांप्रार्थनायवसंततिलकेनाह ग्रंथस्येति अस्यग्रंथस्ययत्नचरतोविवरणमानस्ययद्विनाशमेति या तिलेख्याल्लेखकदोषात् तत्बहुश्रुतमुखाधिगमक्रमेण बहुश्रुतानांपंडितानांमुखादधिगम्यज्ञात्वाक्रमेणपरिपाट्या विदुषापंडितेन रागंमात्सर्यमपह त्यविहायकर्तव्यं तेचशास्त्रार्थापेक्षयासंस्कारेणसमर्था यद्वा मयाकुकृतंकुत्सितंकृतम् तथाल्पमपरिपूर्णंतद्विचार्यविचारेणकर्तव्यमित्यर्थः ८ तत्रादित्यदासाख्यस्यपितुर्नामकापित्थाख्येग्रामेवरदनामादित्यदासाच्चविज्ञानागमंस्वनिवासमुज्जयिनींचनामहोराशास्त्रनामचवसंततिलकेनाह

ग्रंथस्ययत्नचरतोस्यविनाशमेतिलेख्याद्बहुश्रुतमुखाधिगमक्रमेण यद्वामयाकुकृतमल्पमिहाकृतंवा
कार्यंतदत्रविदुषापरिहृत्यरागम् ८ आदित्यदासतनयस्तदवाप्तबोधःकापित्थकेसवितृलब्धवरप्र
सादः आवंतिकोमुनिमतान्यवलोक्यसम्यग्घोरांवराहमिहिरोरुचिरांचकार ९

आदित्यदासेति आदित्यदासाख्योब्राह्मणः तस्यतनयःपुत्रः तस्मादेवपितुरादित्यदासादवाप्तः बोधःज्ञानंयेन कापित्थाख्येग्रामेयोसौभगवान्सवि- तासूर्यस्तस्माल्लब्धःप्राप्तोवरःप्रसादोयेन आवंतकःआवंतकेदेशेउज्जयिन्यांवास्तव्यः कोसौवराहमिहिरः अयंमुनिमतानिऋषिप्रणीतानिशास्त्रा ण्यवलोक्यविचार्यसम्यग्यथावस्तुकृत्वाहोरांजातकशास्त्रंरुचिरांशोभनांसुगमांचकारकृतवानिति ९ ७ ७ ७

॥ इतिवृहज्जातकस्टीकसमास ॥